चित्तावस्था वेदना स्यात् सुखदुःखादिलक्षणा ।
शब्दसंसर्गयोग्यार्थभासः संज्ञेति कीर्त्यते ॥
रागद्वेषादिसंतानः संस्कारस्कन्धसंज्ञितः ।
रूपस्कन्धः सविषयाणीन्द्रियाण्युच्यते बुधैः ॥

8 द्विप्रतीत्यसमुत्पादे द्विधस्समुदयो मतः ।
बीजादङ्कुरपत्रादिफलपर्यन्तसन्ततौ ॥
नास्ति कस्यापि चैतन्यं नान्यो वाऽत्राधितिष्ठति ।
कार्यकारणभावस्य नियमो न न दृश्यते ॥
एष प्रतीत्योत्पादे स्याद्बाह्ये हेतुनिबन्धनः ।
अत्रैवायं प्रत्ययोपनिबन्धोऽप्यवगम्यताम् ॥
अङ्कुरो जायते बीजात् षड्धातुसमवायतः ।
ऋतुश्च पञ्च भूतानि षड्धातव इति स्मृताः ॥
संगृह्णाति क्षितिर्बीजं अङ्कुरः कठिनस्ततः ।
जलधातुः स्नेहयति तेजो बीजं पचेदपि ॥
वायुधातुर्निर्हरति निर्गच्छति ततोऽङ्कुरः ।
आकाशधातुर्बीजस्य त्वनावरणकृत्यकृत् ॥
ऋतुधातोः परिणामः प्रसिद्धोऽङ्कुरबीजयोः ।
नातिरिक्तश्चेतनोऽत्र यः स्यात्कारकचक्रगः ॥

9 एवमाध्यात्मिकेऽप्यूह्यः यस्स्याद्धेतुनिबन्धनः ।
अविद्यया हि संस्काराः रागद्वेषादिलक्षणाः ॥

जायते तैर्हि विज्ञानं नामरूपं ततो भवेत् ।
स्यात् षडायतनं तस्मात् स्पर्शस्तस्माद्भवेदपि ॥
ततश्च वेदनातृष्णाभवजातिजरादयः ।
स्पष्टा रागादयस्तेभ्यः चित्ताभिज्वलनात्मकम् ॥
विज्ञानं तच्च गर्भस्थे चित्ते विषयसंजनम् ।
चित्तचैत्तात्मकं नामरूपं, आयतनं पुनः ॥
षडिन्द्रियाणि देहस्तु स्पर्शशब्देन कीर्त्यते ।
स्पष्टे हि वेदनातृष्णे धर्मोऽधर्मो भवो मतः ॥
स्कन्धप्रादुर्भवो जातिः प्रसिद्धा हि जरादयः ।
तथाऽत्रैव प्रत्ययोपनिबन्धोऽप्यवगम्यताम् ॥
क्षित्यप्तेजोवायुनभोविज्ञानसमवायतः ।
कायस्य तत्र काठिन्यं पृथिवीधातुलक्षणम् ॥
अब्धातुस्तं स्नेहयति तेजोधातुः तनुस्थितम् ।
पीताशितं पाचयति वायुः श्वासयति त्वमुम् ॥
आकाशोऽन्तस्सुषिरकृत् विज्ञानं पुनरारभेत् ।
नामरूपाङ्कुरं तेन धातवस्सकला इमे ॥
उत्पादयन्ति सकलं कायं नात्रापि चेतनः ।
सोऽयं विज्ञानधातुर्यत्सकार्यं सास्रवं मनः ॥
आलम्बनं चाधिपतिः समनन्तर एव च ।
सहकारीति चत्वारः प्रत्ययाः ज्ञानहेतवः ॥

प्रत्ययांश्चतुरस्त्वेतान् प्रत्येत्योत्पत्तियोगतः ।
शब्दाद्या बाह्यविषयाः सुखाद्या आन्तरा मताः ॥
तत्र नीलालम्बनतः चित्तं स्यान्नीललक्षणम् ।
चक्षुराद्याधिपत्येन प्रतिरूपव्यवस्थितिः ॥
अनन्तरप्रत्ययेन बोधरूपत्वमश्नुते ।
आलोकादिकसाहाय्यादन्धकारादिसंक्षयः ॥
अर्थसत्ताविवादेऽपि प्रक्रियेयं समा मता ।
चतुर्णामपि वै मन्दमध्यमोत्तमयायिनाम् ॥
यस्मिन् सति समुत्पादो यस्य तत्तस्य कारणम् ।
इत्याहुस्सौगताः यस्मिन् सत्येवेतीतरे विदुः ॥
कारणं द्विविधं हेतुः प्रत्ययश्चेति निश्चितम् ।
प्रधानकारणं हेतुः प्रत्ययास्सहकारिणः ॥
तृतीयमिति यत्प्राहुर्निमित्तं न्यायवादिनः ।
तद्बुद्धिमदधिष्ठानं तदेवैतैर्निषिध्यते ॥
10 यद्यपि क्षणिका भावाः कार्यकारणलक्षणाः ।
तथाप्यविद्याशक्त्यैव तत्सर्वमुपपद्यते ॥
सैषाऽविद्या स्थायिजातिसुखवस्तुत्वबुद्धयः ।
विशेषे क्षणिके दुःखे शून्येऽप्यर्थे स्वभावतः ॥
भवन्ति रागद्वेषाद्याः ताभिस्संस्कारलक्षणाः ।
ते सूक्ष्मं चित्तसंतानं मातृकुक्षिं नयन्ति तम् ॥

स नीयते निराधारश्चापि देशान्तरं स्वयम् ।
ज्वालाबुद्बुदवद्वृत्तिरन्तरालेऽस्य सम्मता ॥
प्रतिक्षणं जायते यो दीपसंतानवत्सदा ।
स ग्राहकाभिमानेनारूढ आत्मेति कीर्त्यते ॥
गर्भं गतस्ततस्सोऽयं विज्ञानत्वं समश्नुते ।
चित्ताभिज्वलनं नाम, संसर्गो विषयैरसौ ॥
उत्तरोत्तरविज्ञानं स्थूलं चित्तमितीर्यते ।
सह तेनोत्पत्तिनाशभाजश्चैत्ता उदाहृताः ॥
स्पर्शश्च वेदना संज्ञा चेतना च वितर्कणा ।
विचारः प्रीतिरैकाग्र्यं श्रद्धा वीर्यं स्मृतिस्तथा ॥
प्रज्ञादयश्च धर्मा ये कुशलाकुशलात्मकाः ।
त एते चित्तचैत्तास्स्युः ये नामाख्या इतीरिताः ॥
ततः पृथिव्यादिरूपिद्रव्यं तत्पुञ्जलक्षणम् ।
ततस्त्विन्द्रियषट्कं स्यात् षडायतनसंज्ञितम् ॥
ततः स्पर्शाभिधः कायः ततः स्युः वेदना स्पृहा ।
उपादानं भवो जातिः जरा मरणमेव च ॥
शोकश्च परिवेदश्च दुःखं दौर्मनसं तथा ।
मदमानादयश्चोपक्लेशाः प्रादुर्भवन्त्यपि ॥
स्पृहा वाक्कायचेष्टा स्यात् धर्माधर्मौ भवो मतः ।
शुभाशुभा वासना सा चित्तसन्तानवर्तिनी ॥

तस्मादेतैर्मता चित्तवासना कर्मशब्दिता ।
स्कन्धप्रादुर्भवो जातिः अविद्यादिस्ततः पुनः ॥
अनादि चक्रमेतत्स्यात् संततं परिवर्तते ।
विच्छेदस्तस्य कर्तव्यः कुशलैरिह विद्यया ॥
प्राक्प्रतीत्यसमुत्पादे स्कन्धोत्पत्तिर्निरूपिता ।
प्रत्ययोत्पत्तिरपि च सैषा सौगतपद्धतिः ॥
सर्वं विवर्तं शून्यस्य मध्यमागमसम्मतम् ।
ज्ञानस्यैवायमाकारः योगाचारमतेऽखिलम् ॥
सौत्रान्तिकैरनुमितं बाह्यं क्षणिकमिष्यते ।
वैभाषिकमते बाह्यं प्रत्यक्षं क्षणभङ्गुरम् ॥

11 सर्वे स्वयंप्रकाशं तं ज्ञानमात्मानमभ्यधुः ।
स्वयंप्रकाशहीनस्य बाह्यस्योपासनं मतम् ॥
ज्ञानान्तरेणानुभवोऽनिष्टः तत्रापि च स्मृतेः ।
विषयान्तरसंचारः तथा न स्यात्स चेष्यते ॥
नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥

12 न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
यथायथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथातथा ॥

रजतं न मया दृष्टमित्येवमुपलम्भनम् ।
निषेधविषयं स्वप्ने जागरे चानुभूयते ॥
द्रष्टृदर्शनसंसर्गाध्यासाधिष्ठानलक्षणे ।
समूहे कस्य वाऽसत्त्वं कस्य सत्त्वं विविच्यते ॥
अविशेषेण सर्वस्य निषेधोऽत्र विनिश्चितः ।
न चार्धजरतीयं चोचितं प्रेक्षावतां यथा ॥
न ह्येकभागः कुक्कुट्याः पाकाय प्रविभज्यताम् ।
प्रसवायापरो भागः कल्प्यतामिति कल्पते ॥
बुद्ध्या विविच्यमानायां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः ॥
यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्षते ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥
पूर्वोपलम्भोपशमः प्रपञ्चोपशमाच्छिवः ।
न क्वचित्कस्यचित्कश्चित् धर्मो बुद्धेन देशितः ॥
यो हेतुप्रत्ययापेक्षो भावोत्पादश्च कीर्त्यते ।
स प्रतीत्यसमुत्पादः नेश्वरान्न च कालतः ॥
नाणुभ्यो न स्वभावाच्च न वा प्रकृतितोऽपि च ।
अहेतोरेकहेतोर्वा विषमाद्वा न संभवः ॥
अप्रतीत्यास्तिता नास्ति कदाचित्कस्यचित्क्वचित् ।
न कदाचित्क्वचित्कश्चित् विद्यते तेन शाश्वतः ॥

भावानां निस्स्वभावानां न सत्ता विद्यते यतः ।
सतीदमस्मिन् भवतीत्येतन्नैवोपपद्यते ॥

फलं च प्रत्ययमयं प्रत्ययाश्चास्वयंमयाः ।
कथमस्वंमयेभ्यो यत् तत्प्रत्ययमयं कथम् ॥

पटः कारणतस्सिद्धः सिद्धं कारणमन्यतः ।
सिद्धिर्यस्य स्वतो नास्ति तदसज्जनयेत्कथम् ॥

अनुत्पन्नोऽयमुत्पादः स्वात्मानं जनयेत्कथम् ।
अथोत्पन्नो जनयति जातः किं जन्यते पुनः ॥

यः प्रतीत्यसमुत्पादं पश्यतीदं स पश्यति ।
दुःखं समुदयं चैव निरोधं मार्गमेव च ॥

प्रपञ्चोपशमायैव शून्यता सोपदिश्यते ।
तस्मात् प्रपञ्चोपशमः शून्यतायां प्रयोजनम् ॥

शून्यत्वं नास्तितारूपं भवांस्तु परिकल्पयन् ।
प्रपञ्चं वर्धयन्नेव न च वेत्ति प्रयोजनम् ॥

अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥

प्रपञ्चविनिवृत्त्येकस्वभावा या च शून्यता ।
तस्यां तु नास्तितादृष्टिरमलायां नयुज्यते ॥

यं चार्थं शून्यताशब्दस्समुपादाय वर्तते ।
स प्रतीत्यसमुत्पादः मध्यमा प्रतिपत्तु सा ॥

आसीदसद्वेदमग्रे ततो वै सदजायत ।
इति छान्दोग्योपनिषद्ब्राह्मणं श्रूयते सदा ॥
इदं चापिहितं तुच्छेनेति ब्राह्मणदर्शनम् ।
यच्च तित्तिरिशाखायां तदप्यत्र समञ्जसम् ॥
आसीदिदं तमोभूतमित्याद्याः श्रुतयोऽपि च ।
स्मृतयश्चात्र सिद्धान्ते कटाक्षान् पातयन्ति हि ॥
एवं माध्यमिकैकान्तः स माध्यमिकपूर्वके ।
वृत्तिग्रन्थे च सव्याख्ये पर्यष्कारीति निर्णयः ॥

13 अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥
अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते ।
विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा ॥
तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत् ।
यदा तदा न संचोद्या ग्राह्यग्राहकलक्षणा ॥
अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति ।
उपलम्भोपलम्भेन व्यवहारोऽखिलो मतः ॥
अन्यथा परकीयोपलम्भेनापि पुमानयम् ।
चेष्टेत तस्मात् स्वस्यैव स्वयमेवोपलभ्यते ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैः दृश्येतेन्दाविवाद्वये ॥

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तत्तु प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥
सवासनालयज्ञानानुवृत्तिः बन्ध इष्यते ।
विशुद्धालयविज्ञानसंततिर्मोक्ष ईरितः ॥

14 कल्पनापोढमभ्रान्तं प्रमाणं निर्विकल्पकम् ।
विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः ॥
ग्राह्यं वस्तु प्रमाणं तु ग्रहणं निर्विकल्पकम् ।
न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम् ॥
विकल्पविषये वृत्तिरिष्टा शब्दानुमानयोः ।
अवस्तुविषयाश्चैते विकल्पा इति निर्णयः ॥
विकल्पोऽध्यवसायः स्यात् ग्रहणं निर्विकल्पकम् ।
तस्मादध्यवसेयं च ग्राह्यं चेति द्विधं जगत् ॥
शब्दसंसर्गयोग्यार्थप्रतिभासा हि बुद्धयः ।
सविकल्पा भवन्त्येते व्यपदेशपदास्पदम् ॥
विकल्पयोनयश्शब्दाः विकल्पाश्शब्दयोनयः ।
कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यमी ॥
मानमेयफलानामप्यैक्यं विज्ञानवादिनः ।
"अविभागोऽपी"ति विदुः निरालम्बनसिद्धये ॥
फलक्रियाकारकाणामैक्यं वैभाषिकादयः ।
"क्रियैव कारकम्" इति क्षणभङ्गाय चाश्रयन् ॥

प्रत्यक्षवेद्यं यद्वस्तु विशेषः तत्स्वलक्षणम् ।
परोक्षवेद्यं यच्चापि तत्स्यात्सामान्यलक्षणम् ॥
सजातीयविजातीयव्यावृत्तं स्वत एव यत् ।
तत्स्वलक्षणमित्युक्तं विशेष इति निर्णयः ॥
यथा च पृथवी गन्धलक्षणा स्पर्शलक्षणम् ।
जलमित्यादिकं नैवं किंचित्स्यादन्यलक्षणम् ॥
धर्मधर्मिविभङ्गेन जात्यादेरपि भङ्गतः ।
नैव किंचित्त्वनुगतं यत्स्यात्सामान्यलक्षणम् ॥
अभिन्नदेशकालं यत् तत्स्वलक्षणमुच्यते ।
इति सर्वार्थसिद्धौ हि स्वलक्षणमनूदितम् ॥
सौत्रान्तिकाः पुनरिहापोहसामान्यवादिनः ।
स वादश्शून्यनिष्ठेति न्यायरत्नाकरोदितम् ॥
वात्सीपुत्रास्तु शब्दादीन् पञ्च वैभाषिका विदुः ।
शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन् ॥
निर्धर्मका निराधाराः रूपाद्यास्स्युः चतुर्विधाः ।
पदार्थास्ते चक्षुरादिप्रत्येकेन्द्रियगोचराः ॥
स्पर्शाद्येकद्वित्रिचतुःस्वभावाणुचतुष्कतः ।
पुञ्जः प्रपञ्चः संबन्धो नाम वस्तु न हीष्यते ॥
षट्केन युगपद्योगात्परमाणोष्षडंशता ।
तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः ॥

प्रतिसंख्याऽप्रतीसंख्यानिरोधौ व्योम चेति यत् ।
बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तत् ॥
स निरन्वयनाशः स्याद्धर्मो धर्म्यपि वा पुनः ।
पूर्वसंघातभावो वा यद्भावे नानुवर्तते ॥
उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा ।
तावुभौ सर्वभावानां नियताविति सौगताः ॥
15 त्यज्यतां दीर्घसंसारकारणं स्थिरताग्रहः ।
गृह्यतां क्षणभङ्गित्वं परवैराग्यकारणम् ॥
यत्सत्तत् क्षणिकं सन्तश्चामी भावा इति स्थितम् ।
सत्ताऽर्थकर्मकारित्वं तत् व्याप्यं व्यापकः पुनः ॥
क्रमाक्रमान्यतरयोर्योगः स स्थिरवस्तुनः ।
व्यावर्तमानो व्याप्यं च विनिवर्तयतीत्यतः ॥
व्यतिरेकेण सा व्याप्तिः स्यात्तथाऽन्वयतः पुनः ।
सत्त्वं नानास्वभावत्वं स्थैर्यमेकस्वभावता ॥
तयोर्विरोधो युक्त्यापि वक्तुं न हि न शक्यते ।
एवं द्विधा व्याप्तियोगात् सत्त्वं साध्ये व्यवस्थितम् ॥
किंचात्र कारकावस्था स्यादेकक्षणवर्तिनी ।
सामग्री सा यतः कार्यसर्वदोत्पत्त्यदर्शनम् ॥
व्यापारावेशवशतः साह्यसन्निधितोऽपि वा ।
कारकत्वं वस्तुरूपं तदेकक्षणवृत्ति हि ॥

कार्योत्पत्त्यैव तत्कॢप्तिः तत्पूर्वोत्तरयोरसत् ।
तदेव परमार्थं सत् अन्यस्याजनकत्वतः ॥
कारकत्वस्य चाभावे ह्यस्तित्वमपि दुर्वचम् ।
ततश्च सर्वैः प्रायेण क्षणिकत्वमुपाश्रितम् ॥
सौगताः पीतवन्तश्च यश एव हि केवलम् ।
यत्कारकं यच्च सत्स्यात् तत्सर्वं क्षणिकं ततः ॥
विनश्वरस्वभावेऽस्मिन् कृतं प्रलयहेतुभिः ।
अनश्वरस्वभावेऽस्मिन् कृतं प्रलयहेतुभिः ॥
केचित्तु बुद्धोपदिष्टं तत्त्वं नित्यं च किंचन ।
सत्त्वाख्यसाधनं तेन भवेदागमबाधितम् ॥
ध्रुवभावित्वाख्यहेतुं मन्यन्ते क्षणसिद्धये ।
तत्प्रकारस्य संक्षेप एषोऽस्ति श्लोकवार्तिके ॥
अहेतुको विनाशो हि ध्रुवभावितया स्थितः ।
जनित्वा ध्वंसते सर्वं स्थूलस्सूक्ष्मो द्विधा च सः ॥
बुद्धिपूर्वं विनाशे हि प्रतिसंख्यानिरोधधीः ।
अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसंख्यया ॥
तौ च द्वावप्यनाशित्वादिष्टौ अकृतकावपि ।
आहुः स्वभावतस्सिद्धं तं विनाशमहेतुकम् ॥
हेतुर्यस्य विनाशोऽपि तस्य दृष्टोऽङ्कुरादिवत् ।
विनाशस्य विनाशस्तु नास्ति तस्मादकृत्रिमः ॥

भवति ह्यग्निसंबन्धात्काष्ठादङ्गारसंततिः ।
मुद्गरादिहताच्चापि कपालं जायते घटात् ॥
स्वाभाविको विनाशस्तु जातमात्रप्रतिष्ठितः ।
सूक्ष्मः सदृक्संतानानुवृत्तेरनुपलक्षितः ॥
यदा विलक्षणो हेतुः पतेत्सदृशसंततौ ।
विलक्षणेन कार्येण स्थूलोऽभिव्यज्यते तदा ॥
तेनासदृशसंतानः हेतोस्संजायते यतः ।
तेनैवाक्रियमाणोऽपि नाशोऽभिव्यज्यते स्फुटः ॥
इत्येवं वर्तमानत्वप्रत्यक्षात् क्षणभङ्गिता ।
प्रत्यभिज्ञा चाप्रमाणं विरुद्धांशावगाहनात् ॥

16 उपप्लवो वासना स्यात् वासनामात्रनिर्मिताः ।
कल्पिताळीकभेदादिप्रपञ्चाः पञ्च कल्पनाः ॥
द्रव्यक्रियाजातिगुणनामलक्षणका हि ताः ।
तत्र द्रव्यक्रियाजातिगुणाकाराश्च विश्रुताः ॥
डित्थादिशब्दाकारत्वं वस्तुनः शब्दकल्पना ।
गौरयं दण्ड्ययं शुक्लोऽप्ययं यात्ययमर्भकः ॥
अयमित्यादि पञ्चानां वस्तूनां स्यादुपप्लवः ।
परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ॥
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ।
रागादिवासनामूलं क्षणिकं सकलं ततः ॥

इति सौगतसिद्धान्तं कुतर्क इति ये विदुः ।
कणादगौतममुखाः तैः पुनः परिशोधिताः ॥
मानमेयादयः सर्वैस्सुगृहीताः परीक्षकैः ।
तथापि संगतिज्ञानायानूद्यन्ते तदुक्तयः ॥

(7) न्यायदर्शनम्.

1 काणादं गौतमीयं चाप्येकीकृत्यैव दर्शनम् ।
मानमेयविनिष्कर्षः संक्षेपादिह कथ्यते ॥
प्रमेयशास्त्रं काणादं मानशास्त्रं तु गौतमम् ।
2 आन्वीक्षिकी मानविद्याऽध्यात्मशास्त्रमितीर्यते ॥
प्रदीपस्सर्वविद्यानामालयस्सर्वकर्मणाम् ।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥
ज्ञातं सम्यगसम्यग्वा यन्मोक्षाय भवाय वा ।
तत्प्रमेयमिहाभीष्टं न प्रमाणार्थमात्रकम् ॥
3 द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थास्सप्त कीर्तिताः ॥
क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धः ततः परम् ॥
संयोगश्च विभागश्च परत्वं चापरत्वकम् ।
बुद्धिस्सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ॥

द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ।
उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ॥
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ।
भ्रमणं रेचनं स्पन्दनोर्ध्वज्वलनमेव च ॥
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ।
सामान्यं द्विविधं प्रोक्तं परं चापरमेवच ॥
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ।
परभिन्ना तु या जातिस्सैवापरतयोच्यते ॥
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ।
व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपिच ॥
अन्त्यो नित्यद्रव्यवृत्तिः विशेषः परिकीर्तितः ।
घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ॥
तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ।
अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ॥
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एवच ।
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥
अन्यथासिद्धिशून्यस्य नियता पूर्ववृत्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥
समवायि निमित्तं चासमवायीति तत्त्रयम् ।
निमित्तत्वमधिष्ठानं तद्धीच्छाकृतिलक्षणम् ॥

विवादाध्यासितं सर्वं बुद्धिमत्कर्तृपूर्वकम् ।
कार्यत्वात् उभयोस्सिद्धं कार्यं कुम्भादिकं यथा ॥
कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥
उत्प्रेक्षेत हि यो मोहादज्ञातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥
विभुः द्रव्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
4 अनुभूतिः स्मृतिश्च स्यात् अनुभूतिश्चतुर्विधा ॥
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
प्रमाणं करणं तासां तत एव चतुर्विधम् ॥
प्रमा चैवाऽप्रमा चेति साऽनुभूतिश्चतुर्विधा ।
दोषोऽप्रमाया जनकः प्रमायास्तु गुणो मतः ॥
सा प्रमा तत्प्रकारं यत् ज्ञानं तद्वद्विशेष्यकम् ।
तच्छून्ये तन्मतिर्या स्यात् अप्रमा सा निरूपिता ॥
ज्ञानं यन्निर्विकल्पाख्यं न प्रमा नापिच भ्रमः ।
प्रमात्वं न स्वतोग्राह्यं संशयानुपपत्तितः ॥
साक्षात्कारे सुखादीनां करणं मन उच्यते ।
अयौगपद्यात् ज्ञानानां तस्याणुत्वमिहेष्यते ॥

भावनाख्यस्तु संस्कारः जीववृत्तिरतीन्द्रियः ।
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ॥
शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ।
कण्ठसंयोगादिजन्यः वर्णास्ते कादयो मताः ॥
सर्वश्शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ।
तारङ्गाद्वा मौकुलाद्वा न्यायात्तस्य जनिर्मता ॥
तस्मादनित्या एवेति सर्वे शब्दाः व्यवस्थिताः ।
धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥
अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।
लोकान्तराणि तद्योग्यशरीराणि च सन्ति नः ॥
इमौ तु वासनानाश्यौ ज्ञानादपि विनश्यतः ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥
यदा चर्मवदाकाशं वेष्टयन्तीह मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥

## (8) वैशेषिकदर्शनम्.

1 योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं कणादं तं नमाम्यहम् ॥
काणादन्यायमतयोस्समानार्था इमे स्थिताः ।
वैशेषिके विशेषोऽपि त्वियानेवावगम्यते ॥

शब्दोपमानयोर्नैव प्रामाण्यमतिरिच्यते ।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥
पीलुपाकविदस्त्वेते गौतमीयाः पुनर्विदुः ।
पिठरे पाकमित्येतत् विदितं सर्ववादिनाम् ॥
समवायोऽतीन्द्रियस्स्यादिति वैशेषिकं मतम् ।
प्रत्यक्षस्समवायीति नैयायिकविनिर्णयः ॥
एते वैशेषिकाः प्रायः जरत्तार्किकलक्षणाः ।
प्रायो नैयायिका एव नव्यतार्किकशब्दिताः ॥
तेष्वपि प्रायशः प्राच्यनव्यभेदास्त्वनेकधा ।
भूता अपि भविष्यन्ति सर्वेषां दर्शनेष्विव ॥
आत्माऽनुमेयो जरतां नव्यानां मानसो मतः ।
इत्यौपनिषदैः भेदाः बहवः स्युः प्रदर्शिताः ॥
द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
यस्य न स्खलिता बुद्धिः तं वै वैशेषिकं विदुः ॥
विनाशकविनाशस्य या बुद्धिः प्रतियोगिनी ।
साऽपेक्षाधीः तद्विनाशात् द्वित्वादिर्हि विनश्यति ॥
अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥
विपरीतमतो यत्स्यात् एकेन द्वितयेन वा ।
विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥

विद्याऽविद्याविभागोऽपि विशेषो न्यायनिर्णयात् ।
उपघातात्मकं दुःखं प्रसादजनकं सुखम् ॥
वीचीसंतानवच्छब्दसंतानश्च निरूपितः ।
सर्वा सर्वगता जातिरिति वैशेषिकं मतम् ॥

2 एवं सामान्यतः प्रोक्तस्समुद्देशः तथा पुनः ।
तत्तत्प्रकरणे तत्तद्विशेषः प्रतिपाद्यते ॥
एकं शास्त्रमिति प्रायः बहुभेदं विदुर्बुधाः ।
सांख्यास्तु निर्विशेषां तां प्रकृतिं कारणं विदुः ॥
भूतानि तु विशेषाः स्युः तस्मादाव्यक्तिकास्तु ते ।
विशेषेष्वेव विश्रान्ताः ये ते वैशेषिका इति ॥
सामान्यस्य प्रधानस्य प्रतिद्वन्द्वितया स्थिताः ।
प्राक्पाकजविशेषेण विशिष्टाः परमाणवः ॥
तंतं कार्यं प्रारभन्ते कलमाद्यङ्कुरं स्वयम् ।
संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ॥
स्वगुणाः परमाणूनां विशेषाः पाकजा मताः ।
इत्यौदयनभारत्या सविशेषस्य हेतुताम् ॥
वदतां काणभक्षाणां ख्यातिर्वैशेषिका इति ।
विशेषाख्यपदार्थस्य स्वीकर्तृत्वविशेषतः ॥
वैशेषिका इति ख्यातिः आपातादिति तात्त्विकाः ।

3 अत्र तत्त्वावबोधार्थाः पदार्थपरिशुद्धयः ।

अथाऽत्र प्रथमोऽध्यायः पदार्थोद्देशलक्षणः ॥
अथ द्वितीयोऽध्यायस्स्यात्सामान्यद्रव्यलक्षणः ।
आत्माऽध्यायस्तृतीयस्स्यात् तुर्यस्स्यान्नित्यलक्षणः॥
कर्माध्यायः पञ्चमस्स्यात् षष्ठस्स्याद्धर्मलक्षणः ।
अथ स्यात्सप्तमोऽध्यायस्सामान्यगुणलक्षणः ॥
बुद्ध्यध्यायस्त्वष्टमः स्यात्प्रत्यक्षो नवमो मतः ।
सुखाध्यायस्तु दशमः इत्यध्यायार्थसंग्रहः ॥
या न्यायपरिशुद्धौ श्रीवेदान्ताचार्यसूरिभिः ।
न्यायवैशेषिकभिदासूक्तिरेषा निशम्यताम् ॥
पञ्चाध्याय्यामाक्षपाद्यां यत्त्ववर्गिभिर्निवेश्य च ।
कुशकाशालम्बनीत्या कणभक्षकथां पुनः ॥
निरुध्यन्ते नैगमिकयः पदव्यो विबुधोत्तमैः ।
स्वयमन्तः प्रहसति नूनं तत्र स गौतमः ॥
इत्येवं शास्त्रसारार्थः प्रमेयांशे समुद्धृतः ।
प्रमाणादिषु वादेषु प्रमेयाब्धिः पुरः स्थितः ॥
4 प्रायेण तार्किका एते स्वसिद्धान्तव्यवस्थितिम् ।
इच्छन्ति तर्कपर्यायभूतलाघवयुक्तिभिः ॥
तत्र लाघवयुक्तीनामुदाहरणसूचनम् ।
तमश्शक्त्योर्नातिरेकः हेम्नस्तैजसता तथा ॥
कालादेश्चातिरिक्तत्वं जीवे देहातिरिक्तता ।

विज्ञानादतिरेकश्चेत्यादिरन्यत्र विस्तरः ॥

5 अथात्र नव्यसिद्धान्तविशेषांशो विविच्यते ।
अनुमानागमाभ्यां च सिद्ध्यत्यत्र महेश्वरः ॥
नेश्वरादतिरिच्यन्ते दिक्कालाकाशशब्दिताः ।
त्रसरेणौ विश्रमेण न ह्रस्वपरिमण्डले ॥
सत्ता नाम न सामान्यं विशेषो नातिरिच्यते ।
नाना च समवायस्स्यात् प्रागभावो न सम्मतः ॥
शक्तिस्संख्या च कार्यत्वं कारणत्वं तथैवच ।
स्वत्वं च प्रतियोगित्वं विषयत्वादयोऽपिच ॥
अतिरिच्यन्त इत्याहुः स्पार्शनो वायुरुच्यते ।
त्रसरेणुर्मनो भूतं मूर्तं भूतमितीर्यते ॥
रूपादयो नानुद्भूताः नापिच व्याप्यवृत्तयः ।
चित्रं च नातिरिक्तं स्यादित्याद्यन्यत्र विस्तरः ॥

(७) सांख्य दर्शनम्

1 अथ कापिलसिद्धान्ते प्रमेयपरिकल्पना ।
प्रायेण विदिताऽप्यत्र मीमांसायै निरूप्यते ॥
चतुर्विधः पदार्थः स्यात्कश्चित्प्रकृतिरेवहि ।
प्रकृतिर्विकृतिः कश्चित् कश्चिद्विकृतिरेवच ॥
अन्योऽनुभयरूपस्स्यात् षष्टितन्त्रस्य संग्रहः ।
पञ्चविंशतितत्त्वानामपि संक्षेपलक्षणः ॥

आद्य एको विभुर्नित्यः प्रधानं गुणसाम्यतः ।
प्रतिक्षणसजातीयपरिणाम्यपि शाश्वतः ॥
द्वितीयस्सप्तधा प्रोक्तः महान् तस्मादहंकृतिः ।
रूपगन्धरसस्पर्शशब्दास्तन्मात्रलक्षणाः ॥
तृतीयष्षोडशविधः व्योमाद्यं भूतपञ्चकम् ।
एकादशेन्द्रियाणि स्युः ज्ञानकर्मोभयात्मना ॥
यद्यप्यनन्ता भूतानां स्याद्विकारपरम्परा ।
तत्त्वान्तरोत्पादकत्वं प्रकृतित्वमिहेप्सितम् ॥
तच्च सौक्ष्म्यं हेतुकार्यभावस्येत्यवगम्यते ।
गुणापचित्युपचितिभेदात्सौक्ष्म्यं तदन्यता ॥
चतुर्थः पुरुषोऽनेकः भोक्ता चैतन्यलक्षणः ।
कूटस्थनित्यो मध्यस्थः द्रष्टा साक्षी च केवलः ॥
तन्मात्रपञ्चकं भूतपञ्चकं ज्ञानपञ्चकम् ।
कर्मपञ्चकमन्यच्च पञ्चकं शेषपञ्चकम् ।
एवंच पञ्चकं पञ्च तत्त्वानां पञ्चविंशतिः ॥
2 अथ षष्टिपदार्थ्यास्तु विभागोऽप्यवधार्यताम् ।
प्रधानास्तित्वमेकत्वं अर्थवत्त्वमथान्यता ।
पारार्थ्यं च तथाऽनैक्यं वियोगो योग एवच ॥
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः दश स्मृताः ।
विपर्ययः पञ्चविधः तथोक्ता नव तुष्टयः ॥

करणानामसामर्थ्यं अष्टाविंशतिधा मतम् ।
इति षष्टिः पदार्थानां अष्टाभिस्सिद्धिभिस्सह ॥
3 षष्टितन्त्राभिधः कश्चिदागमः कपिलर्षिणा ।
प्रणीत इति वेदान्तसूत्रे भास्करभाषितम् ॥
संप्रतीश्वरकृष्णीयकारिका तत्त्वकौमुदी ।
सांख्यसिद्धान्तमुकुर इति सर्वत्र निश्चितम् ॥
सांख्यप्रवचनं नाम या षडध्याय्यपीक्ष्यते ।
विज्ञानभिक्षुभाष्यं च तत्प्राच्यैर्नाभिवीक्षितम् ॥
पातञ्जलं चतुष्पादं यदेतर्ह्युपलभ्यते ।
तद्धि सांख्यप्रवचनमिति माधवसंग्रहः ॥
4 स्वभावेनैव चिच्छक्तिर्विषयप्रवणा यदि ।
अनिर्मोक्षप्रसंगोऽतः किञ्चित् द्वारमपेक्षते ॥
न चक्षुरादिमात्रं तत् संकल्पानुपपत्तितः ।
न मनोमात्रविश्रान्तिः स्वप्ने व्याघ्राभिमानतः ॥
नाहंकारे तत्त्वपूर्तिः सुषुप्तौ प्राणदर्शनात् ।
न बुद्ध्यन्ता तत्त्वपङ्क्तिः बुद्धेः परिमितत्वतः ॥
5 कारणं त्वपरिच्छिन्नं प्रधानं प्रकृतिर्हि सा ।
कार्यहेत्वोरभेदः स्यादसतः संभवः कुतः ॥
असत्त्वे नास्ति संबन्धः कारणैस्सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥

6 आश्रयाश्रयिभावेन व्यवहारो विवक्षया ।
यथेह कानने सन्ति तिलका इति लौकिकः ॥
तदभेदैकान्तवादः सांख्यानामिति निर्णयः ।
पातञ्जलाः पुनर्भेदाभेदवादावलम्बिनः ॥
भिन्नाभिन्नत्वमेकस्य कुतोत्र परिकल्पितम् ।
द्वयं सांख्यमतेनैव मुक्त्वा बुद्धस्य शासनम् ॥
इति वार्तिककारोक्त्या भेदाभेदविदोऽपिच ।
सांख्याःसन्तीति विदुषामेवमभ्यूहितुं क्षमम् ॥
तस्माद्गुणः क्रिया जातिर्न द्रव्यादतिरिच्यते ।
7 सारूप्यमेव सामान्यं तत्रापि परिनिश्चितम् ॥
प्रकृतेरविशेषेण विशेषो नात्र संमतः ।
अत्यन्तभेदाभावेन समवायोऽनपेक्षितः ॥
भावान्तरमभावस्स्यात्परिणामविशेषतः ।
तत्त्वान्तरं नैव कालः उत्पत्तिरुपाधिभिः ॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥
8 शरीरं द्विविधं लिङ्गं मातापितृजमित्यपि ।
सूक्ष्ममाकल्पनियतं स्थूलं तूत्पत्तिनाशवत् ॥
सूक्ष्मं महदहंकारेन्द्रियतन्मात्रसंचयः ।
सर्गादिजं तत्प्रत्यात्ममेकैकं भावरूषितम् ॥

धर्माधर्मादयो भावाः तैर्लिङ्गमधिवासितम् ।
परिगृह्य स्थूलदेहं नटवद्व्यवतिष्ठते ॥
9 भावैर्विना न लिङ्गं स्यात् न भावा लिङ्गमन्तरा।
अतोऽस्ति द्विविधस्सर्गः एष प्रत्ययलक्षणः ॥
तृतीयो भौतिकस्सर्गः स्थूलो देवादिभेदतः ।
लिङ्गेषु बुद्धिर्मुख्येति सैव व्यवहृतेः पदम् ॥
साऽचेतना चितिच्छायापत्त्या चेतनवद्भवेत् ।
चेतनोऽपि ज्ञानसुखदुःखवानिव लक्ष्यते ॥
10 अन्योन्यानुग्रहस्सोऽयमविवेकनिबन्धनः ।
बुद्धिर्महत्तत्त्वमेतदन्तःकरणमुच्यते ॥
प्रत्यभिज्ञाऽनुसंधानकार्यनिर्वहणक्षमा ।
विषयाकारिणी बुद्धिवृत्तिः ज्ञानमितीर्यते ॥
बुद्धेस्सत्त्वसमुद्रेकोऽध्यवसायोऽपि स स्मृतः ।
उपलब्धिः पुनः पुंसो वृत्तिमद्बुद्धिदर्शनम् ॥
तस्मात् ज्ञानं चोपलब्धिः बुद्धिश्चार्थान्तरं मतम्।
ततश्च बुद्धिः त्रिविधै रञ्जकैरुपरज्यते ॥
11 विषयेणोपरागोऽयं संबन्धो ज्ञानलक्षणः ।
पुरुषेणोपरागो यः स भेदाग्रहलक्षणः ॥
व्यापारेणोपरागोऽयं वृत्तिः कर्तव्यमित्यसौ ।
तस्मान्ममेदं कर्तव्यमिति बुद्धेर्निरूपणा ॥

अविभागोऽपि बुद्ध्यात्मा भ्रान्तैरेवं निरीक्ष्यते ।
ग्राह्यग्राहकसंवित्तिभेदवानिति सौगताः ॥
सविभागोऽपि बुद्ध्यात्मा भ्रान्तैरित्थं विलोक्यते ।
उपरागैस्त्रिभिरविभक्तात्मेवेति कापिलाः ॥
बाह्यमाभ्यन्तरं चेति करणं द्विविधं मतम् ।
12 चक्षुराद्यं दशविधं बाह्यमाभ्यन्तरं पुनः ॥
मनोऽहंकारबुद्ध्याख्यं त्रिविधं तत्प्रकीर्तितम् ।
आलोचना बाह्यवृत्तिः संकल्पो मनसो मतः ॥
अभिमानोऽहंकृतेः स्याद्बुद्धिरध्यवसायभूः ।
अन्तःकरणसामान्यवृत्तिः प्राणा इतीर्यते ॥
शारीरके प्राणचिन्ता चैतत्सिद्धान्तदूषणी ।
अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ॥
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ।
संमुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम् ॥
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ।
इति प्राहुस्सांख्यवृद्धाः प्रायस्सौगतसोदराः ॥
13 सत्त्वं रजस्तम इति गुणाः प्रकृतिलक्षणाः ।
सुखं दुःखं च मोहश्च तदेषामुपलक्षणम् ॥
प्रकाशश्च प्रवृत्तिश्च नियमश्च प्रयोजनम् ।
अन्योन्याभिभवे शान्ता घोरा मूढा च वृत्तयः ॥

साम्येनावस्थितौ तुल्यपरिणामपरंपरा ।
अविनाभाववृत्तित्वमित्याद्या इह वृत्तयः ॥

14 आत्मा ज्ञातव्य इत्युक्त्या विवेक्तव्यः प्रधानतः ।
इत्यप्युक्त्या च युक्त्या च ज्ञानान्मोक्षं विदुस्त्विमे ॥
आत्मानुमेयसिद्धान्तः सांख्यानामिति निर्णयः ।
आत्मप्रत्यक्षसिद्धान्तः प्रायेणेतरसम्मतः ॥
वैराग्यं विषयत्यागादित्यौपनिषदं मतम् ।
भोगाद्विषयवैराग्यमिति कापिलदर्शनम् ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
सर्वकर्मक्षयादेव मोक्षस्स्याद्भोगवादिनाम् ॥
इत्यतश्चैकभविकपक्षः पातञ्जलानुगैः ।
स्वीकृतस्तस्य वैशद्यं मोक्षवादे भविष्यति ॥
अतो विवेकख्यात्याख्यतत्त्वसाक्षात्कृतेः पुनः ।
अप्रारब्धविपाकानां बीजभावविदाहतः ॥
कर्माशयानां प्रारब्धविपाकानां तु भोगतः ।
अवश्यंभावि चानाशि कैवल्यमिति निर्णयः ॥
तत्त्वसाक्षात्कृतिः प्रायः मोक्षसाधनमुच्यते ।
अविद्या भ्रान्तिरूपा हि साक्षात्कृत्या निवर्तते ॥

15 ये त्विच्छन्ति च सर्वेशं सप्रसादं सशक्तिकम् ।
सर्वज्ञं तैः तत्प्रसादमूलोपासनमिष्यते ॥

तत्त्वनिर्णयमात्रेण भगवान्न प्रसीदति ।
न वा निःश्रेयसं तस्मादुपास्त्यै तत्त्वनिर्णयः ॥

(10) पातञ्जल दर्शनम्.

1 हिरण्यगर्भोपज्ञं यद्योगशास्त्रं प्रकीर्तितम् ।
तदीयसंहितासारं संजग्राह पतञ्जलिः ॥
न परीक्षाशास्त्रमेतत् किंतु स्यादनुशासनम् ।
स्वार्थोपदेशेन परनिरासोऽप्यभिसंहितः ॥
तत्त्वज्ञानं सांख्यशास्त्रे योगेऽनुष्ठानमुच्यते ।
ज्ञानानुष्ठानसंयोगात् अपृथक्स्थितिरेतयोः ॥
ज्ञानयोगो भक्तियोगः प्रथमे पाद ईरितः ।
कर्मयोगस्तदुभयहेतुस्साधनपादगः ॥
विभूतिपादेऽभ्युदयः निश्श्रेयसमथान्तिमे ।
प्रतिपाद्यं प्रधानार्था इति शास्त्रार्थसंग्रहः ॥
ज्ञानयोगस्स्वात्मचिन्ता भक्तिरीश्वरचिन्तनम् ।
कर्मयोगः कर्मनिष्ठा फलसंगविवर्जिता ॥
हेयं च हेयहेतुश्च मोक्षस्तद्धेतुरित्यपि ।
शास्त्रं व्युत्पादयत्येतदिदमर्थचतुष्टयम् ॥
2 सर्वान् जन्तूनुद्दिधीर्षुः दुःखसंसारसागरात् ।
उपादत्ते सत्त्वचित्तं परः कारुणिकः पुमान् ॥

अनुग्रहोपदेशादेर्विना तेन न संभवः ।
सर्गप्रलयसन्तानः बीजाङ्कुरवदिष्यते ॥
ज्ञानक्रियाशक्तियुक्तं चित्तं सर्वातिशाय्यदः ।
अनादिसिद्धं तस्यास्ति शुद्धसत्त्वं प्रधानजम् ॥
पूर्वपूर्वोपात्तचित्तं तादृक्संकल्पवासितम् ।
उत्तरोत्तरचित्तानामुपादाने निबन्धनम् ॥
सात्त्विकाः परिणामाश्च तस्य भोग्यतया स्थिताः ।
न चेश्वराणां नानात्वं भिन्नाभिप्रायभङ्गतः ॥
ज्ञानैश्वर्ये शुद्धसत्त्वे स्यातामस्य सनातने ।
पुंप्रकृत्योश्च संयोगवियोगौ तन्निबन्धनौ ॥
3 सर्वज्ञलिङ्गं निरतिशयमीशानलक्षणम् ।
प्रणिधानं नाम भक्तिः तदुपासनलक्षणम् ॥
इच्छामात्रेण सकलजगदुद्धरणक्षमः ।
यतस्तदेकाश्रयणं वरणं शरणस्य तत् ॥
यद्यस्येष्टं तत्तु तस्य प्रयोजनमिति स्थितम् ।
सर्वभूतानुग्रहोऽस्य जगत्कर्तुः प्रयोजनम् ॥
स कालेनानवच्छेदात्पूर्वेषां गुरुरुच्यते ।
प्रणवो वाचकस्तस्य तन्मूलं तदुपासनम् ॥
स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमाचरेत् ।
स्वाध्याययोगसंपत्त्या परमात्मा प्रसीदति ॥

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥
सादृश्यादीश्वरध्यानं तदनुग्रहमूलतः ।
स्वात्मसाक्षात्कारहेतुरिति तद्यौगदर्शनम् ॥
उपायस्सुकरस्सोऽयं शीघ्रं चापि फलप्रदः ।
केषांचित् क्षीणदोषाणां विश्वासोऽत्र महात्मनाम् ॥
4 स एव भक्तियोगस्स्यात् ज्ञानयोगोऽधुनोच्यते ।
चित्तवृत्तिनिरोधोऽसौ स्वसाक्षात्कारकारणम् ॥
आगमेनानुमानेन ध्यानाभ्यासवशेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥
ध्यानाभ्यासरसश्चैषः धर्ममेघ इतीर्यते ।
परं प्रसंख्यानमेतत्पुंमात्रध्यानलक्षणम् ॥
ध्यानप्रकर्षपर्यन्तजा चिच्छायावती तु या ।
अविप्लुता विवेकोपलब्धिः मोक्षस्य कारणम् ॥
सा शुक्लकृष्णमुत्पाद्य धर्मं बन्धं विमोचयेत् ।
प्रकृष्टधर्मजो मोक्ष इति स्वायंभुवं मतम् ॥
अत्र कैश्चिद्धर्ममेघस्समाधिः पक्व उच्यते ।
तेन ज्ञानैकसाध्योऽसौ मोक्ष इत्येव तन्मतम् ॥
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ।
इति स्मृतिवचस्तत्र प्रमाणं च प्रदर्श्यते ॥

प्रज्ञाप्रासादमारुह्य ह्यशोच्यश्शोचतो जनान् ।
भूमिष्ठानिव शैलस्थस्सर्वान् प्राज्ञोऽनुपश्यति ॥

5 अधिकारस्स चित्तस्य स्थितिहेतुरुदीरितः ।
यः कृत्यशेषः तच्छून्यं चित्तं मूले विलीयते ॥
तस्य चित्तस्य विलयात्स्वस्वरूपे प्रतिष्ठितः ।
पुरुषः केवलो गौणी सा प्रतिप्रसवात्मिका ॥
संयोगाभाव एवासौ दृशेः कैवल्यमुच्यते ।
कृतकृत्यं ख्यातिपर्यवसानं चित्तचेष्टितम् ॥
यश्च नैरात्म्यसिद्धान्तो निर्वाणद्वारमुच्यते ।
तदेतच्चित्तविषयमिति सम्यग्विशोधितम् ॥

6 ज्ञातव्यमखिलं ज्ञातं हातव्यमखिलं तथा ।
प्राप्तव्यमखिलं प्राप्तं कर्तव्यमखिलं कृतम् ॥
चतुर्विधा इमाः ख्याताः यास्ताः कार्यविमुक्तयः ।
चरितार्था च मे बुद्धिः गुणाश्चानधिकारिणः ॥
स्वस्वरूपप्रतिष्ठोऽहं एताश्चित्तविमुक्तयः ।
ततश्च नाहं नैवास्मि न मे चेति विनिश्चयः ॥

7 क्षिप्तं मूढं च विक्षिप्तमेकाग्रं पञ्चमं पुनः ।
निरुद्धमिति चित्तस्य भूमयः पञ्च कीर्तिताः ॥
चित्तं चतुर्विधं तत्र व्युत्थानं प्रथमं मतम् ।
समाध्यारम्भसंज्ञं तु द्वितीयं परिकीर्तितम् ॥

एकाग्रता निरोधश्च तृतीयं च तुरीयकम् ।
तत्र पूर्वस्य संस्कारश्चोत्तरेण निहन्यते ॥
स्वयं निरोधसंस्कारः नश्येत्सीससुवर्णवत् ।
स्वभावतस्तत्त्वपक्षपातस्सर्वत्र दृश्यते ॥

8 निरोधश्च समाधिश्च तथैवैकाग्रतेति च ।
स्थूलमध्यमसूक्ष्माख्याः परिणामास्स्युरान्तराः॥
ते धर्मलक्षणावस्थाभेदात् बाह्याः प्रकीर्तिताः ।
देशकालदशाभेदात् त्रैविध्यमभिसंहितम् ॥
चितिशक्ते ऋते सर्वे प्रतिक्षणविकारिणः ।
प्रतिक्षणपरिणामोऽत्रस्था सूक्ष्म उदाहृतः ॥
मध्यमो भूतभाव्यादिव्यवहारस्य गोचरः ।
घटादिपरिणामो यः स स्थूल इति निर्णयः ॥
भेदाभेदोऽत्राभिमतः तादात्म्यं धर्मधर्मिणोः ।
भावाभावविरोधस्तु स्यात्प्रतीतिपराहतः ॥

9 बुद्धिवृत्तिः प्रमाणं स्याच्चिच्छायाऽत्र प्रमा मता ।
आप्तेश्वरप्रणीतश्च वेद आगमलक्षणः ॥
वाच्यवाचकभावोऽस्य नित्यः संकेतसूचितः ।
यो विकल्पो निर्विषयख्यातिवादस्स उच्यते ॥
नात्रासत्ख्यातिवादस्स्यान्नापि ख्यातेरपह्नुतिः ।
तस्माद्योगाचारगुर्वोः मार्गादेष विलक्षणः ॥

10 चित्तवृत्तिनिरोधस्याभ्यासवैराग्यलक्षणौ ।
उपायौ प्रथमौ ज्ञेयौ तत्स्वरूपं निशम्यताम् ॥
अभ्यासः स्थितियत्नः स्यात् तृष्णाहानिर्विरागता ।
तृष्णाक्षयसुखं सर्वसुखेभ्यो हि विशिष्यते ॥

11 योगो द्विधस्स्यात्संप्रज्ञातासंप्रज्ञातभेदतः ।
ध्येयमात्रस्फूर्तिराद्यः तच्छून्योऽनन्तरो मतः ॥
सालम्बनस्स्यात्प्रथमः निरालम्बन उत्तरः ।
सबीजः प्रथमः प्रोक्तः निर्बीजस्स्यादनन्तरः ॥
मृदुर्मध्योऽधिमात्रश्च स्यादुपायास्त्रिधा मतः ।
मृदुर्मध्यश्च तीव्रश्च संवेगोऽपि त्रिधा स्थितः ॥
तत्र प्रत्येकयोगेन योगिनो नवधा मताः ।
तत्रोत्तरेषु चासन्ना सिद्धिः भक्ते ततोऽपिच ॥
संप्रज्ञातसमाधिस्तु समापत्तिरितीर्यते ।
तत्र ग्राह्यसमापत्तिः स्थूलसूक्ष्मविभेदतः ॥
सवितर्का निर्वितर्का सविचारा तथेतरा ।
चतुर्विधैवं तद्भिन्ना या तु ग्रहणगोचरा ॥
समापत्तिश्च सानन्दा निरानन्देति भिद्यते ।
स्याद्गृहीतृसमापत्तिः सास्मिता च निरस्मिता ॥
इति द्विधा तथा चाष्टौ समापत्तय ईरिताः ।
सर्वस्फूर्तिनिरोधे तु द्वितीयो योग उच्यते ॥

संस्कारमात्रशेषं तु चित्तमत्रावतिष्ठते ।
12 तद्भवप्रत्ययोपायप्रत्ययाभ्यां द्विधं मतम् ॥
एते भवप्रत्ययाः स्युः ये भवन्ति पुनर्भुवि ।
योगिनस्ते बहुविधाः पुराणेषु प्रपञ्चिताः ॥
दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते ।
एते हि तौष्टिकाः प्रोक्ताः विवेकख्यातिवर्जिकाः ॥
तेषां चित्तं लीनमपिचोत्तिष्ठेत्सुप्तचित्तवत् ।
उपायप्रत्ययानां तु चित्तं नावर्तते पुनः ॥
विवेकिनस्सर्वमिदं हेयं दुःखमनागतम् ।
हेयहेतुस्तु संयोगोऽविद्यया द्रष्टृदृश्ययोः ॥
हानं दृशेस्तु कैवल्यं संयोगाभावलक्षणम् ।
हानोपायोऽविप्लवा स्यात् विवेकख्यातिलक्षणा ॥
प्रतिप्रसवहेयास्स्युः सूक्ष्माः संस्कारलक्षणाः ।
स्थूलास्तु ध्यानहेयाः स्युः क्लेशलक्षणवृत्तयः ॥
स प्रतिप्रसवः ख्यातः तस्यैव ध्वंसलक्षणः ।
तथाच धर्मिनाशेन धर्मनाश इति स्थितम् ॥

13 हेतुवादोच्छेदवादशाश्वद्वादा इति त्रयम् ।
उपादाने च हाने चोपेक्षायां च क्रमान्मतम् ॥
तत्रोपादेय आत्माऽसौ नापि हेयोऽपितु स्वयम् ।
उपेक्षणीय एवातः आत्मा शाश्वतिको मतः ॥

14 नित्योदिता च व्यङ्ग्या च चिच्छक्तिः द्विविधा मता ।
आद्या कूटस्थचिच्छक्तिः पुरुषस्य प्रकीर्तितः ॥
तत्सन्निधानाच्चित्तस्य या पुनः व्यज्यतेऽपरा ।
तदभिव्यक्तचैतन्यं चित्तं व्यङ्ग्येति कीर्त्यते ॥
चिच्छायया चेतनायमानं चापि भवत्यदः ।
प्रतिबिम्बाभिधा सैव पूर्वा बिम्बाभिधा मता ॥
सांनिध्यात् व्यञ्जनं यच्च तदेव प्रतिबिम्बनम् ।
तच्चित्तं वेद्यतां याति स्वाकारस्य समर्पणात् ॥
स्वकर्मानुगुणं भोक्ताऽधिष्ठितः परमात्मना ।
इति सांख्यैः स कथितः ये शान्तब्रह्मवादिनः ॥
तस्य यस्सुखदुःखादिभोगः कर्मनिबन्धनः ।
स एव पौरुषो भोगः विवेकाग्रहमूलकः ॥
अभिप्रायेण तेनैव कथितं विन्ध्यवासिना ।
या सत्त्वतप्यता सैव पुरुषे तप्यतेति च ॥
चित्तमेव द्रष्टृदृश्योपरक्तं त्वंशभेदतः ।
सर्वार्थमित्युच्यते यच्चेतनाचेतनात्मकम् ॥

न तत्स्वभासं दृश्यत्वात् साक्षिवेद्यमतस्स्थितम् ।
नार्थः प्रतीतो भवति तत्प्रतीतेरवेदने ॥
बुद्धिवृत्तिश्चिदाकारा चिच्छायाप्रतिसंक्रमात् ।
सा चितिः वृत्त्यवच्छिन्ना चिद्वेद्येत्यभिधीयते ॥
नातश्चित्तं स्वप्रकाशं न चित्तान्तरगोचरः ।
किंतु वेद्यं साक्षिणेति व्यवहारव्यवस्थितिः ॥
एवं सवृत्तिकं चित्तं साक्षिवेद्यं सदा मतम् ।
यतस्साक्षी स कूटस्थोऽन्यथाऽलं चित्तवस्तुना ॥

15 तथैव प्रकृतेश्चापि द्वे शक्ती सहजे स्थिते ।
अनुलोमप्रतीलोमपरिणामविभेदतः ॥
अनुलोमः परीणामो भूतान्तो यो बहिर्मुखः ।
स्वकारणानुप्रवेशः प्रतिलोमोऽस्मितावधिः ॥
ते एव पुरुषार्थस्य कर्तव्यत्वमितीर्यते ।
तादृक्षशक्तिद्वितयक्षय एव कृतार्थता ॥

16 यद्यप्येते तु सहजे शक्ती यत्नो विमुक्तये ।
शास्त्रोपदेशवैयर्थ्याभावश्चाप्यवधार्यताम् ॥
पुंप्रकृत्योरनादिर्यः भोक्तृभोग्यत्वलक्षणः ।
बन्धः तस्मिन् सति व्यक्तचेतना प्रकृतिः पुनः ॥
कर्तृत्वस्याभिमानेन दुःखस्यानुभवेन च ।
कथमात्यन्तिकी दुःखनिवृत्तिस्स्यान्ममेत्यपि ॥

अध्यवस्यति शास्त्रं चापेक्षते मुक्तिहेतवे ।
कर्मानुरूपं तद्बुद्धिसत्त्वं शास्त्रस्य गोचरः ॥
शास्त्राधिकारी योऽविद्यास्वभावो दर्शनान्तरे ।
परमार्थस्वभावोऽसाविति निर्धार्यतेऽत्र तु ॥
17 चित्तं स्वसंवेदनं स्यात् तदेव जगदित्यपि ।
ब्रुवाणा ये सौगताः स्युः तैनैते प्रतिबोधिताः ॥
गुणाः परिणामिनित्याः कूटस्थाः पुरुषा मताः ।
प्रतिक्षणपरिणामाः क्षणविध्वंसिनोऽपरे ॥
गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेत्याह भाष्यकृत् ॥
संहतास्ते गुणाः पुंसां शेषत्वाद्गुणशब्दिताः ।
सर्वकार्यप्रधानत्वात्प्रधानमिति चोच्यते ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
अतीताध्वप्रविष्टाः स्युः भावाः नात्यन्तिकक्षयाः ॥
चित्तं वा चित्ततन्त्रं वा न वस्त्वित्यनुशिष्यते ।
विज्ञानप्रतिभासादिवादास्तेन पराहताः ॥
वस्तुसाम्ये चित्तभेदाद्विक्षेपे नाश आपतेत् ।
प्रत्यभिज्ञादिकं तावत्पुंभेदेऽपि प्रदृश्यते ॥
पुमैक्ये किमु वक्तव्यं तस्माद्वस्त्वस्ति तत् स्थिरम् ।
चित्तचैत्तोभयं नावधार्येत क्षणिकं यदि ॥

हेतुहेतुमतोरेककालत्वानुपपत्तितः ।।।
प्रतिसंधीयतेऽद्राक्षमहं घटमितीत्यपि ।।
ज्ञाताज्ञातं वस्तु चित्तस्योपरागप्रतीक्षणात् ।।

18 पुरुषार्थोऽनागतोऽसौ गुणानां तु प्रवर्तकः ।
मतो निरीश्वरे सांख्ये सेश्वरे त्वीश्वरो मतः ।।
धर्मादिकं तु प्रकृतिकार्यत्वान्न प्रवर्तकम् ।
किंत्वावरणभेदेऽस्य सम्मता हि निमित्तता ।।
अधर्मावरणे तत्र धर्मेण विनिवारिते ।
जात्यन्तरपरिणामः प्रकृत्यापूरपूर्वकः ।।

19 समाधिमात्रजा सिद्धिर्यदि, विज्ञानवादतः ।
न विवेकस्ततः जन्मौषधिमन्त्रजकीर्तनम् ।।
ध्यानेन संस्कृतं चित्तमपवर्गाधिकार्यदः ।
विवेकनिम्नं कैवल्यप्राग्भारमिति कीर्त्यते ।।

20 समाः गुणाः प्रधानं स्यात् समत्वादेकतत्त्वता ।
विवर्तवादोऽन्यथा स्यादनेकं चैकमित्यसौ ।।
तथाचाङ्गाङ्गिभावेन परिणामेन चैकता ।
तत्त्वं च महदादेः स्यात् सत्त्वाङ्गित्वे महान् भवेत्।।
रजःप्रधानान्महतोऽहङ्कारस्य समुद्भवः ।
तमःप्रधानान्महतो जातं तन्मात्रपञ्चकम् ।।
अहङ्कारात्सात्त्विकात्स्यात् तद्बुद्धीन्द्रियपञ्चकम् ।।

तस्मात्तु राजसात्कर्मेन्द्रियाणां स्यात्तु पञ्चकम् ।
प्रादुर्भूतं मनश्चैवाहङ्कारादुभयात्मकात् ॥
अङ्गि चेच्छब्दतन्मात्रं आकाशस्य समुद्भवः ।
एवं स्पर्शाद्यङ्गितायां पवनादिसमुद्भवः ॥
बाह्योऽर्थः त्रिगुणः चित्तं यथैव त्रिगुणं तथा ।
धर्मादिस्सहकारी स्यात् तेनार्थो ज्ञायते यदा ॥
तदुद्भवाभिभवतः व्यज्यते बहुरूपतः ।
ततस्सुखं दुःखमिति विचित्रं जगदुच्यते ॥

21 ननु सर्वे च पुरुषाः मुच्यन्ते वाऽथ किं न वा ।
आद्ये प्रधानस्य परिणामस्सावधिको भवेत् ॥
द्वितीये तत्त्वविज्ञानाविस्रम्भ इति चेन्न तत् ।
अस्ति हि त्रिविधः प्रश्नः तदुत्तरविभागतः ॥
एकान्तवचनीयश्चावचनीयस्तथैव च ।
विभज्य वचनीयश्चेत्यत्रोदाहरणं क्रमात् ॥
जन्तुर्जातः स्थिरः कश्चित्तिष्ठतीत्यनुयोगतः ।
सर्वो मरिष्यतीत्यत्र त्वेकान्तवचनीयता ॥
समाप्यते किं प्रधानपरिणामक्रमस्त्विति ।
प्रश्नोऽयमुत्तरानर्होऽनवधारणशक्तितः ॥
मुच्यन्ते किं पुनस्सर्वे इत्यत्र त्विदमुत्तरम् ।
तत्त्वख्यातिर्यस्य पुंसः मुच्यतेऽसौ नचेतरः ॥

विभज्य वचनीयोऽसौ तृतीयः प्रश्न उच्यते ।
प्रायस्सर्वत्र शङ्कानां विभागेनैवमुत्तरम् ॥

22 मुक्तिर्नामात्र कैवल्यं मतं चिन्मात्रलक्षणम् ।
व्यावर्त्यते मात्रचाऽत्र स्वात्मसंवेदनाऽपि हि ॥
स्वात्मानन्दानुभवनं कैवल्य इति केचन ।
सांख्याः प्राहुः तदप्यन्यैः कौटस्थ्यान्नाभ्युपेयते ॥
वैशेषिकादिसिद्धान्तसंसिद्धादात्मनो जडात् ।
वैलक्षण्यं मतं त्वेतच्चिद्रूपत्वमिहात्मनः ॥
आत्मा न स्वप्रकाशात्मा प्रकाशात्मैव केवलः ।
इति पातञ्जलाः सांख्याः प्राहुर्निर्णयमात्मनाम् ॥

## (11) प्राभाकरदर्शनम्.

1 द्रव्यं गुणस्तथा कर्म सामान्यं शक्तिरेवच ।
सादृश्यं समवायश्च संख्या चेत्यष्टधा स्थितम् ॥
प्रमेयमिति सिद्धान्तः प्रभाकरगुरोर्मतः ।
क्षित्यप्तेजोमरुद्व्योमदिक्कालात्ममनांसि च ॥
द्रव्याणि नवधा तेजोहीनाधिकरणं तमः ॥
रूपं गन्धो रसः स्पर्शः वियोगो योग एवच ॥
पृथक्त्वं च गुरुत्वं च द्रवत्वं स्नेह एवच ।
बुद्धिस्सुखं दुःखमिच्छा द्वेषः यत्नश्च संस्क्रिया ॥

परिमाणं च परताऽपरता शब्द एवच ।
इत्येकविंशतिविधो गुण इत्यवगम्यते ॥
2 द्रव्यसामान्यवृत्तित्वे सामान्यगुणतेष्यते ।
प्रत्येकद्रव्यवृत्तित्वे विशेषगुणता मता ॥
नैल्यादयो गुणा विभ्व्यः एकैकव्यक्तिलक्षणाः ।
तेषामाश्रयभेदेन भेदो नाभ्युपगम्यते ॥
अथ कर्मपदार्थं तु सूक्ष्ममाहुरतीन्द्रियम् ।
अनुमेयं च संयोगाद्विभागाद्वाऽर्ककर्मवत् ॥
सामान्यं न्यायमतवत् शक्तिस्सर्वपदार्थगा ।
नानाविधा च सादृश्यमनेकं सर्ववस्तुगम् ॥
समवायोऽनेकविधोऽप्यनित्योऽप्यक्षगोचरः ।
संख्याऽपि सर्वगा ज्ञेया सर्वेषां विस्तरोऽग्रतः ॥

## (12) कौमारिलदर्शनम्.

1 द्रव्यं गुणस्तथा कर्म जातिश्चाभाव इत्यपि ।
भट्टपादस्य सिद्धान्ते प्रमेयं पञ्चधा मतम् ॥
क्षित्यप्तेजोमरुद्व्योमदिक्कालात्ममनांसि च ।
तमो वर्ण इति द्रव्यमेकादशविधं मतम् ॥
रूपं गन्धो रसः स्पर्शः संख्यासंयोगशक्तयः ।
विभागः परिमाणं च परताऽपरता ध्वनिः ॥

पृथक्त्वं च गुरुत्वं च द्रवत्वं स्नेह एव च ।
बुद्धिस्सुखं दुःखमिच्छा द्वेषः संस्कार इत्यपि ॥
प्राकट्यं च प्रयत्नश्च चतुर्विंशतिधा गुणाः ।
कर्मत्वजातिमत्कर्म प्रत्यक्षं चलनात्मकम् ॥
जात्यभावौ तार्किकाद्यैः कीर्तितावेव सम्मतौ ।
शिष्टं विशेषवादेषु स्पष्टमग्रे भविष्यति ॥

2 प्रत्यक्षाणि हि सर्वाणि द्रव्याण्यात्मा तथाऽऽन्तरः ।
दृश्यमानातिरिक्तं तु द्रव्यं भाट्टैर्न मन्यते ॥
स्वयंप्रकाशमात्मानं कालाकाशमनांसि तु ।
अप्रत्यक्षाणीति वेत्ति प्रभाकरगुरुः पुनः ॥

3 द्रव्याज्जातिगुणादीनां नात्यन्तं भेद इष्यते ।
किंतु तादात्म्यमेतस्मादनेकान्तः यथोच्यते ॥
जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि ।
भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिस्समा ॥
नैतत्, अश्वादिबुद्धीनामध्यारोपाद्यसंभवात् ।
स्थितं नैवहि जात्यादेः परत्वं व्यक्तितो हि नः ॥
यदि ह्येकान्ततो भिन्नं विशेष्यात्स्याद्विशेषणम् ।
स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत्कथम् ॥
नतु जात्यादिनिर्मुक्तं वस्तु दृष्टं कदाचन ।
तद्विमोकेन वा तानि लाक्षादिस्फाटिकादिवत् ॥

नचाप्ययुतसिद्धानां संबन्धित्वेन कल्पना ।
नानिष्पन्नस्य संबन्धो निष्पत्तौ युतसिद्धता ॥
अत्यन्तभिन्नताऽस्माभिर्नैव कस्यचिदिष्यते ।
सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥
उपलब्ध्यनुसारेण व्यवस्थासिद्धिरीदृशी ।
इति कौमारिलैकान्तः शिष्टमग्रे निरूप्यते ॥

## (13) द्वैताद्वैतदर्शनम्.

1 अथ भेदाभेदवादे प्राचां सिद्धान्त उच्यते ।
महासमुद्रस्थानीयं परं ब्रह्माक्षरं मतम् ॥
तदप्रचलितावस्थं ईषत्प्रचलितं यदा ।
तदन्तर्यामिसंज्ञं स्यात् अत्यन्तचलितं यदा ॥
तदा क्षेत्रज्ञसंज्ञं स्यात् इति त्रेधा व्यवस्थितम् ।
पञ्चावस्था अपि प्राहुः भूतसंस्थानभेदतः ॥
पिण्डो जातिर्विराट् सूत्रं दैवमित्युक्तलक्षणाः ।
भूतमात्रामहदहमिन्द्रियापरनामकाः ॥
अष्टावस्था इमाः भर्तृप्रपञ्चादिभिरीरिताः ।
एतेऽवस्थावादिनस्स्युः केचिदुत्पत्तिवादिनः ॥
विकारवादिनः केचित् अन्ये स्युः शक्तिवादिनः ।
शक्तिवादिन एवैते प्रायोऽभिव्यक्तिवादिनः ॥

जगन्मायावादिन इत्येत एव मता बुधैः ।
बृहदारण्यकव्याख्याविदितं मतमीदृशम् ॥
2 एतं पन्थानमाश्रित्य मध्ये भास्करयादवाः ।
आसन् भाष्यकृतोऽद्वैतविशिष्टाद्वैतभाष्ययोः ॥
तत्र जीवो ब्रह्मणोंऽशः विष्फुलिङ्गवदिष्यते ।
पृथिव्युपष्टम्भभेदात् तेजः खण्डमिवेक्ष्यते ॥
तत्र भास्करसिद्धान्तः परिणाम इति श्रुतः ।
भेदाभेदः स्वभावेन स्याज्जगद्ब्रह्मणोरिह ॥
जीवेशयोः पुनर्भेदस्स्यादुपाधिविभेदतः ।
स्वाभाविको मोक्षदशाकालिकोऽभेद इष्यते ॥
श्रीमद्यादवसिद्धान्तः भेदाभेद इति श्रुतः ।
स्वभावात् ब्रह्मजगतोः तथैव ब्रह्मजीवयोः ॥
अथापि भेदाभेदस्तु द्वाभ्यामप्युररीकृतः ।
3 तत्र भास्करभाष्यस्थं वचनं त्ववगम्यताम् ॥
एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते ।
नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥
यत्प्रमाणैः परिच्छिन्नं अविरुद्धं हि तत्तथा ।
वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥
प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥

एकं रूपं प्रतीतत्वात् द्विरूपं च तथेष्यताम् ।
एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥
नरभेदान्न हि ज्ञेया वस्तुनस्सदसत्त्वता ।
नहि रूपमनन्धानां सत्यमन्धेष्वसद्भवेत् ॥
प्रपञ्चास्तित्वमज्ञस्य तस्यैव ज्ञानिनः पुनः ।
स एव किल नास्तीति कथं सत्यं वचो भवेत् ॥
नहि द्विचन्द्रः प्रागासीत् पश्चान्नास्तीति युज्यते ।
द्विचन्द्रज्ञानतुल्यत्वं प्रत्यक्षादेस्त्वपेक्ष्यते ॥
अतो भिन्नाभिन्नरूपं ब्रह्मेत्येवावधार्यते ।
न गृह्यते च करणदोषः तिमिरवत् स्वतः ॥
कार्यरूपेण नानात्वं अभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥
अप्रच्युतस्वभावस्य शक्तिविक्षेपलक्षणः ।
परिणामः यथा तन्तुनाभस्य पटतन्तुवत् ॥
आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
इत्युच्यते कैश्चिदत्र प्रत्युक्तिरियमुच्यते ॥
स्वरूपमेव वस्तूनां परस्परविलक्षणम् ।
नानात्वं तत्सुसंवेद्यं भेद इत्यभिधीयते ॥
पटरूपं घटे नास्ति घटरूपं पटे नहि ।
इति देशान्तराभावः अन्योन्याभाव उच्यते ॥

एतन्मूलमनेकान्तवादस्यापीति निर्णयः ।
कार्यकारणभावस्य मीमांसायां तु विस्तरः ॥

### (14) विशुद्धाद्वैतदर्शनम्.

1 अथाद्वैतविदामेष प्रमेयपरिनिश्चयः ।
पदार्थो द्विविधः तत्त्वमतत्त्वं चेति सँग्रहात् ॥
तत्त्वं ब्रह्मैकमेव स्यात् अतत्त्वं द्विविधं मतम् ।
अनिर्वाच्यमसच्चेति प्रथमं द्विविधं पुनः ॥
व्यावहारिकमाद्यं स्यात् द्वितीयं प्रातिभासिकम् ।
आद्यं चतुर्विधं प्राहुः प्रकृतिर्विकृतिस्तथा ॥
उभयात्मकमन्यत्स्यात् उदासीनं तुरीयकम् ।
आद्यत्रयं द्रव्यमुक्तं उदासीनं गुणः क्रिया ॥
जातिस्संख्या च शक्तिश्चेत्यनन्तविधमुच्यते ।
असच्च शशशृङ्गादिः विकल्पविषयस्तु सः ॥
विकल्पो निस्स्वभावस्य वस्तुनस्स्वावभासकः ।
प्रतीतिस्सस्वभावस्य वस्तुनस्त्विवति निर्णयः ॥
2 इयमेका प्रक्रियोक्ताऽथापराऽपि निशम्यताम् ।
अर्थो द्विधस्स्वतस्सिद्धः परतस्सिद्ध इत्यपि ॥
आद्य आत्मा त्वनात्माऽन्यः स च द्विविध इष्यते ।
साक्षिभास्यो वृत्त्यपेक्षसाक्षिभास्य इतीतरः ॥

मनस्सुखादिराद्यः स्यात् द्वितीयोऽपि द्विधो मतः।
मनोवृत्तिमपेक्ष्यैकोऽविद्यावृत्तिमनन्तरः ॥
घटादिः प्रथमस्तत्र सुषुप्त्यादिरनन्तरः ।
एवं शिक्षा पदार्थानां समग्राहि समासतः ॥
3 ब्रह्मैवानाद्यनिर्वाच्याऽविद्यारूपोपधानतः ।
नामरूपप्रपञ्चाख्यप्रभेदेन विवर्तते ॥
यथा च मुखमेवैकं कृपाणमणिभेदतः ।
प्रतिबिम्बविभेदेन विविधं भुवि वर्तते ॥
प्रत्यासः परिणामश्च विवर्तश्चेति च त्रिधा ।
प्रवादास्तत्र चाध्यास एव प्रत्यासलक्षणः ॥
यथा च स्फाटिकी बुद्धिः लाक्षारुणिमगोचरा ।
यथा वा वनबुद्धिः स्यात्किंशुकादिसमूहिषु ॥
यथा वा शशशृङ्गादौ शब्दसत्त्वप्रकल्पना ।
यथा पदार्थेष्वेकत्वं स्फोटो वाक्यार्थ इष्यते ॥
तथाचाध्यास एष स्यादनेकं यत्र चैकधा ।
परिणामस्सुवर्णस्य मकुटाद्याकृतिः स्फुटा ॥
विवर्तो विविधा वृत्तिः यत्र चैकमनेकधा ।
एकं बिम्बमनेकेषूपाधिषु प्रतिबिम्बते ॥
एवं वाचस्पतेर्न्यायकणिकायां निरूपितः ।
भेदो विधिविवेकस्य व्याख्यायां अधुना पुनः ॥

समसत्ताककार्यं यत्परिणामस्स ईर्यते ।
कार्यं विषमसत्ताकं विवर्त इति गीयते ॥

4 विवर्तसिद्ध्यै चाविद्या नाम दोषः प्रकल्प्यते ।
अर्थक्रियाकारितया स भावोऽज्ञानलक्षणः ॥
तच्चाज्ञानं नाग्रहणं न मिथ्याज्ञानमप्यथ ।
नापि तत्संस्कारभेदः किंतु त्रयविलक्षणः ॥
अहमज्ञो मां न जानामीत्यध्यक्षावभासतः ।
अज्ञानसिद्धिः नाभावः धर्मिज्ञानाद्यपेक्षणात् ॥
विवादाध्यासितं ज्ञानं स्याद्वस्त्वन्तरपूर्वकम् ।
अर्थप्रकाशकत्वाद्यदेवं तद्वै तथेक्ष्यते ॥
यथा प्राथमिकी दीपप्रभा स्यात् ध्वान्तपूर्विका ।
स्वप्रागभावातिरिक्तं विषयावरणं तथा ।
स्वनिवर्त्यं स्वदेशस्थं चेति वस्तु विशेष्यते ॥
एतादृगनुमानैश्च भावाज्ञानं प्रसाध्यते ।
अविद्याबोधकं शास्त्रं बहुलं चोपलभ्यते ॥
तेनाज्ञानेन विश्वस्य रचना परिकल्पते ॥
अङ्गीकृता च प्रायेण मानमेयप्रकल्पना ।
व्यवहारे भट्टनयादिति सर्वत्र विश्रुतम् ॥

5 निर्विशेषविदां मानं मेयं स्याद्व्यावहारिकम् ।
व्यवहारानुरोधेन यथावदुपगम्यते ॥

यद्यत्र न्यायसिद्धान्तानुरोधे सोऽवकल्पते ।
तदिष्यतेऽथवा सांख्यानुरोधे सोऽपि चेष्यते ॥
यद्वा भाट्टादिसिद्धान्तस्वीकारस्स्वरसो भवेत् ।
व्यवहारस्तदा भाट्टनयोऽपि परिगृह्यते ॥
तस्मादद्वैतसिद्धान्ते यःकश्चिदपिवा भवेत् ।
व्यवहारव्यवस्थायै न विशेषोऽत्र वस्तुतः ॥
तथाऽपि विदुषां प्रायो ह्यभ्यासो वैदिके नये ।
व्यवहारे भाट्टसांख्यसंग्रहो वासनावशात् ॥

## (15) विशिष्टाद्वैतदर्शनम्.

1 विशिष्टाद्वैतसिद्धान्ते लिख्यते तत्त्वसंग्रहः ।
द्रव्याद्रव्यविभेदेन द्विविधं तत्त्वमिष्यते ॥
द्रव्यं द्वेधा विभक्तं स्यात् जडं चाजडमित्यपि ।
प्राच्यमव्यक्तकालौ स्तः ह्यन्त्यं प्रत्यक्परागिति ॥
जीवेश्वरविभेदेन प्रत्यक् द्विविधमिष्यते ।
मतिर्नित्यविभूतिश्चेत्युच्यते द्विविधं पराक् ॥
एवं द्रव्यं षड्विधं स्यात् अद्रव्यं दशधा मतम् ॥
शब्दादयः पञ्च सत्त्वं रजस्तम इति त्रयम् ॥
संयोगश्शक्तिरिति च द्वयं दशविधं ततः ।
संयोग एव कर्म स्यात् संस्थानं जातिरिष्यते ॥

समवायोऽपृथक्सिद्धिः सिद्धिः ज्ञप्तिस्थिती मते ।
भावान्तरमभावः स्यात् जातिर्भेद इतीर्यते ॥
इतरत्त्वन्यथासिद्धं द्रव्यलक्षणया धिया ।
अचिच्चिदीशभेदेन केचित्त्रेधा विविञ्चते ॥
भोग्यं भोक्ता नियन्तेति तस्यैव विवृतिस्त्वियम् ।
सर्वथेष्टं फलमिदं देहात्मेश्वरनिर्णयः ॥
तत्राव्यक्तं महदहंकारभूतादिभेदतः ।
चतुर्विंशतिधं कालः दिनमासादिभेदतः ॥
विभागवान् ईश्वरस्तु भवेदेकस्सदातनः ।
सर्वेश्वरः स्वातिरिक्तसर्ववस्तुविलक्षणः ॥
द्विलिङ्गो द्विविभूतिश्च परिपूर्णः परः पुमान् ।
जीवः पुनः नित्यमुक्तबद्धभेदादनेकधा ॥
मतिः प्रत्यात्मनियता नैकधा च विकारिणी ।
नित्यभूतिरनन्ता स्यात्परस्तात्तमसः सदा ॥
ईशान्तर्यामिकं कृत्स्नं ईशितुः कार्यमित्यपि ।
2 आधेयं च विधेयं च शेषश्चेत्यपि सम्मतम् ॥
ततश्शरीरमिति तदपृथक्सिद्धमित्यपि ।
सर्वदा सर्वथा सर्वं सर्वत्रेति विनिर्णयः ॥
3 सामानाधिकरण्योक्तस्यैक्यस्यानुपपत्तितः ।
विवर्तवादिनः केचित् तेऽविद्यावादिनोऽभवन् ॥

उपाधिवादिनः केचित्परिणामं समाश्रिताः ।
भेदाभेदं वदन्त्यन्ये विशिष्टैक्यमिमे विदुः ॥
इदं तु तत्त्वविज्ञानं तदुपासनसाधनम् ।
याथात्म्यज्ञानपूर्वस्तु व्यवहारोऽनुपप्लवः ॥
कविधीचित्रवच्चात्रानन्ता सिद्धान्तसंततिः ।
तत्त्वालोकश्शास्त्रजन्यः समस्तां लोप्तुमर्हति ॥
भक्त्या परमया वाऽपि प्रपत्त्या वा परः पुमान् ।
प्राप्योऽसौ नान्यथा प्राप्य इति सिद्धान्तसंग्रहः ॥

## (16) द्वैतदर्शनम्.

1 आनन्दतीर्थसिद्धान्ते तत्त्वोद्देशो विबुध्यताम् ।
स्वतन्त्रमस्वतन्त्रं च प्रमेयं द्विविधं मतम् ॥
स्वतन्त्रो भगवान् विष्णुः निर्दोषोऽखिलसद्गुणः ।
द्विविधं परतन्त्रं स्यात् भावाभावविभेदतः ॥
चेतनोऽचेतनश्चेति भावोऽपि द्विविधो मतः ।
नित्यमुक्ता मुक्तियोग्या मुक्त्ययोग्या इति त्रिधा ॥
चेतनोऽचेतनस्तु स्यात् नित्योऽनित्य इति द्विधा ।
नित्याः स्युः प्रकृतिः कालः वेदश्चेति त्रिधा मताः॥
असंसृष्टं च संसृष्टं इत्यनित्यो द्विधा मतः ।
महदाद्यमसंसृष्टं अण्डं संसृष्टमिष्यते ॥

2 गुणक्रियाजातिपूर्वाः धर्मास्सर्वेऽपि वस्तुनः ।
स्वरूपभूताः ये त्वेतेष्वयावद्वस्तुभाविनः ॥
भेदाभेदो मतस्तेषां स्याद्विकारविकारिणोः ।
कार्यकारणयोश्चैव तथैवांशांशिनोरपि ॥
विशिष्टशुद्धयोश्चैव भेदाभेदः स्वतो मतः ।
अयमत्र विशेषांशः ज्ञातव्यस्सर्ववादिभिः ॥
3 एके द्रव्यं गुणः कर्म सामान्यं सविशेषकम् ।
अभावश्शक्तिसादृश्ये अंशोंशीति विदुर्दश ॥
भेदहीने वस्तुनि या भेदबुद्धिनियामिका ।
शक्तिर्विशेषसंज्ञा सा मता सर्वपदार्थगा ॥
विशेषेण विभागोऽयं दशधाऽनेन कल्पते ।
व्यवहारव्यवस्था हि सर्वाऽनेनोपपाद्यते ॥
विशेषाणां तु वैशिष्ट्यं शक्तिशक्तनयात् स्थितम् ।
भिन्नाश्च भिन्नधर्माश्च पदार्थास्सकला अपि ॥
नानुवृत्ता जातिरपि द्वैतकाष्ठेयमुच्यते ।
प्राक्प्रध्वंससदाभेदात् अभावस्त्रिविधो मतः ॥
भावाभावस्वरूपत्वात् नान्योन्याभावता पृथक् ।
4 सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ॥
बन्धो मोक्षः सुखं दुःखं आवृतिर्ज्योतिरेव च ।
विष्णुनैव समस्तस्य समासव्यासयोगतः ॥

य एतत्परतन्त्रं तु सर्वमेव हरेस्सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥
घातयन्ति हि राजानो राजाऽहमिति वादिनः ।
ददात्यखिलमिष्टं च स्वगुणोत्कर्षवादिनाम् ॥
मुक्तानामाश्रयो विष्णुः अधिकाधिपतिस्तथा ।
तद्वशा एव ते सर्वे सर्वदैव स ईश्वरः ॥
जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ॥
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः ।
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ॥
नच नाशं प्रयात्येषः नचासौ भ्रान्तिकल्पितः ।
कल्पितश्चेन्निवर्तेत नचासौ विनिवर्तते ॥
महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येव विष्णोरिच्छा प्रकीर्त्यते ॥
तदिच्छयैव सकलं सर्वदा परिवर्तते ।
इति सिद्धान्तसारांशः शेषोऽन्यो ग्रन्थविस्तरः ॥

## (17) आर्हतदर्शनम्.

1 अथार्हतानां सिद्धान्ते प्रमेयपरिचिन्तना ।
प्रायो वैशेषिकान्मीमांसकांश्चाप्यनुवर्तते ॥

द्विधा च पञ्चधा चैव षोढा चापि च सप्तधा ।
नवधाऽपि विवक्षायाः भेदात्तत्त्वं विविच्यते ॥
प्रवादास्स्युर्मतसारिणः परेऽन्योन्यविपक्षतः ।
समयोऽपक्षपातोऽसौ स्यादशेषाविशेषतः ॥
सर्वज्ञो जितरागादिदोषः त्रैलोक्यपूजितः ।
यथास्थितार्थवादी च देवोऽर्हन्परमेश्वरः ॥

2 चिदचिद्द्वे परे तत्त्वे विवेकस्तद्विवेचनम् ।
तत्र बोधात्मको जीवोऽजीवोऽबोधात्मको मतः ॥
क्षायिकश्चौपशमिकः मिश्रश्चौदयिकस्तथा ।
पारिणामिक इत्येते भावाः पञ्चात्मनो मताः ॥
बद्धमुक्तविभेदेन ते जीवाः द्विविधा मताः ।
न कश्चिन्नित्यसंसारी नित्यमुक्तो न कश्चन ॥
तथैव चिदचिद्भिन्नमीशतत्त्वं च नेष्यते ।
अचिच्च पुद्गलाकाशकालादिविविधं मतम् ॥
ज्ञानाद्भिन्नो नचाभिन्नः भिन्नाभिन्नः कथंचन ।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः ॥
विज्ञानं स्वपराभासि प्रमाणं बाधवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥

3 जीवो धर्मोऽप्यधर्मश्च पुद्गलः काल एवच ।
आकाश इति षड्द्रव्यं अद्रव्यं च द्विधा मतम् ॥

गुणः पर्याय इति तत्स्वरूपं स्फुटमग्रतः ।
अनागतपरीणामावस्थं द्रव्यमितीर्यते ॥
तद्वर्तमानपर्यायं भाव इत्यभिधीयते ।
द्रूयन्ते यानि पर्यायैः पर्यायैर्वा द्रवन्त्यपि ॥
तानि द्रव्याणि निर्दिष्टान्यद्रव्यं तु तदाश्रितम् ।
पर्येत्युत्पत्तिनाशौ यः स पर्याय इतीर्यते ॥
ताथागतैर्हि पर्यायः पारमार्थिक इष्यते ।
तदाधारं त्रिकालस्थं द्रव्यं नाभ्युपगम्यते ॥
तदाहि प्रत्यभिज्ञादेर्विरोधस्स्याद्दुरुद्धरः ।
अनिरोधमनुत्पादं जगत्स्यात्पुद्गलक्षणम् ॥
4 परमाणुषु वाय्वादिविभागो नाभ्युपेयते ।
सामान्यं द्विविधं तिर्यगूर्ध्वताशब्दशाब्दितम् ॥
तुल्या परिणतिर्या तु प्रातिव्यक्ति प्रदृश्यते ।
सामान्यं तत्तिर्यगिति तद्धि गोत्वादिलक्षणम् ॥
पूर्वापरपरीणामसाधारण्येन यत्पुनः ।
तदूर्ध्वताख्यं सामान्यं कटकादिषु काञ्चनम् ॥
विशेषोऽपि द्विरूपस्स्याद्गुणपर्यायभेदतः ।
सहभावी तु यो धर्मः स गुणः परिकीर्त्यते ॥
यथा चात्मनि विज्ञानव्यक्तिशक्त्यादिलक्षणः ।
क्रमभावी तु यो धर्मः स पर्यायः प्रकीर्त्यते ॥

5 आत्मन्येव सुखं दुःखमिच्छाद्वेषादिलक्षणम् ।
यत्सम्यग्दर्शनं ज्ञानं चारित्रं चेति तत्त्रयम् ॥
मोक्षमार्गश्चावरणक्षयोपशमकारणम् ।
श्रद्धा जिनोक्ततत्त्वेषु सम्यग्दर्शनमुच्यते ॥
जायते यन्निसर्गेण गुरोरधिगमेन वा ।
अवबोधस्तमत्राहुः सम्यज्ज्ञानं मनीषिणः ॥
सर्वथाऽवद्ययोगानां त्यागश्चारित्रमुच्यते ।
कीर्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥
पूरयन्ति गलन्तीति पुद्गलाः परमाणवः ।
वर्णगन्धरसस्पर्शगुणवद्द्रव्यलक्षणाः ॥
अनन्तदेशे द्रव्येऽस्तिकायशब्दः प्रयुज्यते ।
पञ्चास्तिकायाः कीर्त्यन्ते तेऽन्येऽणोः काललक्षणात्

6 सप्तधा वादिनो दृष्टाः सत्त्वासत्त्वादिनिर्णये ।
सर्वस्यात्राभ्युपगमात् सप्तभङ्गनयास्थितिः ॥
एकस्मिन् वस्तुनि प्रश्नवशेनैवाविरोधतः ।
कल्पना सप्तभङ्गयेषा या विधिप्रतिषेधयोः ॥
वाक्येष्वनैकान्तद्योती गम्यं प्रति विशेषणम् ।
स्यान्निपातोऽर्थयोगित्वात् तिङन्तप्रतिरूपकः ॥
तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत् ।
स्यान्नास्तीति प्रयोगस्स्यात् तन्निषेधे विवक्षिते ॥

क्रमेणोभयवीक्षायां प्रयोगस्समुदायवान् ।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥
आद्यावाच्यविवक्षायां पञ्चमो भङ्ग इष्यते ।
अन्त्यावाच्यविवक्षायां षष्ठभङ्गसमुद्भवः ॥
समुच्चयेन युक्तस्य सप्तमो भङ्ग इष्यते ।
तत्सत्त्वैकत्वानित्यत्वसर्वरूपेषु नीयते ॥
सर्वोऽपि धर्मः प्रष्टव्यः सप्तधैव व्यवस्थितः ।
सर्वेऽप्यत्रान्तर्भवन्ति विधयो वेतरेऽपिवा ॥
तृतीयाद्यविवक्षायां अष्टमो भवतीति चेत् ।
द्विःसत्त्वानुपलम्भेन तृतीयात्मक एव सः ॥
तृतीयान्त्याविवक्षाऽपि ह्यसत्त्वाद्वयमूलका ।
एवं विनिगमाभावमूलशङ्कानिराकृतिः ॥
प्रमेयाम्बुजमार्ताण्डे विस्तरस्त्ववगम्यताम् ।
प्रमाणनयतत्त्वालोकालंकारेऽपि विस्तृतः ॥
आप्तमीमांसादिसिद्धः संक्षेपादिह दर्शितः ।
विरोधस्य विधूत्यैवापक्षपातीति विश्रुतः ॥
7 अथैतावन्त एवात्र पदार्थाः न परस्त्विति ।
तैस्तैः कथं विनिर्णीतः सिद्ध्यसिद्ध्योरयोगतः ॥
मैवं योऽस्त्येष संसिद्धान्न परस्त्विति कीर्तने ।
न दोषोऽस्ति प्रवक्तॄणां विकल्पानवकाशतः ॥

अधिकानधिकाशङ्का सत्येव स्यात्तवापिहि ।
नैवंचेन्नैव शङ्का वा परिहारोऽपि वा भवेत् ॥
तथाचात्रत्यैवकारः नान्ययोगनिषेधकः ।
एतावत्त्वायोगमेव छिनत्तीत्यवबुद्ध्यताम् ॥

(18) शक्तिवादः.

1 अतिरिक्तं पदार्थं तं शक्तिं ये गुरवो विदुः ।
अनुमानप्रमाणस्य प्रमेयं ते विजानते ॥
शक्तेर्गुणत्वमिच्छन्तो गुणलक्षणसंगतेः ।
अर्थापत्त्याऽधिगम्यां तां प्राहुः कौमारिला यथा ॥
यादृशादग्निसंयोगात्सर्वथा दाहदर्शनम् ।
तादृशादेव मन्त्रादिप्रयोगे तददर्शनात् ॥
अग्निसंयोगातिरिक्तं यत्किंचित्कारणान्तरम् ।
अस्ति दृश्यमदृश्यं वेत्येषा साधारणा प्रमा ॥
दृश्यादर्शनजाभावप्रमाणेन विहन्यते ।
तत्रानयोर्विरोधे सत्यविरोधाय कल्प्यते ॥
अदृश्यं कारणं किंचिद्द्रव्यकर्मगुणाश्रयम् ।
शक्तित्वसामान्ययोगात्सा शक्तिरिति गीयते ॥
2 आधेया सहजा चेति द्विविधां तां प्रचक्षते ।
आद्या व्रीह्यादिसंस्कारः वह्न्यादौ स्यादनन्तरा ॥

3 अत्र वैशेषिकाः प्राहुः शक्तिं नाभ्युपयन्ति ये ।
संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ॥
स्वगुणाः परमाणूनां विशेषाः पाकजादयः ।
भावो यथा तथाऽभावः कारणं कार्यवन्मतः ॥
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ।
स्वरूपादुद्भवत्कार्यं सहकार्युपबृंहितात् ॥
नहि शक्तं कल्पयितुं शक्तिमन्यामतीन्द्रियाम् ।
एतत्पद्यं पठन्तीत्थं त एते शक्तिवादिनः ॥
स्वरूपात् क्वाप्यनुद्यत्तत्सहकार्युपबृंहितात् ।
किं न कल्पयितुं शक्तं शक्तिमन्यामतीन्द्रियाम् ॥
4 इदं फलं शक्तिवादे तत्तद्वाद्यभिसंहितम् ।
करणं चाप्यकरणं क्षणभङ्गस्य कारणम् ॥
निरास्थन् वैदिकाश्शक्त्या तार्किकास्सहकारिणा ।
स्वभाववादावकाशः शक्तिवादे प्रसज्यते ॥
इति तार्किकसंत्रासः ह्यर्थस्वाभाविकाः परे ।
रहस्यमेतदेव स्यात्सामान्याच्छक्तिवादिनाम् ॥
5 कार्यानुकूलमपृथक्सिद्धं यत्तु विशेषणम् ।
तच्छक्तिशब्दितं सर्वं विष्णुशक्तिरतः स्मृतम् ॥
न शक्तिः शक्तमात्रं स्यात् सर्वाद्वैतप्रसक्तितः ।
नचापीष्टापत्तिरत्र जयी स्यान्मध्यमागमः ॥

इति भेदविदामौपनिषदानां परिष्कृतिः ।
अभेदविदुषां शक्तितद्वतोः भेदनिह्नवः ॥
वटबीजे वृक्षशक्तिः ह्याश्रयान्न विभिद्यते ।
कया चिदपि युक्त्येति तादात्म्यविभवो ह्यसौ ॥
तादात्म्यतत्त्वे तत्सर्वं स्पष्टमग्रे निरूप्यते ।
यत्र चैवौपनिषदा बहुधा हि विशेरते ॥

(19) शब्दशक्तिवादः.

1 शब्दशक्तिविशेषे तु रहस्यं बहु विद्यते ।
तदप्यत्रैव संक्षिप्य सूचयामः कुतूहलात् ॥
शब्देऽनवयवे स्फोटे तदर्थे जातिलक्षणे ।
अध्यासलक्षणा शक्तिस्संबन्ध इति शाब्दिकाः ॥
शब्दार्थयोश्च संबन्धं केचित्तादात्म्यलक्षणम् ।
नित्यं चाभ्युपगच्छन्ति परिणामं तु केचन ॥
तद्बिम्बप्रतिबिम्बत्वं कैश्चिदत्र विकल्प्यते ।
एवं तयोर्योगभेदाः स्युर्जगद्ब्रह्मणोरिव ॥
2 शाक्यदृष्ट्या तु शब्दार्थे बौद्धे विज्ञाननीतितः ।
कार्यकारणभावाख्यस्संबन्ध इति निश्चितम् ॥
3 शब्दशक्तिर्योग्यताख्या वह्नेरौष्ण्यादिशक्तिवत् ।
रूपादिज्ञानजनने चक्षुरादेरिवेष्यते ॥

स्वाभाविकी सा शब्दानां विज्ञातैवार्थकारिणी ।
यतश्शब्दार्थसंबन्धो बोध्यबोधकतैव सः ॥
धूमादीनां तु संबन्धान्तरात् गमकता मता ।
चेष्टावद्बोधकत्वं स्याद्यदि संकेतमूलकः ॥
संकेतकर्तृपुरुषाज्ञानं चात्रास्ति बाधकम् ।
इति शब्दार्थसंबन्धनित्यतावादिनो विदुः ॥
ते च मीमांसकाः पूर्वोत्तराः नव्याश्च शाब्दिकाः ।
यथात्र वैयाकरणभूषणोक्तं विमृश्यताम् ॥
इन्द्रियाणां स्वविषये ह्यनादिर्योग्यता यथा ।
अनादिरर्थैश्शब्दानां संबन्धो योग्यता तथा ॥
शाब्दधीजनकत्वावच्छेदकत्वेन वीक्षितः ।
स्वीकर्तव्यः पुनः शब्दः सङ्केतेनार्थबोधकः ॥
अर्थधीजनकत्वेन ज्ञातः शब्दस्स्वभावतः ।
बोधकस्स्यादिति मते लाघवं परिदृश्यते ॥
ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानां द्वे शक्ती अपि ते विदुः ॥
तस्मात्स्वभावसिद्धान्तो वरं समयकल्पनात् ।
अत्र नैयायिकमनोरथतत्त्वं विचिन्त्यताम् ॥
4 नैयायिकाः पुनः प्राहुः शक्तिं सङ्केतलक्षणाम् ।
इच्छा हि किल सङ्केतः नित्योऽनित्योऽपिवाऽस्तु सः

बौद्धा वैशेषिकाश्चैव शब्दमानापलापिनः ।
कथंचिदनुमानान्तर्भावमेते प्रचक्षते ॥
स्वाभाविकस्तु संबन्धश्शक्तिर्यद्युपगम्यते ।
निरुपाधिकसंबन्धो व्याप्तिरेव स निश्चितः ॥
शब्दोऽनुमानमेव स्यादतस्सङ्केत इष्यते ।
अत्र वैदिकसिद्धान्तसमाधिरवगम्यताम् ॥
सङ्केतो वाऽतिरिक्तो वा योऽविनाभावरूपतः ।
ज्ञातश्चेदनुमैव स्यात् न स्यात् ज्ञातः स्वरूपतः ॥
तथात्वप्रतिसंधानाभावेऽप्यनुभवोदयात् ।
शब्दो मानान्तरं तस्मादन्यथा सर्वविप्लवः ॥
अत्र प्राभाकराः प्राहुश्शब्दस्स्याल्लौकिकोऽनुमा ।
वैदिकस्त्वतिरिक्तोऽस्त्वित्येषाऽर्धजरतीयता ॥
सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः ।
इति न्यायः स्वीकृतः स्यादिति तत्त्वविदो विदुः ॥
5 शक्तेरस्याः पुनश्शक्यविकल्पोऽप्यवधार्यताम् ।
व्याडी च वैयाकरणः व्यक्तिशब्दार्थवाद्यसौ ॥
वाजप्यायननामा यः जातिशब्दार्थवाद्यसौ ।
6 शक्तिर्जात्याकृतिव्यक्तिष्विति नैयायिका विदुः ॥
जातिव्यक्त्योरेव शक्तिर्गुणकर्माभिधायिनाम् ।
न तयोराकृतिर्यस्मात्प्रतीकव्यूहलक्षणा ॥

आकाशाद्या जातिहीनाः शब्दास्स्युः पारिभाषिकाः
ते शब्दाद्याश्रयतया शाब्दधीहेतवो मताः ॥
यथा न स्याल्लक्ष्यतावच्छेदके लक्षणा तथा ।
शक्यतावच्छेदकेऽपि शक्तिर्नव्यैर्नचेष्यते ॥

7 अथ भाट्टैः शक्तिरेषा जातावेवाभ्युपेयते ।
जातिरेवाकृतिस्तेषां व्यक्तिराक्रियते यया ॥
जातेश्चोपस्थितिः शक्त्या निर्विकल्पकलक्षणा ।
आक्षेपाद्व्यक्तिलाभस्स्यादाक्षेपोऽप्यनुमा मता ॥
स्यादर्थापत्तिरथवा जातिहीनास्तु ये स्वनाः ।
अखण्डोपाधयस्तेषामर्था नित्या हि तन्मताः ॥

8 शक्तिर्जातौ व्यक्तिलाभो लक्षणाधीन इष्यते ।
इति मण्डनसिद्धान्तः गदाधरसुधीरितः ॥
जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणायाः व्यक्तेस्ते हि विशेषण ॥
इति पद्यं शक्तिवादे मानत्वेन ह्यनूदितम् ।
वाक्याधिकरणे श्लोकवार्तिकेऽपिच दृश्यते ॥

9 व्यक्तेरौपादानिकी स्याद्बुद्धिरित्यपरे विदुः ।
एष श्रीकरसिद्धान्तः शक्तिवादे निरूपितः ॥
यदत्रानुपपत्तेस्तु प्रतिसंधानमुच्यते ।
उपादानं नाम तत्स्यात् सैषार्थापत्तिरन्ततः ॥

10 शक्तिर्जाताववेव तत्र शक्तिधीरेव बोधिका ।
व्यक्तेरिति विदुः प्राभाकराः बोधक्रमस्त्वसौ ॥
व्युत्पत्तितो जातिशक्तिज्ञानाज्जातिप्रकारतः ।
व्यक्तिस्मृतिः तथैव स्यात् शाब्दधीरिति तन्मतम् ॥

11 जातिज्ञाने शक्तिरिति जरन्मीमांसकाः विदुः ।
ज्ञाने शक्तमिति ज्ञानाच्छाब्दबोधस्तु तन्मते ॥

12 गुर्वेकदेशिनः व्यक्तौ कुब्जशक्तिं प्रचक्षते ।
कुब्जत्वं च स्वरूपेण व्यक्तौ शक्तेस्तु हेतुता ॥
प्रतिबन्धं विना पक्षधर्मताशक्तिवैभवात् ।
लिङ्गं लिङ्गिविशेषे तु यथा वै पर्यवस्यति ॥
विनाऽपि संगतिं शक्तिविशेषात्पर्यवस्यति ।
व्यक्तौ शक्तिरिति प्राहुः कुब्जशक्तिविदो बुधाः ॥
यस्याः कारणता शक्तेः शाब्दबोधे न विद्यते ।
सा कुब्जा रुचिदत्तस्य मकरन्दकृतो मता ॥

13 सर्वेष्वर्थेषु शक्तास्स्युस्सर्वे शब्दाः स्वभावतः ।
समयान्नियमस्सिद्ध इत्यप्याहुः कुमारिलाः ॥
सर्वाकारपरिच्छेद्यशक्तेऽर्थे वाचकेऽपिवा ।
सर्वाकारार्थविज्ञानसमर्थे नियमः कृतः ॥
एष सार्वात्म्यसिद्धान्तः नैरात्म्यैकान्तभञ्जकः ।
पदार्थास्तित्वसिद्धान्तवादिनां प्रायशो मतः ॥

अन्ये दार्शनिकास्तत्र यंकंचिन्मार्गमाश्रिताः ।
एतावताऽस्तूपरमः बुधा विस्तरभीरवः ॥

(20) सादृश्य वादः

1 सादृश्यनामकः कश्चित्पदार्थस्सर्ववस्तुगः ।
नानाप्रकारः प्रत्यक्ष इति प्राभाकरा विदुः ॥
तदेव चोपमानस्य प्रमेयमिति कीर्त्यते ।
दृश्यमानार्थसादृश्यात्स्मर्यमाणार्थगोचरम् ॥
असन्निकृष्टसादृश्यज्ञानं ह्युपमितिर्मता ।
गवयस्थितसादृश्यदर्शनं करणं मतम् ॥
फलं गोगतसादृश्यज्ञानमित्यभिधीयते ।
वेदार्थनिर्णये तस्य चोपयोगोऽवधार्यताम् ॥
सौर्यवाक्ये तु संदृष्टे चौषधिद्रव्यकत्वतः ।
एकदैवत्यत्वतश्च ह्याग्नेयमुपतिष्ठते ॥
तस्मिंश्चोपमिते तेन तदर्थोऽपि प्रमीयते ।
सौर्येणाग्नेयवद्ब्रह्मवर्चसं भावयेदिति ॥
एवं शास्त्रोपयोगित्वात् प्रमेयत्वात्पृथक्त्वतः ।
सादृश्यं नाम सिद्धोऽस्ति पदार्थः सार्वलौकिकः॥

2 कुमारिलस्य सिद्धान्ते सादृश्यं नातिरिच्यते ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥

एकस्य वस्तुनस्स्वावयवे कर्मणि वा गुणे ।
समवेतैश्च सामान्यैः योगो येन प्रकारतः ॥
तेनैवच प्रकारेण योगो वस्त्वन्तरस्य तत् ।
अतस्संबन्धिसामान्ययोगस्सादृश्यमुच्यते ॥
स च योगोऽनुवृत्त्याख्यः सप्रतिद्वन्द्विलक्षणः ।
सादृश्यमेव सारूप्यं सामान्यं चेति निर्णयः ॥
सदृशावयवत्वं तु यत्र पद्मदळाक्षिवत् ।
तत्स्वावयवसामान्यभूम्ना तेषां भविष्यति ॥
एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्वित्रिसामस्त्यभेदादेतस्य चित्रता ॥
न धर्मा एव सादृश्यं भूयस्ता वा तदाश्रया ।
भूयस्त्ववद्धि जात्यादि सदृशत्वेन दृश्यते ॥
क्वचिच्च भूयसामेतत् क्वचिदल्पीयसामपि ।
नैतावता विशेषेण वस्तुत्वं तस्य हीयते ॥
सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ।
अनन्ताश्रययोगाच्च न नाशोऽन्यत्र विद्यते ॥
तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ।
सर्वस्य ह्याश्रयः कश्चित् अस्ति देशान्तरादिषु ॥
सदृशावयवत्वं तु यत्र नाम प्रतीयते ।
तदप्यवयवानां स्यात् समानावयवान्तरैः ॥

रूपगन्धरसानां च कस्यचित्तुल्यता क्वचित् ।
नावश्यं सर्वसामान्यात् सादृश्यमुपजायते ॥
धर्माणां नच नानात्वमस्ति चावान्तरस्थितिः ।
तेन भिन्नमभिन्नं च सादृश्यमिति निर्णयः ॥
सादृश्यं न त्ववस्तु स्यान्नापि तत्त्वान्तरं मतम् ।
किंतु संबन्धिसामान्ययोग इत्यवधारितम् ॥
3 तद्भिन्नत्वे च तन्निष्ठभूयोधर्मानुयोगिता ।
सादृश्यं ते पुनर्धर्माः जातिकर्मगुणादयः ॥
इति वैशेषिकप्राञ्चः नव्यास्तस्यातिरिक्तताम् ।
आहुरेते न सप्तैव पदार्था इति वादिनः ॥
4 सारूप्यमेव सामान्यं तच्च सादृश्यमित्यपि ।
इतिचाकृतिवादे हि सांख्यसिद्धान्त ईरितः ॥
सारूप्यमेव सामान्यं पिण्डानां येन कल्प्यते ।
तेन सारूप्यशब्देन किं पुनः प्रतिपद्यते ॥
समानरूपभावश्चेत् जातिस्साऽस्माभिरिष्यते ।
सादृश्यमथ सारूप्यं कस्य केनेति कथ्यताम् ॥
नचावयवसामान्यैर्विना सादृश्यकल्पना ।
सामान्यप्रत्ययोत्पादो न विशेषेषु जायते ॥
व्यक्तितश्चातिरेकोऽस्य स्यान्न वेति विचारिते ।
सामान्यमेव सादृश्यं भवेद्वा व्यक्तिमात्रकम् ॥

तेन नात्यन्तभिन्नोऽर्थः सारूप्यमिति वर्णितम् ।
ग्रन्थे विन्ध्यनिवासेन भ्रान्तेः सादृश्यमुच्यते ॥
इतिचाकृतिवादान्ते सांख्यानां विन्ध्यवासिनाम् ।
सामान्यमेव सादृश्यं न तत्त्वान्तरकल्पना ॥
तत्त्वतोऽनवगत्यैव त्वर्थे सादृश्यलक्षणम् ।
सामान्यनिह्नवः कैश्चित्कृत इत्युपपादितम् ॥
सारूप्यमेव सामान्यमिति युक्तं न सांख्यवत् ।
विजातीयेषु तद्दृष्टेः गवादिगवयादिषु ॥
इत्याह न्यायमञ्जर्यां शब्दनित्यत्वरूपणे ॥

5 न वस्तुरूपं सादृश्यं वासनामात्रनिर्मितम् ।
प्रतियोगिमतिं यस्मादपेक्ष्यैवावबुद्ध्यते ॥
तज्ज्ञानं च ततः शाक्यैः प्रत्यक्षाभासमिष्यते ।
यतश्च कल्पनाध्यक्षवादिनः ते प्रकीर्तिताः ॥

(21) तमोवादः.

1 तमः खलु चलं नीलं बहुलं विरलं परम् ।
अपरं च महद्दीर्घं ह्रस्वं चेति प्रतीयते ॥
कदाचिदपि कस्यापि नैव बाधोऽत्र दृश्यते ।
प्रभामण्डलवच्चेदं द्रव्यमित्येव वैदिकाः ॥

2 पृथिव्या एव भेदोऽयं तमस्स्यादितिकेचन ।
प्रकृतेरेव भेदस्स्यादिति वेदान्तिनो विदुः ॥

आलोकेनोत्सारितत्वात् विनष्टत्वादथापिवा ।
अभिभूतत्वतो वाऽपि तन्मध्ये नोपलभ्यते ॥
विषयाच्छादकत्वं तु तमसो नहि युक्तिमत् ।
तमोऽव्यवहितालोकस्थितनानार्थदर्शनात् ॥
अतो मर्त्यादिदृष्टीनां दृश्यसंबन्धमात्रतः ।
दर्शनप्रतिघातित्वं स्वभावात्तमसि स्थितम् ॥
वायू रूपेण रहितः स्पर्शेन सहितो यथा ।
तथा रूपेण सहितं स्पर्शेन रहितं तमः ॥

3 गुरूणां तु मते तेजोहीनाधिकरणं तमः ।
ग्राहकात्मोपलब्धेश्च नीलरूपस्मृतेरपि ॥
नीलं तम इति ज्ञानं भेदाग्रहनिबन्धनम् ।
आलोकक्रियय़ैव स्याज्ज्वलतिप्रत्ययोऽपिच ॥

4 तेजोऽभावस्तम इति काणादकिरणावलिः ।
अन्धसाधारणं रूपज्ञानाभावं विदुः परे ॥
आरोपितं निरालोके देशे मालिन्यवत्तले ।
नीलं रूपं तम इति सिद्धान्तः कन्दळीकृतः ॥

5 अणवः सर्वशक्तित्वात् तमश्छायाऽऽतपात्मना ।
अभ्राणीव प्रचीयन्त इति प्राहुरिहार्हताः ॥

6 निरधिष्ठानविज्ञानवादिवैभाषिकादयः ।
केशोण्डूकादिविज्ञानं भ्रम इत्यभिमन्वते॥

7 भूच्छायादर्शनं लोके तमोदर्शनमुच्यते ।
इत्युक्तवानपि विधिविवेके किल मण्डनः ॥
एवंरूपः तमस्तत्त्वे विकल्पः परिदृश्यते ।
निरूप्यते यथा यच्च तत्तथा व्यवतिष्ठते ॥

(22) कालवादः

1 सांख्यसौगतचार्वाकैः क्रियते कालनिह्नवः ।
वैशेषिकादयः कालं मन्यन्ते दुरपह्नवम् ॥
अनुमेयं विदुः प्रायः परे दार्शनिकाः पुनः ।
प्रत्यक्षगोचरं प्राहुः इत्थमेषोऽपलप्यते ॥
उपाधिभिर्वा बुद्धिस्थैः तादृग्भिर्वाऽथ बुद्धिभिः ।
व्योमादिभिर्वा विभुभिः कालं निह्नुवते बुधाः ॥
नतावद्दृश्यते कालः प्रत्यक्षेण घटादिवत् ।
चिरक्षिप्रादिबोधोऽपि कार्यमात्रावलम्बनः ॥
नचामुनैव लिङ्गेन कालस्य परिकल्पना ।
प्रतिबन्धो हि दृष्टोऽत्र न धूमज्वलनादिवत् ॥
प्रतिभासातिरेकस्तु कथंचिदुपपत्स्यते ।
प्रचितां कांचिदाश्रित्य क्रियाक्षणपरंपराम् ॥
नचैष ग्रहनक्षत्रपरिस्पन्दस्वभावकः ।
कालः कल्पयितुं युक्तः क्रियातो नापरो ह्यसौ ॥

मुहूर्तयामाहोरात्रमासर्त्वयनवत्सरैः ।
लोके काल्पनिकैरेव व्यवहारो भविष्यति ॥
यदि त्वेको विभुर्नित्यः कालो द्रव्यात्मको मतः ।
अतीतवर्तमानादिभेदव्यवहृतिः कुतः ॥
तादृक्स्वभावसहितः कालो यद्यातिरिच्यते ।
सिद्धस्यैवहि तादृक्षस्वभावोपगमो वरम् ॥
2 अथानुमेयसिद्धान्तः संगृह्यात्र प्रदर्श्यते ।
परापरं चिरं क्षिप्रं युगपत्क्रमिकं त्विति ॥
व्यवहाराः पुनः सूर्यपरिस्पन्दनिबन्धनाः ।
मूर्तैस्साक्षान्न संसर्गः कर्मणामर्कवर्तिनाम् ॥
क्रियोपनायकः कश्चित्स्यादेवोभयसंयुतः ।
परत्वादौ हेतुरेतत्संयोगोऽसमवाय्यसौ ॥
नाकाशेनान्यथासिद्धिः अविशेषाद्दिगादिभिः ।
दिक्कालावीश्वरान्नव्यैरतिरिक्तौ नचेष्यते ॥
स एवात्रोपनेता स्यादित्येतेषां हृदि स्थितम् ।
अप्रत्यक्षत्वमात्रेण नच कालस्य नास्तिता ॥
युक्ता पृथिव्यधोभागचन्द्रमःपरभागवत् ।
प्रत्यक्षत्वादुपाधीनां प्रत्यभिज्ञादिसंभवः ॥
उपाधयः स्वरूपेण कालश्चेदनवस्थितिः ।
चिरेणास्तंगतो भानुः शीतांशुः शीघ्रमुद्गतः ॥

उदिताविव दृश्येते युगपद्भौमभार्गवौ ।
इत्यादिव्यवहारेण तदुपाधिगवेषणात् ॥
ननु त्वत्कल्पितः कालः स्वत एव क्रमात्मकः ।
हेत्वन्तराद्वा प्रथमे कार्याणि न कुतस्स्वतः ॥
द्वितीये त्वनवस्था स्यात् अन्यस्मादित्यपेक्षणात् ।
मैवं, शुक्लगुणादावप्येवं वक्तुं हि शक्यते ॥
स्वतोऽस्य तत्स्वभावत्वे द्रव्यस्य न कुतस्तथा ।
गुणान्तरस्यापेक्षायामनवस्था प्रसज्यते ॥
स्वतः क्रमाद्यात्मकोऽसौ काल इत्यवधार्यते ।
नाध्वव्यङ्ग्यः काल एषः वर्तमानविलोपतः ॥
3 किंतु क्रियाव्यङ्ग्य इति सौगतेतरपद्धतिः ।
रहस्यं पक्षयोस्तत्र संक्षेपादिह सूच्यते ॥
कालो यदि क्रियाव्यङ्ग्यः क्षणिकत्वं न सिद्ध्यति ।
क्षणिकास्सर्वसंस्काराः अस्थिराणां कुतः क्रियाः ॥
इति सिद्धान्तभङ्गस्स्यात् इति सौगतमानसम् ।
पतितः पतितव्यश्च देशो द्विविध एवहि ॥
4 वर्तमाननिषेधे च भवित्री विश्वनिह्नुतिः ।
न ह्यतीतं भविष्यद्वा प्रत्यक्षविषयोऽस्ति नः ॥
वर्तमानभ्रमश्चात्र तत एव न सिद्ध्यति ।
पौर्वापर्यातिरिक्ता तु दुस्त्यजा वर्तमानता ॥

अतीतागामिधीरेव वर्तमानमतिर्यदि ।
भूतभाविसमस्ताप्तया न शोकादिसमुद्भवः ॥
पूर्वापरत्वसंभेदे वर्तमानमतिर्यदि ।
त्रिकालस्थेऽपि तत्सिद्धेः क्वातीतागामिता भवेत् ॥
प्रारब्धश्चासमाप्तश्च वर्तमानो य उच्यते ।
व्यापारसमुदायोऽसौ विवक्षितफलावधिः ॥
तत्रापि क्षणभेदेन नष्टत्वादिविकल्पतः ।
वैवक्षिकमिहान्यच्च वर्तमानत्वमक्षतम् ॥
सत्त्वं यद्वर्तमानत्वं कालसंबन्धलक्षणम् ।
तस्य स्वपरनिर्वाहान्नानवस्था प्रसज्यते ॥
मानसंबन्धरूपं तु सत्त्वं सर्वगतं मतम् ।
सत्त्वमित्थमविद्वांसः कालोऽसन्निति बभ्रमुः ॥
विशेषलिङ्गाभावेन तल्लिङ्गस्याविशेषतः ।
एकस्तथा विभुश्चापि सर्वत्र व्यवहारतः ॥
आश्रयानुपलम्भेन निरंशो नित्य एवच ।
द्रव्यं चेति स्वीकृतोऽसाविति वैशेषिकाशयः ॥
5 शैवादिभिः पुनः कालो ह्यनित्योऽव्यापकोऽपिच ।
हेतुः परिमितं कार्यं प्रतीत्यभ्युपगम्यते ॥
नित्यता सर्वदा सत्ता नहि कालस्य संभवेत् ।
यतः कालान्तरं नास्ति किंतु ध्वंसविहीनता ॥

कालतत्त्वस्य चोत्पत्तिं विनाशं चानुजानताम् ।
उत्पत्तेः प्राक्च पश्चाच्चेत्याद्या वाचो निरर्थकाः ॥

6 कालतो देशतो वाऽपि व्यतिरेकस्य चाग्रहात् ।
कथं च नित्यस्य विभोः कालादेर्हेतुतेति चेत् ॥
धर्मिग्राहकमानेन कारणत्वमिहेष्यते ।
क्वचिल्लोकोपदेशेनाप्यस्ति कारणताग्रहः ॥
कारणत्वं तु नियतप्राग्वृत्तित्वं ननूच्यते ।
अस्मिन् सत्येवेदमिति नियमः सुग्रहः कथम् ॥
प्रसंगतोऽपि नियमसिद्धिस्स्यादिह तद्यथा ।
यद्येतन्न भवेत्सर्वं नोत्पद्येत ततस्त्विदम् ॥
सर्वोत्पत्तिनिमित्तं स्यादित्यत्रास्ति प्रसंजनम् ।
इदं यत्र यदा नास्ति नास्ति तत्र तदाऽखिलम् ॥
इत्याकारस्तु नियमः नहि तत्र विवक्षितः ।
अतः कालस्सर्वहेतुरित्युक्तिर्न विरोत्स्यते ॥

7 इति कालानुमेयत्ववादिनां रीतिरीरिता ।
अथ तत्प्रत्यक्षवादिवैदिकानां मतिस्त्वियम् ॥
कालोऽनादिरनन्तश्च प्रत्यक्षश्चेति सम्मतः ।
विशेषणतया कार्यप्रत्यये प्रतिभासनात् ॥
कालोपश्लिष्टवेषेण ह्यभूदस्तिभविष्यतीन् ।
प्रयुञ्जतेऽर्थभेदेषु सदा चास्तिमनेहसः ॥

तस्मात्सर्वेन्द्रियग्राह्य इति तत्त्वविदां मतम् ।
सर्वेन्द्रियज्ञानवादो यथा सत्तागुणत्वयोः ॥
कालांशस्यानुमेयत्वे पदार्थेऽपि प्रसज्यते ।
तदा सौत्रान्तिकादीनां कोऽपराधोऽतिरिच्यते ॥
कालानुमेयवादे तु पामराणामधोगतिः ।
कालानुमा चोक्तरीत्या सर्वदा न विपश्चिताम् ॥
क्रमेण युगपत् क्षिप्रं चिरात्कृतमितीदृशाः ।
प्रत्यया नावकल्पन्ते कार्यमात्रावलम्बनाः ॥
अरूपो नन्वयं कालः कथं गृह्येत चक्षुषा ।
रूपमेव तवारूपं कथं गृह्येत चक्षुषा ॥
कथं वा रूपवन्तोऽपि परोक्षाः परमाणवः ।
तस्मात्प्रतीतिरन्वेष्या किं निमित्तपरीक्षया ॥
नचानुद्घाटिताक्षस्य चिरादिप्रत्ययोदयः ।
तद्भावानुविधानेन कालस्स्यादेव चाक्षुषः ॥
एवं गुरु द्रव्यमिति प्रत्ययात्तदपीदृशम् ।
पूर्वापरप्रत्ययेन दिशोऽप्यध्यक्षतां विदुः ॥
8 नित्योऽप्येकोऽप्यसौ कालः द्रव्यत्वाद्विदुरो मतः ।
अवस्थाभेदतः ते चोपाधिसंबन्धलक्षणाः ॥
स्वयं विक्रियतेऽजस्रं स क्षणाद्यात्मनेत्यपि ।
यद्यादवप्रकाशोक्तं तदप्यनुमतं बुधैः ॥

अत एवच मासादेः स्याद्विवक्षानुसारतः ।
आद्यन्तमध्यमोत्पत्तिक्षणप्रभृतिकल्पना ॥
क्षणादिभेदाभावे तु कथं वा स्यादुपाधिभिः ।
भेदस्तेषां कालमात्रे संबन्धान्निर्विशेषणे ॥
विकारपक्षे कृत्स्नैकदेशयोगविकल्पना ।
परिहार्या ह्याश्रयैकदेशवृत्तिगुणादिवत् ॥
उपाधिसंबन्धमात्रपक्षेऽपि न विशिष्यते ।
परिहारोऽयमिति च प्राहुर्लाघवदृष्टयः ॥
स्पन्दसंततिसिद्ध्यर्थं कालस्याणुत्वकल्पनम् ।
आशावसनसिद्धान्ते युक्तिचातुर्यजृम्भितम् ॥
क्रियासंततिवत्काले परिणामपरंपरा ।
किं न स्यात्स्वापकर्षाद्यैः परत्वादिप्रसाधिका ॥
9 एकाश्रयक्रियासंख्या काल इत्यपरे विदुः ।
तदुपाधिविशेषाणामुपलक्षणतत्परम् ॥
अव्यक्तं परमाकाशः कालश्चेति त्रिधा स्थिता ।
सैषा प्रकृतिरित्यन्ये ह्येकदेशविदो बुधाः ॥
10 कालोपाधिविशेषाश्च मञ्जरीप्रकटीकृताः ।
संगृह्यन्ते सुमनसां स्वान्तविक्षेपशान्तये ॥
चञ्चुग्रचुम्बितातामचूताङ्कुरकदम्बकैः ।
कथ्यते कोकिलैरेव मधुः मधुरकूजितैः ॥

दिवाकरकरालातपातनिर्दग्धवीरुधः ।
मार्गाऽऽसमल्लिकामोदा भवन्ति ग्रीष्मशंसिनः ॥
शिखण्डमण्डनारब्धोद्दण्डताण्डवडम्बरैः ।
प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः ॥
मौक्तिकाकारविस्तारितारानिकरचित्रितम् ।
शरत्पिशुनतां याति यमुनाम्भोनिभं नभः ॥
आयामियामिनीभोगसफलाभोगविभ्रमाः ।
हेमन्तमभिनन्दन्ति सोष्माणस्तरुणीस्तनाः ॥
आस्कन्दनदलत्कुन्दकलिकोत्करदन्तुराः ।
वदन्ति शिशिरं वाताः तुषारकणकर्कशाः ॥
तस्मादेकोऽप्ययं कालः क्रियाभेदाद्विभिद्यते ।
एतेन सदृशन्यायात् मन्तव्या दिक्समर्थिता ॥
11 कौमारिलाश्श्रावणत्वमाहुर्दिक्कालयोरपि ।
कालश्चैको विभुर्नित्यः प्रविभक्तोऽधिगम्यते ॥
वर्णवत् सर्वभावेषु व्यज्यते केनचित्क्वचित् ।
आनुपूर्वी च वर्णानां ह्रस्वदीर्घप्लुताश्च ये ॥
कालस्य प्रविभागास्ते जायन्ते ध्वन्युपाधयः ।
तस्मात्सर्वेन्द्रियग्राह्यः सत्तावत्काल इष्यते ॥
12 अथ पातञ्जलाः कालं महान्तं नोपयन्ति ते ।
क्षणैरेव मुहूर्तादिव्यवहारं प्रचक्षते ॥

कालेन यावता पूर्वं देशं जह्याच्चलन् अणुः ।
संपद्येतोत्तरं देशं स कालः क्षण उच्यते ॥
क्षणः कालकला पूर्वापरभागविवर्जिता ।
स एव वस्तुतः कालः क्रमस्याप्यवलम्बनम् ॥
मुहूर्ताहोरात्ररूपः बुद्धिनिर्माणलक्षणः ।
वस्तुशून्यो लौकिकानां वस्त्वात्मेवावभासते ॥
क्षणतत्क्रमयोर्नास्ति समाहारो न वस्तुतः ।
तस्माद्बुद्धिसमाहारः मुहूर्तादिरिति स्थितम् ॥
अनेन चैव न्यायेन संख्यां द्वित्वादिलक्षणाम् ।
एकत्वेनान्यथासिद्धां कुर्वन्ति सुधियोऽपरे ॥
आर्हतानामेवमेव कालोऽणूनां समुच्चयः ।
तेनैव भूतभाव्यादिव्यवहारो निरूपितः ॥
तथा महाकालमेके खण्डमेकेऽथचोभयम् ।
इति त्रिधा कालसत्त्वे सिद्धान्ता इति निर्णयः ॥

## (23) आकाशवादः

1 चत्वार्येव हि भूतानि नाकाशमतिरिच्यते ।
व्योमादिशब्दाः व्यामोहमात्रनिघ्ना इतीरिताः ॥
शून्यधातौ खपुष्पादौ निस्तत्त्वेऽप्यस्ति वाचकः ।
योऽयमावरणाभावो निस्स्वभावश्च संमतः ॥

अवकाशोऽयमाकाश इति चार्वाकसौगताः ।
नत्रुपश्लेषविरहादसद्रूपतिरस्कृतिः ॥
अपोहजातिवादे च यथा वस्तुतयैव धीः ।
वासनावशतस्तद्वत् परीक्षायां तु शून्यता ॥
तलत्वं मलिनत्वं च विपुलत्वं तथाऽल्पता ।
बालातपादिसांनिध्येनारुण्याद्यपि दृश्यते ॥
केशोण्डूविभ्रमनिभाः निराधिष्ठानविभ्रमाः ।
दुःखाभावे सुखाध्यासः स्यात्सर्वजनसाक्षिकः ॥
तेजोऽभावे च नीलादिरध्यस्तो न्यायविन्मतः ।
अतीतेषु च वर्णेषु क्रमस्संख्या च दृश्यते ॥
अतीतानागतादौ च प्राकट्यं वित्तिवेद्यता ।
स्मृतेः प्रमोषो नीलादिवस्तूनामिति केचन ॥
2 समवायितया शब्दस्याकाशः परिशेषतः ।
अनुमानात्सिध्यतीति प्राहुर्वैशेषिकादयः ॥
स च नित्यो विभुश्चैक इति लाघवयुक्तितः ।
उपाधिभेदात्कार्याणामुपष्टम्भक इष्यते ॥
नेश्वरादतिरिच्यन्ते दिक्कालगगनानि तु ।
इति लाघवविज्ञानाः प्राहुर्ये नव्यतार्किकाः ॥
3 उद्भूतरूपमाकाशं विदुस्सांशं च चाक्षुषम् ।
सांख्याः प्राथमिकं भूतं अवकाशप्रदं विदुः ॥

भेरीशब्दः पुष्पगन्धः इति व्यवहृतिस्समा ।
पञ्चभूताश्रितश्शब्द इति तैरभ्युपेयते ॥
4 अजस्रमूर्तिर्यश्शब्दः सूक्ष्मत्वान्नोपलभ्यते ।
व्यजनाद्वायुरिव यः स्वनिमित्तात्प्रतीयते ॥
स एव कैश्चित्कुशलैराकाश इति पठ्यते ।
इत्याहुरपरे प्राज्ञा इति वाक्यपदीवचः ॥
5 चन्द्रिकादिविशेषानुन्मेषेण विततं तु यत् ।
विरलावस्थितं द्रव्यं नभस्तदिति केचन ॥
6 परस्परानवष्टब्धप्रदेशस्थस्वरूपयोः ।
परमाण्वोश्च संयोगो विना देशं न सिध्यति ॥
दिक्त्वेऽत्रान्तरिक्षान्तर्भावं केचिद्विदुस्ततः ।
अतिरिक्तत्वपक्षे तु सोऽण्वोर्देशो भवेदपि ॥
7 प्रत्यक्षसिद्ध आकाश इति वेदविदो विदुः ।
विधिरूपतया सर्वलोकसाक्षिकतादिना ॥
भावान्तराभाववादे विवादो नैव विद्यते ।
अतिरिक्ताभाववादे युक्तिरेषा निरूपिता ॥
न तावदत्रागमिकी प्रतीतिर्नाभसी भवेत् ।
आगमस्यानभिज्ञानामपि तद्बुद्धिदर्शनात् ॥
नाप्यानुमानिकी सा स्यात् तत्रानधिकृतास्तु ये ।
अबलाबालगोपानां तेषामप्यस्ति तन्मतिः ॥

प्रतीयतेऽयमाकाशः यदैवोन्मीलनं दृशः ।
प्रतीत्यभावे गन्तॄणां कूपादिपतनं ध्रुवम् ॥
इह पक्षी नेह पक्षीत्येवं जानन्ति लौकिकाः ।
एतदालम्बनतया वस्तु किंचित्प्रसिध्यति ॥
कल्पितालम्बनं केचिदालोकालम्बनं परे ।
ध्वान्तालम्बनमेकेऽन्ये तन्निरालम्बनं विदुः ॥
तत्रापि कल्पितादीनां स्यादेवाधारकल्पना ।
विधिर्निषेधो निरधिकरणो नेति केचन ॥
तथात्वे चाद्वैतवादः शून्यवादोऽपि वा ध्रुवः ।
तस्मादध्यक्षसंयोगः परिशेषाद्व्यवस्थितः ॥
तस्मादङ्गुळिनिर्देशपूर्वं व्यवहरत्यसौ ।
परीक्षको लौकिकश्च निर्बाधं सप्रमाणकम् ॥
नाभावो निस्स्वभावस्स्यात् स्वस्वभावतया स्थितेः
स्वविरुद्धस्वभावाच्चेत् निःस्वभावोऽखिलो भवेत् ॥
यदि चावरणाभावोऽत्रात्यन्ताभावलक्षणः ।
तदाधारतया कश्चिदस्त्येव मतिगोचरः ॥
प्रध्वंसप्रागभावौ तु सत्सु तेषु न सिद्ध्यतः ।
तथाऽऽवरणभेदस्तु तस्य सत्त्वेऽपि सिद्ध्यति ॥
8 अव्याकृतो व्याकृतश्च स चाकाशो द्विधा मतः ।
प्रधानमेव प्रथम इति केचन सूरयः ॥

कैश्चित्तु तद्विष्णुपदं परमं पदमिष्यते ।
पञ्चभूतान्तर्गतो यः स द्वितीयोऽभिधीयते ॥

9 स्याद्वादिभिरथाकाशः लोकालोकविभेदतः ।
विभक्तः प्रथमः लोकाकाशो लोकेषु विद्यते ॥
सर्वलोकोपरिस्थो यः सोऽलोकाकाश उच्यते ।
स चानन्तः तत्र मुक्तास्सन्तीति सुधियो विदुः ॥
इत्थं विकल्पो वियतः संक्षेपादिह सूचितः ।
सर्वार्थसिद्धौ सन्नयायमञ्जर्यामस्य विस्तरः ॥

(24) परमाणुवादः.

1 अनित्यं सकलं वस्तु क्षणत्वाच्छून्यमित्यपि ।
दुःखं चेति हि सिद्धान्तः सौगतानां व्यवस्थितः ॥
कार्यकारणयोरैक्यं तथैक्यं धर्मधर्मिणोः ।
अतो नित्यैकान्तवादः सांख्यानामिति निर्णयः ॥
वैशेषिकादयस्तत्र नित्यानित्यत्ववादिनः ।
क्षितिवार्यग्निमरुतां नित्यास्स्युः परमाणवः ॥
व्योमकालदिगात्मानः नित्या एवं मनांस्यपि ।
अन्यानि कार्यद्रव्याद्यान्यनित्यानीति निर्णयः ॥
नित्यानित्यविभागः प्राक्स्थितो वेदान्तिनां मते ।
परमाणुस्वरूपे तु विचारोऽयं विमृश्यताम् ॥

2 स्पर्शाद्येकद्वित्रिचतुस्स्वभावाणुचतुष्कतः ।
पुञ्जः प्रपञ्चः संयोगोऽनुपपत्तिपराहतः ॥
इति वैभाषिकैः कैश्चित्सौगतैरभिधीयते ।
3 तत्रातिरिक्तावयवविवादिभिः किल तार्किकैः ॥
प्रथमं संघटेते द्वौ परमाणू ततस्त्रिभिः ।
आरभ्यते च त्र्यणुकं द्व्यणुकैरिति कथ्यते ॥
परस्परानवष्टब्धदेशास्थितिरुपेयते ।
अण्वोर्द्व्यणुकयोर्वापि स देशो व्योमसंज्ञितः ॥
प्रभामण्डलमेवैतदिति केचन जानते ।
तस्याप्याश्रयदेशोऽन्यो वक्तव्य इति साम्प्रतम् ॥
बहुत्वसंख्यया दृष्टं महत्त्वं हेतुनिष्ठया ।
परोक्षत्वापरोक्षत्वसिद्धिस्तद्धेतुसाध्ययोः ॥
4 परमाणुरणुह्रस्वं द्व्यणुकं दीर्घमुच्यते ।
त्र्यणुकं तु महत्तस्मात्परिमाणचतुष्टयम् ॥
महत्त्वं षट्पार्श्ववत्त्वं त्रिभिर्दीर्घैस्तदुद्भवः ।
तस्मादुत्पद्यते सर्वं त्र्यणुकं द्व्यणुकैस्त्रिभिः ॥
ततश्च क्रमसामान्ये मानं खण्डनिदर्शनम् ।
मानं सङ्ख्याविशेषे तु नास्तीत्यारम्भ इष्यते ॥
5 अत्रेतरेषामाक्षेपसारांशोऽयं प्रदर्श्यते ।
स्वांशैस्संयुज्यावयवाः प्रारभन्तेऽतिरेकिणम् ॥

इति वादो निर्विघातः द्व्यणुकावधि संभवेत् ।
ततोऽणवो निरंशाश्चेत् संयोगस्तत्र दुर्घटः ॥
सांशाश्चेदविशेषस्स्यान्मेरुसर्षपयोरिति ।
षट्केन युगपद्योगात्परमाणोष्षडंशता ॥
षण्णां समानदेशत्वे पिण्डस्स्यादणुमात्रकः ।
इति पद्यं विश्रुतं हि यन्माध्यमिकशासनम् ॥
निरंशाऽनेकविषया बुद्धिर्नात्र निदर्शनम् ।
अंशानपेक्षस्संयोगस्तव नारम्भकः क्वचित् ॥
मूर्तैर्विभूनां संयोगोऽप्यत्र न स्यान्निदर्शनम् ।
अनिच्छतां विभुद्रव्यं, इच्छतामयमाशयः ॥
प्रवत्स्यामो यदि वयं संयोगगुणनिह्नव ।
तदा प्रदर्श्येत विभुप्रतिबन्द्व्यणुषु त्वया ॥
किंत्वारम्भकसंयोगः प्रदेशनियतो मतः ।
अन्यत्राङ्गीकृतश्चेति कल्प्येऽप्येष प्रसज्यते ॥
उपलम्भानुसारेण वस्तुसत्ता व्यवस्थिता ।
तस्मात्त्र्यणुकविश्रान्तिर्वरमित्याह वैदिकः ॥
6 अतश्च तार्किका नव्या नित्ये महति चाक्षुषे ।
त्रुटौ विश्रममिच्छन्ति न ह्रस्वपरिमण्डले ॥
परमाणुत्रयेणैव त्र्यणुकारम्भ इष्यते ।
गवाक्षरन्ध्रदृष्टं वा लाघवात् द्व्यणुकं विदुः ॥

जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुरिति स्मृतिः ॥
त्रसरेणुपदं मण्डपादिवद्रूढमिष्यते ।
त्रिभिश्च सहितो रेणुस्त्रसरेणुरितीतरे ॥

7 अनन्तावयवत्वं चाप्यणोरिच्छन्ति केचन ।
विभज्यमाने नाभावपरिशेषः प्रसज्यते ॥
मेरुसर्षपवैधर्म्यं देशव्याप्त्या न संख्यया ।
व्यक्त्यानन्त्येऽपि जात्योस्तां परताऽपरते यथा ॥
अण्वंशानामनन्तत्वे गन्तॄणां तदतिक्रमः ।
कदाऽपि न स्यात्, किं न स्याद्वेगातिशयवैभवात् ॥
द्युमणेरातपस्सर्पन्नुदयाद्रिशिखामणेः ।
तत्क्षणं किं न निर्भाति पश्चिमाद्रिशिखण्डकः ॥
नन्वनन्तावयवता मूर्तैरवयवैर्मिथः ।
अन्तरं त्वप्रयच्छद्भिः सर्वदिग्व्याप्तिकारिणी ॥
एकेन सर्षपेणैव पूर्येत सकलं जगत् ।
अतोऽनवयवाः केचित्स्वीकर्तव्याः किलेति चेत् ॥
अनन्तावयवत्वे तु सर्वदिग्व्याप्तिरित्यसत् ।
तावद्देशोऽपि सौक्ष्म्येणानन्तावयवसंभवात् ॥
सर्वापकृष्टः संघातस्सत्त्वादेरणुरित्यपि ।
सांख्यैरुक्तं निरंशाऽपि प्रकृतिश्चेति भाषितम् ॥

निरंशा प्रकृतिस्सैव परिणामाविभागिनी ।
अनन्तांशात्मिका चेति विरुद्धं सांख्यदर्शनम् ॥

8 शास्त्रैकविषयत्वे च परमाणोर्न सिद्ध्यति ।
नित्यस्पर्शादियोगित्वं भूतानां विकृतित्वतः ॥
निर्धर्मका निराधारा प्रकृतिर्यद्वदिष्यते ।
निर्धर्मका निराधारा अणवः बौद्धसम्मताः ॥
आगमालम्बने कार्यं कारणे प्रतितिष्ठति ।
अन्ततः प्रकृतिस्साऽपि परे ब्रह्मणि तिष्ठति ॥
तदपि स्वे महिम्नीति यदि वा नेति चेत्यपि ।
श्रूयतेऽतो निराधारं सर्वाधारं परं पदम् ॥
वाचक्नवीयाज्ञवल्क्यसंवादोऽप्ययमेव हि ।
बृहदारण्यकेऽधीतः विचारोऽसौ महान् ततः ॥

9 जगत्कारणमेवेदं सर्वैर्जिज्ञास्यते ततः ।
सधर्मकांश्च साधारान् पीलून् वैशेषिका विदुः ॥
तेभ्योऽपिच परां सूक्ष्मां प्रकृतिं कापिला विदुः ।
ततोऽपि परमं सूक्ष्मं ब्रह्मौपनिषदा विदुः ॥

10 सृष्टिप्रलयसंतानं शाबरा न प्रपेदिरे ।
न कदाचिज्जगच्चैतदनीदृगिति तन्मतम् ॥
केचित्पौराणिकाः कल्पमेकमेव विदुः ततः ।
तेषामेका सृष्टिरिष्टा प्रलयोऽप्येक एव हि ॥

एत एव तु कल्पान्तजीववादिन ईरिताः ।
परे सर्वे सृष्टिभङ्गप्रवाहानादिवादिनः ॥
तस्मात्कारणवाक्यानि सर्वासूपनिषत्स्वपि ।
लयपूर्वां सृष्टिमाहुः सृष्टिपूर्वो लयो यतः ॥
तत्र वैशेषिकाः सर्वजीवानां मुक्तिवादिनः ।
ते वै मताः सृष्टिभङ्गप्रवाहस्यान्तवादिनः ॥
ये पुनर्नित्यसंसारवादिवेदान्तिनो बुधाः ।
तेषां सृष्टिप्रवाहोऽयमनन्तोऽनादिरप्यसौ ॥
नित्यसंसार्यभावेऽपि जीवानन्त्यवचोबलात् ।
लीलाभूतिर्भगवतोऽनन्तेति सुधियो विदुः ।

## (25) शरीरवादः

1 शरीरस्य स्वरूपं हि विज्ञेयं सर्ववादिभिः ।
तद्धेयं क्षणिकं चात्मभ्रमकारणमुच्यते ॥
अनुकूलो हि सर्वेषामात्मा, तादात्म्यविभ्रमात् ।
आनुकूल्यधिया प्रीतिर्देहे यादृशि तादृशि ॥
चेष्टेन्द्रियार्थाश्रयत्वं शरीरत्वं निरुच्यते ।
इष्टप्राप्त्याद्यनुगुणा क्रिया चेष्टेति कथ्यते ॥
आधेयत्वं विधेयत्वं शेषत्वं नियतं तु यत् ।
शरीरशब्दप्रवृत्तिनिमित्तमिति कैश्चन ॥

वायवीयं तैजसं च जलीयं पार्थिवं तथा ।
चतुर्विधं शरीरं स्यात् कारणं च चतुर्विधम् ॥
भवेदुपष्टम्भकं तु प्रत्येकमितरत्त्रयम् ।
आरम्भकं सजातीयमन्यथा जातिसंकरः ॥
तच्छरीरं द्विधं ज्ञेयं मानसं यौनमित्यपि ।
देवर्ष्याद्या मानसास्स्युः योनिजास्त्वितरे मताः ॥
वाय्वादिषु हि लोकेषु तेते देहा व्यवस्थिताः ।
इति तार्किकसिद्धान्तः तत्र मीमांसका विदुः ॥
2 पार्थिवा एव देहाः स्युः ते सर्वे योनिजा मताः ।
देवाश्च देवलोकाश्च न प्रमाणपदे स्थिताः ॥
विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
तृप्तिः फलप्रदानं च देवतानां न विद्यते ॥
ततश्चैतन्यरहितदेवतावादिनस्त्विमे ।
इन्द्रादिशब्दरूपास्ताः ते शब्दाः स्वाभिधायिनः ॥
सर्वं शब्दात्मकमिति हर्यादिषु वदत्स्विह ।
शब्दात्मदैवतविदां कोऽपराधोऽतिरिच्यते ॥
3 अत्रेदमवधातव्यं कुमारिलमुखोद्गतम् ।
ग्रहैकत्वाधिकरणतन्त्रवार्तिकसंगतम् ॥
ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः ।
तेषां वाऽयमभिप्रायः स्याद्विवक्षाऽविवक्षयोः ॥

महाभौतिकदेहस्था: यथाऽऽत्मानस्सचेतना: ।
किंचिदर्थं विवक्षन्ति न विवक्षन्ति चापरम् ॥
तेषामन्तर्गताऽपीच्छा तद्वाक्यार्थविचारिभिः ।
ज्ञायते शब्दशक्त्यैव स्फुरन्तीव बहिःस्थिता ॥
देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः ।
प्रकृत्यारम्भवैचित्र्यात् दृश्यन्ते परमात्मनाम् ॥
पार्थिवावयवप्रायाः शेषतोयाद्यनुग्रहात् ।
जरायुजादयो देहाः दृष्टा भुवि चतुर्विधाः ॥
भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः ।
श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः ॥
अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः ।
भ्रमन्ति लघुभिस्सूक्ष्मैः देहैर्भूम्याद्यनुग्रहात् ॥
स्वर्लोके तैजसप्रायाः देहाः शुद्धप्रभान्विताः ।
आप्यायन्ते विकीर्णेन भानवीयेन तेजसा ॥
ये हि स्वर्गं यन्ति लोकं जनाः पुण्यकृतस्त्विह ।
ज्योतींषि तेषामेतानि नक्षत्राणीति वै श्रुतिः ॥
तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥
रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः ।
प्रत्येकमात्मनां तेऽपि देहास्संभोगहेतवः ॥

4 शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वं एकेन परमात्मना ॥
तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक् ।
भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगतास्सदा ॥
तेषां चान्तर्गतेच्छानां वाक्यार्थप्रतिपादने ।
विवक्षा वाऽविवक्षा वा ज्ञायते शब्दशक्तितः ॥
विधिशक्त्या गृहीतं यत्तत्सर्वं हि विवक्षितम् ।
तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ॥
शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः ।
विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः ॥
अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे ।
व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विवक्षाऽविवक्षयोः ॥

5 अथ कापिलसिद्धान्ते शरीरपरिकल्पना ।
विस्तरेणोदिता तत्र सारांशोऽयं निरूप्यते ॥
विशेषाः स्थूलनामानः पञ्च स्युः भूतलक्षणाः ।
तन्मात्रलक्षणाः पञ्चाविशेषास्सूक्ष्मलक्षणाः ॥
विशेषाः त्रिविधाः ज्ञेयाः सूक्ष्मदेहोऽत्रचादिमः ।
स्थूलदेहो द्वितीयः स्यात् प्रभूतस्तदनन्तरः ॥
आ सर्गात्प्रतिसर्गान्तं याः पुंसां सन्ति मूर्तयः ।
बुद्ध्यहंकारतन्मात्रेन्द्रियसंहतिलक्षणाः ॥

ते सूक्ष्मदेहाः नियताः लिङ्गाख्याः प्रथमा इमे ।
षाट्कोशिकाः स्थूलदेहाः ये मातापितृसंभवाः ॥
निवर्तन्ते प्रजायन्ते प्रभूताः स्थावरा मताः ।
घटादीनां निवेशोऽत्रेत्येवं त्रैविध्यमीरितम् ॥
इति सांख्योक्तसिद्धान्तं प्राय इच्छन्ति सूरयः ।
नैयायिकादयो नोपयन्तीदं तत्त्वविप्लवात् ॥
विभ्वात्मवादे गत्युक्तिस्सर्वत्रैवौपचारिकी ।
जन्मान्तरोपपत्तिश्च स्थितस्यैव भविष्यति ॥
कुमारिलश्चात्मवादे मीमांसाश्लोकवार्तिके ।
अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना ॥
तदस्तित्वे प्रमाणं हि न किञ्चिदिति पश्यतः ।
विन्ध्यवासिमतं प्राह सांख्यस्स्याद्विन्ध्यवास्यसौ ॥
6 तथौपनिषदैः कैश्चिल्लिङ्गदेहो मतो यथा ।
पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ॥
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ।
परं चाप्यपरं चेति द्विधा तत्परिकीर्तितम् ॥
परं हिरण्यगर्भीयं तन्महत्तत्त्वशब्दितम् ।
अपरं त्वस्मदादीनां सोऽहंकार इतीर्यते ॥
पञ्चीकृतेभ्यो भूतेभ्यश्चान्येषां सृष्टिरिष्यते ।
लिङ्गं मतं भेदविदां भेदाभेदविदामपि ॥

7 प्राग्देहाकृष्टभूतांशसंघसंपत्तिमान् पुमान् ।
अणुस्संसरतीत्येकैर्लिङ्गदेहो न चेष्यते ॥
भूतसूक्ष्मपरिष्वङ्गविषयं शास्त्रमुच्यते ।
गतिसाधनमेवेदं न चेष्टं भोगसाधनम् ॥
आरम्भवादे सांकर्यं जात्यादेः स्थूल इष्यते ।
उपाधिसंकरन्यायादिति केचन जानते ॥
कुर्वद्रूपत्वाख्यजातिवादभङ्गाय संकरः ।
दोषोऽभ्युपगतः प्राज्ञैरिति तत्त्वविदो विदुः ॥
8 अवस्थावादपक्षे तु नैव तस्य प्रसञ्जनम् ।
इत्यभिप्रेत्य बहुभिः शरीरं पाञ्चभौतिकम् ॥
क्षणिकं हेयमित्यादि बहुधा विजुगुप्स्यते ।
संरम्भस्तु तदत्यन्तभिन्ननित्यात्मधीफलः ॥
तत्सिद्धिश्च विरागस्य हेतुस्स्यादिति तन्मतम् ।
क्षणात्मवादे देहात्मवादे तत्सूपपादितम् ॥
द्रष्टृणामिह सर्वेषामास्थाया हि परिक्षयः ।
परमोद्देश्य इति च सर्वथा सुव्यवस्थितम् ॥

(26) इन्द्रियवादः

1 शरीरस्यैवेन्द्रियत्वात् नेन्द्रियं नाम किंचन ।
इति शाक्यविशेषा हि प्राहुर्लौकायता अपि ॥

त्वगेकमेव वा तत्स्यात् मनो वाऽप्येकमेव वा ।
इति कश्चित्सौगतानां सिद्धान्त इति गम्यते ॥
कल्प्यते शक्तिभेदश्चेत् शक्तिरेवेन्द्रियं भवेत् ।
इत्ययुक्तं, वरं धर्मिकल्पनाद्धर्मकल्पना ॥
शक्तिशक्तिमतोरैक्यं प्रायशस्सर्वसम्मतम् ।
शक्तीनां नामभेदेन व्यवहारोऽनवस्थितः ॥
पुमिन्द्रियं स्त्रीन्द्रियं च द्विधा वेन्द्रियमित्यपि ।
प्राचीनानां व्यवहृतिः पूर्वाचार्यैरनूदिता ॥
क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं द्रव्यग्राहकं विद्यते बहिः ॥
नैकं रूपाद्यभेदो वा दृष्टं चेन्नेन्द्रियेण तत् ।
अक्षानेकत्ववैयर्थ्यं स्वार्थे भिन्नेऽपि शक्तिमत् ॥
न सुखादिप्रमेयं वा मनो वाऽस्तीन्द्रियान्तरम् ।
अनिषेधादुपात्तं चेदन्येन्द्रियमतं वृथा ॥
नैकमित्यादिपद्यस्याप्यर्थ एषोऽवधार्यताम् ।
दर्शनस्पर्शनाभ्यां यद्ग्राह्यं ग्राहकभेदतः ॥
रूपादिवत्तद्भिद्येत नोचेद्रूपाद्यभेदिता ।
सामान्यं पञ्चभिर्ग्राह्यं दृष्टं चेत्तदसन्मतम् ॥
तथापीन्द्रियसांकर्ये व्यर्था तद्भेदकल्पना ।
त्वगेकमेवेन्द्रियं स्यात् नैकार्थे नैकशक्तिमत् ॥

इत्येवं भिक्षुवाक्यस्य भावो रत्नाकरोदितः ।
एकेन्द्रियादिवादस्तु गौतमेनाप्यनूदितः ॥
तद्भेदसाधनं तत्रानात्मसाधनसंगतम् ।
2 यः पञ्चेन्द्रियसिद्धान्तः तत्रापि श्रोत्रचक्षुषी ॥
अप्राप्यकारिणी स्यातामिति सौगतनिर्णयः ।
आभिमुख्यं च संबन्धोऽयस्कान्तादिवदिष्यते ॥
अनवस्थाऽतिप्रसङ्गौ संबन्धस्य ग्रहेऽग्रहे ।
प्राप्तेश्च कल्पनाऽन्येषामेषां त्वनुपलब्धितः ॥
प्राप्त्यभावस्सिद्ध एव स्वभावान्नियमः स्थितः ।
सान्तरं ग्रहणं न स्यात्प्राप्तौ दूरादिदर्शनात् ॥
महीमहीधरादीनां महतां चाग्रहो भवेत् ।
कणभक्षोऽक्षपादश्च जैमिनिः कपिलस्तथा ॥
सर्वेन्द्रियाणामेते स्युः प्राप्यकारित्ववादिनः ।
चक्षुश्श्रोत्रेतरेषां तु केचित्ताथागतास्तथा ॥
तत्रापि चक्षुर्भिन्नानां तेषां स्याद्वादिनस्तथा ।
3 अथ नैयायिकानां स्यादेष सिद्धान्तसंग्रहः ॥
भौतिकानीन्द्रियाणिस्युः पञ्च बाह्यानि देहवत् ।
न महान्ति न चाणूनि मध्यमानीति निर्णयः ॥
अणु नित्यं द्रव्यमपि मनोऽन्तःकरणं मतम् ।
तत्र पञ्चभिरप्यक्षैः बोधस्सत्तागुणत्वयोः ॥

द्रव्यमाने पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥
स मानसीनो जनानामात्माऽप्येतैर्गुणैस्सह ।
अतीन्द्रियाणीन्द्रियाणि सिद्ध्यन्ति ह्यनुमानतः ॥
प्रतिदेहं विभिन्नानि षडेतान्यखिलात्मनाम् ।
शरीरावयवा एव स्युः कर्मेन्द्रियशब्दिताः ॥
शब्देतरोद्भूतगुणविशेषानाश्रयश्च सन् ।
ज्ञानहेतुमनोयोगस्याश्रयो हीन्द्रियाभिधः ॥
सर्वाणि प्राप्यकारीणि कारकाणि यतो धियाम् ।
संसृष्टं कारकं लोके तत्फलायावकल्पते ॥
सन्निकर्षस्ततस्सिद्धः सत्तयैवोपकार्यसौ ।
नानवस्थातिप्रसंगौ स्वभावनियतं जगत् ॥
नीरन्ध्रेऽप्यम्बुकाचादौ दृक्प्रभादेः प्रवेशनम् ।
वस्तुस्वभाववैचित्र्यात् इत्येतत्सर्वसम्मतम् ॥
लौकिकोऽलौकिकश्चेति सन्निकर्षो द्विधेष्यते ।
प्रथमः षड्विधस्तत्र द्वितीयस्त्रिविधो मतः ॥
पृथ्वग्रं चाक्षुषं तेजोऽधिकग्रहणशक्तिमत् ।
शालिकाचार्यसिद्धान्ते चक्षुर्बाह्येन तेजसा ॥
महच्चक्षुर्जनयति गृह्यते तेन चाधिकम् ।
तथा शाखाचन्द्रमसोर्यौगपद्येन च ग्रहः ॥

बाह्येन ज्योतिषा चक्षुःज्योतिस्संवलितं सदा ।
दूरस्थं विपुलं चापि गृह्णातीति विदुः परे ॥
4 अथ सांख्यास्त्विन्द्रियाणि विभून्येकादशेति च ।
प्राहुराहंकारिकाणि वृत्त्या च व्याप्नुवन्त्यपि ॥
ज्ञानकर्मात्मकं चेदं मनोऽन्तःकरणं मतम् ।
अहंकारश्च बुद्धिश्चाप्यन्तःकरणमिष्यते ॥
तथाच त्रिविधा तेषामन्तःकरणकल्पना ।
आनुमानिकतैतेषां प्रधानादिवदेवहि ॥
सात्त्विकाहंकार एषामुपादानमिति स्थितिः ।
अहंकारविशेषाः स्युरिन्द्रियाणीति केचन ॥
हैरण्यगर्भा इति हि प्राह सर्वार्थसिद्धिकृत् ।
कर्मेन्द्रियं राजसं स्यादिति केचन तान्त्रिकाः ॥
प्रतिदेहं जनिध्वंसौ स्यातामस्येति केचन ।
5 मीमांसकास्तु प्रायेण नैयायिकमते स्थिताः ॥
विजृम्भन्तेऽभीष्टसिद्ध्यै श्रोत्रे शब्दे च भूयसा ।
दिशश्श्रोत्रमितिश्रुत्या श्रोत्रं ते दैशिकं विदुः ॥
ध्वनिजन्यस्तु संस्कारः शब्दग्रहणकारणम् ।
6 न श्रोत्रमिन्द्रियमिति भर्तृमित्रादयो विदुः ॥
कुमारिलस्त्विमं पक्षं निरास्थत् श्लोकवार्तिके ।
विषयेन्द्रियदेशानां संस्कारमपि चेच्छति ॥

वीचीतरङ्गादिनीतिं शब्दानित्यत्वसाधकाः ।
ध्वनीनामुपगच्छन्ति ध्वानितत्त्वं पुरः स्थितम् ॥

7 मनसो वैभवं प्राहुः संयोगमजयोरपि ।
अदृष्टान्नियमः सिद्ध्येत् अदृष्टशरणा हि ते ॥
ज्ञानस्यायौगपद्यार्थमणुत्वं तार्किका विदुः ।
दूरस्मृत्युपपत्त्यर्थं वैभवं वैदिका विदुः ॥
विकासो वृत्तिभेदो वाऽऽप्यायकप्रचयोऽपि वा ।
पृथुत्वहेतुः वेगस्तु यौगपद्यभ्रमावहः ॥
नैवाभिनिविशन्तेऽन्यप्रकारेषु बुधा इमे ।

8 अथौपनिषदानामप्येष सिद्धान्तसंग्रहः ॥
देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
आत्मा सेद्धव्य इति हि ब्रह्म मीमांस्यते बुधैः ॥
इन्द्रियस्य तु देवत्वं कारणत्वमुपास्यता ।
प्राणत्वाद्यं श्रूयतेऽतः स एवात्मेति संशयः ॥
एतादृक्संशयोच्छित्त्यै भगवान् बादरायणः ।
प्रावर्तयत्प्राणपादं द्वितीये लक्षणेऽन्तिमम् ॥
नेन्द्रियेष्वनुमानं स्यात् अप्राप्ते शास्त्रमर्थवत् ।
ज्ञानेन्द्रियाणां क्लृप्तिश्चेन्न किं कर्मेन्द्रियेषु सा ॥
करणत्वेनेन्द्रियत्वं दोषदीपाञ्जनादिषु ।
प्रसज्यते सहायत्वव्यवस्था त्वनियन्त्रिता ॥

उद्विग्नो ह्यन्धकारेण क्वाचिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥
अतीन्द्रियस्येन्द्रियस्यासिद्धिसिद्धिविकल्पतः ।
पक्षाप्रसिद्ध्यादिदोषात् विजृम्भन्ते न युक्तयः ॥
शुद्धाहंकृत्युपादानं द्रव्यमिन्द्रियमुच्यते ।
भूतैराप्यायनं तेषां मनोऽन्नमयताश्रुतेः ॥
इन्द्रियाणां भौतिकत्वं केचिद्वेदान्तिनो विदुः ।
पञ्चभूतमयत्वं च मनसः प्रतिपेदिरे ॥
शाब्दापरोक्षसिद्धान्ते मनो नेन्द्रियमिष्यते ।
कैश्चिदात्माऽऽपरोक्ष्यार्थे मनः करणमुच्यते ॥
9 एकं मनोऽन्तःकरणं नैयायिकमते मतम् ।
द्विविधं भास्कराः प्राहुः त्रिविधं कापिला विदुः ॥
चतुर्विधं केचिदाहुः तदुक्तिरवधार्यताम् ।
मनो बुद्धिरहंकारश्चित्तं करणमान्तरम् ॥
संशयो निश्चयो गर्वः स्मरणं विषया इति ।
तत्र कापिलभिन्नास्तु वृत्तिभेदाद्धिदां विदुः ॥
मनः स्मृत्यनुभूतिभ्यां द्विधा भास्करभाषितम् ।
श्रुतिश्च विविधा मानं सर्वेषामिह विद्यते ॥
तदर्थनिर्णायकं च सूत्रं तात्पर्यभेदतः ।
व्याख्यायते यदि तदा कः पक्षः श्रुतिसम्मतः ॥

अप्राप्यकारिणी श्रोत्रचक्षुषी इति सौगताः ।
चक्षुर्मात्रं विदुर्जैनाः सर्वेऽन्ये प्राप्तिवादिनः ॥
एवमिन्द्रियवृत्तान्ते विकल्पोऽत्र निरूपितः ।
प्रायस्सर्वार्थसिद्ध्यादौ विस्तरोस्यावलोक्यते ॥

(27) आत्मवादः—लौकायतात्मा.

1 अथ प्रस्तूयतेऽत्रात्ममीमांसा सर्वतोमुखी ।
यत्कृते सर्वमीमांसाः तीर्थकृद्भिः प्रवर्तिताः ॥
तथाहि लौकायतिकाः परलोकापवादिनः ।
चैतन्यखचितात्कायान्नात्माऽन्योऽस्तीति मन्वते ॥
भीष्मः खल्वपवर्गोऽयं भद्रं बह्वत्र लुप्यते ।
संसारो हि वरं यत्र सुखलेशः कियानपि ॥
स्वर्गेण चिरसाध्येन मृतिव्यवहितेन किम् ।
अत्र भोजनशय्यादि सुखमेव त्रिविष्टपम् ॥
चैतन्यं भौतिकी शक्तिः न तत्त्वान्तरमिष्यते ।
भूतसंघावस्थितिर्वा धीसामग्र्यथवा भवेत् ॥
शरीरवृद्धौ तद्वृद्धिः तत्क्षये चापि तत्क्षयः ।
मूर्छा चैतन्यविकृतिः अभिघातादितो भवेत् ॥
दृश्यते चेतना पट्वी ह्यन्नपानादितृप्तितः ।
ब्राह्मीघृतादिसंस्कारे स्यात्पटुप्रज्ञता तथा ॥

चलन्ति दध्यवयवाः काले नातिदवीयसि ।
स्वेदादिनैव वर्षासु पूतरक्तिमिलक्षणाः ॥
गौरोऽहमस्मि स्थूलोऽहं कृशोऽहमिति सम्मताः।
व्यवहाराश्चानुभवाः भूतचैतन्यसाक्षिणः ॥
अहं जानामीति मतिः शरीरमवलम्बते ।
इत्याहुरात्माऽप्रत्यक्षवादिनोऽपि हि तार्किकाः ॥
मम पाणिर्भुजो वेति भिन्नत्वादुपपद्यते ।
शरीरं तु ममेत्येषा कल्पना राहुमूर्धवत् ॥
2 चैतन्यं यदि शक्तिः स्यात् शक्तिशक्तिमतोर्यदा ।
भेदस्तदा शक्तिनाम्ना तत्त्वान्तरपरिग्रहः ॥
इति शङ्का नैव कार्या संघातश्शक्तिरिष्यते ।
ज्ञानं नाम पदार्थो यः स नास्त्येवेति तन्मतम् ॥
ज्ञानस्योत्पादिका याऽस्ति सामग्री सर्वसम्मता ।
तयैव सर्वनिर्वाहात्किमन्तर्गडुनाऽमुना ॥
देहधातुविशेषो वा विकासो वाऽस्य कश्चन ।
ज्ञानमित्येव वक्तव्यं वरं धर्मिप्रकल्पनात् ॥
हृदयस्थः पित्तभागः प्रकाश इति वैद्यकम् ।
एवमाद्यास्तु सर्वार्थसिद्धौ वादाः ह्यनूदिताः ॥
स एव भूतचैतन्यवादिनः परमाशयः ।
अन्यथा तस्य चैतन्यं तस्यापीत्यनवस्थितिः ॥

सुखदुःखेच्छादयोऽपि परिणामा हि भौतिकाः ।
संघातवेद्यास्ते सर्वे न संज्ञा प्रेत्य विद्यते ॥
भूतेभ्यश्च समुत्थाय तान्येवानुविनश्यति ।
इतिहि ब्राह्मणं येयं प्रेते संशय इत्यपि ॥
नाचिकेतानुयोगश्च सिद्धान्तं द्रढयत्यमुम् ।
एष देहात्मसिद्धान्तः सुराचार्यप्रवर्तितः ॥
चार्वाककृतभाष्यादिनिबन्धैः प्रचयं गतः ।
कामनीतिस्तेयशास्त्रप्रमुखं तस्य विस्तरः ॥
शेषः सिद्धान्तसारांशः सूचितः प्रायशः पुरा ।
प्रमेयसंग्रहे सोऽपि वैशद्यायावधार्यताम् ॥

(28) सौगतात्मा.

1 अथो तथागताः प्राहुः किं पुंसा कल्पितेन वा ।
ज्ञानमात्रेण सर्वोऽपि व्यवहारोऽवकल्पते ॥
ज्ञानस्यैव प्रभेदोऽयमिच्छाद्वेषसुखादिकः ।
न वस्त्वन्तरमित्येवं न ततोऽन्यप्रकल्पनम् ॥
गुणत्वमपि नास्त्यस्य यतोऽधिष्ठानकल्पना ।
न गुणव्यतिरिक्तश्च गुणी नामास्ति कश्चन ॥
स्मृतिवत्परिहर्तव्यौ कृतनाशाकृतागमौ ।
तत्संतानोपसंक्रान्त्या कुसुमे बीजरागवत् ॥

यस्मिन्नेव हि संताने आहिता कर्मवासना ।
फलं तत्रैव बध्नाति कार्पासे रक्तता यथा ॥
वर्षातपाभ्यां किं व्योम्नः चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः ॥
बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरात्माऽयं प्रमातेति न युज्यते ॥
अत्यन्तमलिनः कायः देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥
2 निर्धर्मका निराधारा निर्मूर्तिश्चित्तसंततिः ।
प्रतिक्षणं जायमाना दीपसन्तानसन्निभा ॥
ज्वालाबुद्बुदवद्वृत्तिः मातृकुक्षिप्रवेशभाक् ।
सा ततो विषयज्ञप्तिः चित्ताभिज्वलनात्मिका ॥
कामक्रोधौ लोभमोहौ रागद्वेषौ च सैव हि ।
रागो द्वेषश्च मोहश्च यद्युत्कटदशां गतः ॥
कामः क्रोधो लोभ इति व्यवहारस्य गोचरः ।
देवासुरमनुष्याणां भेदोऽतो गुणभेदतः ॥
आत्मा यद्यप्रतीत्य स्यात्क्लेशानां नैव संक्षयः ।
अतो नैरात्म्यसिद्धान्तः बौद्धानामिति निर्णयः ॥
आत्मग्रहो महामोहः प्रथमं तन्निवृत्तितः ।
मम किं नाहमेवेति विरंस्यति ममग्रहः ॥

तस्मादादावहंकारममकारप्रहाणतः ।
निर्वाणद्वारमेवैतत्सिद्धं नैरात्म्यदर्शनम् ॥

(29) सांख्यात्मा.

1 अथ कापिलसिद्धान्तरीत्याऽऽत्माऽत्र विचार्यते ।
विदितः सांख्यपुरुषः सोऽसौ पुष्करपर्णवत् ॥
श्रुतिर्ह्यपौरुषेय्येषा कल्पादौ कपिलादिभिः ।
स्मर्यते चापि विद्वद्भिः सर्वा सुप्तप्रबुद्धवत् ॥
तथा स्मृतीतिहासाद्याः प्रमाणं वेदमूलकाः ।
प्रकृतेः पुरुषस्यापि विवेकस्तैर्विशोध्यते ॥
तच्छ्रुत्वा शास्त्रयुक्त्या च व्यवस्थाप्य ततः परम् ।
निरन्तरं दीर्घकालमादरेण च सेवितात् ॥
साक्षात्काराच्च विज्ञानात् मुच्यते भावनामयात् ।
अभेदधीरुपादेयाऽन्येषामेषां तु भेदधीः ॥

2 तत्र युक्तिस्तु शास्त्रीया प्रयुक्ता तैः पुनर्यथा ।
अतिरिक्तोऽस्ति पुरुषः ह्यव्यक्तादेर्यतस्त्विमे ॥
अव्यक्ताद्याः परार्थाः स्युः संघातत्वात् गृहादिवत् ।
परस्स्यात्संहतो देहो दर्शनादिति चेन्न तत् ॥
तस्यापि संहतत्वेन स्यात्संघातान्तरार्थता ।
नच सत्यां व्यवस्थायामायुष्मत्यनवस्थितिः ॥

स व्यापकपरार्थत्वव्यावृत्त्या चागुणो मतः ।
पुरुषोऽयमधिष्ठाता बुद्ध्यादेरगुणत्वतः ॥
भोक्ता च पुरुषस्सिद्ध्येत् बुद्ध्यादेर्भोक्त्रभावतः ।
पुमान्न कस्यचित्कर्ता किन्तु भोक्तैव केवलम् ॥
इति सांख्यास्त्वाहुरिति न्यायरत्नाकरोदितम् ।
द्रष्टा वा पुरुषश्श्रेष्टः बुद्ध्यादेर्दृश्यभावतः ॥
शास्त्राणां च महर्षीणामन्येषां दिव्यचक्षुषाम् ।
कैवल्यार्थं प्रवृत्तेश्च स्यात्पुमान् प्रकृतेः परः ॥
दुःखात्मका हि बुद्ध्याद्याः स्वभावो दुरतिक्रमः ।
वियोगश्शक्यसंपादः पुरुषस्यातदात्मनः ॥
तस्माद्योऽस्ति स आत्मेति सिद्धः सत्त्वविलक्षणः ।
सुखदुःखव्यवस्थातः नाना सर्वगतश्च सः ॥
शरीरभेदाद्भेदश्चेत्स्यात्पाण्यादिविभेदतः ।
मध्यस्थः केवलः साक्षी द्रष्टाऽकर्तेति निश्चितः ॥
चिदभिव्यक्तिचित्सङ्गचिच्छायापत्तिलक्षणात् ।
संनिधेः बुद्धिरप्येषाऽचेतना चेतनायते ॥
विमृश्य शास्त्रयुक्त्यैवं कूटस्थं ज्ञानलक्षणम् ।
साक्षात्कृत्वाऽन्यताख्यात्याऽनन्तं कैवल्यमश्नुते ॥
इति कापिलसिद्धान्तसिद्धः पुरुष ईरितः ।
प्रमेयसंग्रहोक्तं यत्तदप्यत्रोपयुज्यताम् ॥

(30) वैशेषिकात्मा.

1 कणादीयात्मचर्चायां यत्तु संगृह्य भाषितम् ।
सम्यक् प्रशस्तपादेन क्रियते तस्य संग्रहः ॥
अप्रत्यक्षोऽपि सौक्ष्म्येण युक्त्याऽसावधिगम्यते ।
शब्दोपलब्ध्यनुमितश्रोत्रादि करणं पुनः ॥
कर्तृप्रयोज्यं वास्यादि करणं सर्वसम्मतम् ।
प्रयोजकश्च श्रोत्रादेः करणस्यानुमीयते ॥
मनश्शरीरेन्द्रियाणामज्ञत्वान्न प्रयोक्तृता ।
शरीरस्य न चैतन्यं भौतिकत्वाद्धटादिवत् ॥
इन्द्रियाणां न चैतन्यं करणत्वेन कल्पनात् ।
क्वचिद्विनष्टेष्वेतेषु विषयासन्निधावपि ॥
अनुस्मृतिः कस्य भवेत् प्रयोक्तर्यपिचासति ।
मनसश्च न चैतन्यं तस्यापि करणत्वतः ॥
करणान्तरक्लृप्तौ च यौगपद्यं धियां भवेत् ।
परिशेषात्स्वकार्येण ज्ञानेनात्माऽधिगम्यते ॥
प्रवृत्तिश्च निवृत्तिश्च शरीरसमवायिनी ।
हिताहितप्राप्तिपरिहारयोग्ये क्रिये हि ते ॥
ताभ्यां प्रयत्नवान् देहस्याधिष्ठाताऽनुमीयते ।
प्रयत्नवान् सारथिर्हि ज्ञायते रथकर्मणा ॥
वायौ देहगृहीते तु विकृतं कर्म दृश्यते ।
तेन भस्त्राध्मायितेव सिद्ध्यत्यात्मेति कथ्यते ॥

देहस्य वृद्धिसंभग्नक्षतसंरोहणादिभिः ।
गृहाध्यक्ष इवात्माऽपि देहाध्यक्षोऽनुमीयते ॥
यदिष्टादानकरणसंबन्धस्य नियामकम् ।
मनसः कर्म तेनापि सिद्ध्यत्यात्मा यथापुनः ॥
गृहकोणोपलप्रेरयितृदारकवत् तथा ।
दारुयन्त्रप्रयोक्तेव निमेषोन्मेषकर्मणा ॥
नायनालोचनात्पश्चाद्रसस्य स्मरणे सति ।
रसनं यद्विक्रियते तेनात्मोभयबुद्धिमान् ॥
यथाऽनेकगवाक्षान्तर्गतप्रेक्षक इष्यते ।
2 सुखेच्छाद्वेषयत्नैश्च गुणैर्गुण्यनुमीयते ॥
विषयेन्द्रियदेहादियोगं नार्हन्ति ते गुणाः ।
अयावद्द्रव्यभावित्वात् तथा प्रादेशिकत्वतः ॥
अहंकारेणैकवाक्यभावाभावात्तथैवच ।
बाह्येन्द्रियाप्रत्यक्षत्वात् अतिरिक्ताश्रया हि ते ॥
यथा पृथिव्यादिशब्दाः पृथिव्याद्यर्थगोचराः ।
तथाहंशब्द इत्यादिरिति भाष्यार्थसंग्रहः ॥

(31) नैयायिकात्मा.

1 अथ गौतमसूत्रेषु तद्भाष्ये चापि पाक्षिले ।
निर्णीतं यच्चात्मतत्त्वं क्रियते तस्य संग्रहः ॥

क्रियाकरणयोः कर्त्रा संबन्धस्यानुकीर्तनम् ।
व्यपदेशस्स द्विविधः प्रथमोऽयं निशम्यताम् ॥
प्रासादो ध्रियते स्तम्भैः वृक्षो मूलैश्च तिष्ठति ।
इत्यत्र समुदायस्यावयवेनानुकीर्तनम् ॥
तथैवान्येन चान्यस्य व्यपदेशोऽपि दृश्यते ।
प्रपश्यति प्रदीपेन कुठारेण प्रवृश्चति ॥
अत्रास्ति व्यपदेशोऽयं यथा पश्यति चक्षुषा ।
मनसा च विजानाति बुद्ध्या मीमांसते पुनः ॥
शरीरेण सुखं दुःखं तथाऽनुभवतीत्यपि ।
व्यपदेशस्योभयथा सिद्धेः तन्नावधार्यते ॥
किमत्रावयवेन स्यात् संघातस्यानुकीर्तनम् ।
अथवाऽन्येन चान्यस्येत्येवं संशयसंभवे ॥
2 यद्दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति ।
न्यायाचार्यकृतं सूत्रं तद्भाष्यमिह वर्ण्यते ॥
दर्शनेन गृहीतोऽर्थः स्पर्शनेनापि गृह्यते ।
यमद्राक्षं चक्षुषा तं स्पर्शनेन स्पृशाम्यहम् ॥
यं चास्पार्क्षं स्पर्शनेन तं पश्यामीह चक्षुषा ।
इत्येकविषयावेतौ प्रत्ययावेककर्तृकौ ॥
प्रतिसंधानविषयौ नच संघातकर्तृकौ ।
तथैव प्रत्ययावेतौ नेन्द्रियेणैककर्तृकौ ॥

तद्योऽसौ चक्षुषा चैव त्वचा चैकार्थलम्भुकः ।
अनन्यकर्तृकौ भिन्ननिमित्तौ प्रत्ययावपि ॥
यश्चापि प्रतिसन्धत्ते समानविषयाविमौ ।
सोऽर्थान्तरतया सिद्धः आत्मेत्याहुर्नयोत्तराः ॥

3 अथचास्यैव सूत्रस्य तात्पर्यार्थोऽवधार्यताम् ।
प्रामाण्यं प्रत्यभिज्ञायाः नित्यत्वमपि चात्मनः ॥
इन्द्रियाण्यपि नाना स्युः विभिन्नविषयाण्यपि ।
तत्तद्ग्रहणलिङ्गानि ज्ञातुस्तत्करणान्यपि ॥
भेदश्च गुणगुण्यादेः द्रव्याधिकरणा गुणाः ।
चेतनाश्चाप्यनियतविषयास्स्युः तथैवच ॥
स्थिराः स्युः विषयाश्चापि चक्षुरादेश्च नात्मता ।
एतादृशार्था बहवः तत्त्वटीकाप्रदर्शिताः ॥

4 अथचाधुनिकन्यायाचार्यैर्योऽत्र प्रदर्शितः ।
निष्कर्षस्सोऽपिचात्रैव संक्षेपादवधार्यताम् ॥
प्रत्यक्षादिप्रमाणैर्यो व्यवहारस्स चात्मना ।
विना नित्येन नेत्येवं ततस्तस्य प्रकल्पना ॥
तत्र प्रत्यक्षमात्मानमौपवर्षाः प्रपेदिरे ।
अहंप्रत्ययगम्यत्वात् स्वयूथ्या अपि केचन ॥
प्रत्यक्षत्वे कर्तृकर्मविरोधं केचिदूचिरे ।
लैङ्गिकत्वे कथं न स्यादात्मैवानुमिनोति हि ॥

तत्रानुमानज्ञानस्य यथाऽऽत्मा याति कर्मताम् ।
तथाऽहंप्रत्ययस्यैव प्रत्यक्षस्यापि गच्छतु ॥
देहादिव्यतिरिक्तश्च यथा लिङ्गेन गम्यते ।
तथाऽहंप्रत्ययेनापि गम्यतां तद्विलक्षणः ॥
ज्ञानेच्छासुखदुःखादि किलेदं लिङ्गमात्मनः ।
एकाश्रयतया ज्ञातमनुसन्धातृबोधकम् ॥
ज्ञाते तत्राफलं लिङ्गं अज्ञाते तु न लिङ्गता ।
तस्मात्प्रत्यक्ष एवात्मा वरमभ्युपगम्यताम् ॥
वृद्धागमानुसारेण संविदालोकनेन वा ।
अथवाऽभिनिवेशेन किमनेन प्रयोजनम् ॥
अनुमेयत्वमेवास्तु लिङ्गेनेच्छादिनाऽऽत्मनः ।
शास्त्रेष्वनेकहेतूक्तिः न दोषाय कथास्विव ॥
नहि प्रत्यक्ष आत्मा किं त्वपरोक्ष इतीतरे ।
केवलं शब्दभेदोऽत्र तुच्छता वा प्रसज्यते ॥
सुखदुःखादिभोक्तृत्वस्वभावो हेय एव सः ।
उपादेयस्तु भोगादिव्यवहारपराङ्मुखः ॥
5 तत्त्वज्ञानेन तेनास्य मिथ्याज्ञानेऽपबाधिते ।
रागद्वेषादयो दोषाः तन्मूलाः क्षयमाप्नुयुः ॥
क्षीणदोषस्य नोदेति प्रवृत्तिः पुण्यपापिका ।
तदभावान्न तत्कार्यं शरीराद्युपजायते ॥

अशरीरश्च नैवात्मा स्पृश्यते दुःखडम्बरैः ।
अशेषदुःखोपरमस्त्वपवर्गोऽभिधीयते ॥
स चेतनश्चिता योगात् तद्योगेन विना जडः ।
नार्थावभासादन्यद्धि चैतन्यं नाम विद्यते ॥
अधिकांशो मोक्षहेतुजिज्ञासायां निरूपितः ।
आम्रेडनं हि विदुषां भवेदालस्यकारणम् ॥

(32) मीमांसकात्मा.

1 अथ शाबरभाष्योक्तमात्मतत्त्वं विचिन्त्यते ।
यदेवचोपवर्षेण शारीरकनिरूपितम् ॥
नैरात्म्येनात्र चाक्षिप्ताः सर्वा एवहि चोदनाः ।
वेदप्रामाण्यसिद्ध्यर्थमात्माऽत्र प्रतिपाद्यते ॥
यजमानः स्वर्गल्लोकं याति यज्ञायुधीति वाक् ।
एतच्छरीरं यस्यासावात्मा तत्परतामियात् ॥
परैरभिहितान् पूर्वमात्महेतून्निरस्यति ।
न चेदहंप्रत्यये स्युश्शिष्यास्सामान्यदृष्टयः ॥
आह कोऽसावन्य आत्मा नैनं ह्युपलभामहे ।
एनं प्राणादिभिरुपलभामह इतीर्यते ॥
प्राणापानोच्छ्वासनिमेषादिचेष्टितवांस्तु यः ।
शरीरे सोऽत्र यज्ञायुध्यादिशब्दैः विवक्षितः ॥

शरीरगुणवैधर्म्यात् प्राणाद्याः न शरीरगाः ।
अयावद्द्रव्यभावित्वात् रूपाद्याः यावदाश्रयाः ॥
एवं देहात्मवादोऽयं चार्वाकाणां विदूषितः ।
2 अथ विज्ञानात्मवादः सौगतानां अनूद्यते ॥
एष संप्रत्ययः कस्मात् सुखादन्योऽवसीयते ।
सुखमेवात्मनो रूपं तद्वान् शशविषाणवत् ॥
अथोच्यते विना तेन सुखं कस्येति चेन्न तत् ।
न कस्यापीति वक्ष्यामः न तत्सप्रतियोगिकम् ॥
यथा सूर्यस्य चन्द्रस्य संबन्ध्यन्वेषणा वृथा ।
तथा सुखादेरन्योऽस्ति तद्वानिति न शोभनम् ॥
अथोपलब्धस्यावश्यं संबन्ध्यन्तरकल्पना ।
आत्मनः कल्पितस्यापि संबन्ध्यन्यः प्रसज्यते ॥
अव्यवस्थेति विज्ञाने विरन्तुं तदिहार्हसि ।
अथान्यो नास्ति विज्ञानात् जानातीत्युच्यते च कः॥
जानातिशब्दो ज्ञानस्य कर्तारमभिधित्सति ।
शब्दोऽर्थवान्न स कर्तव्यः इति विज्ञानवानसौ ॥
बहवो नन्विह जनाः अस्त्यात्मेत्यादिवादिनः ।
सन्ति प्रत्यक्षवक्तारः न सिद्धिस्तावताऽऽत्मनः ॥
जानातीति परोक्षोऽयं शब्दः किं कल्पयिष्यति ।
3 इति चेदिच्छयैवोपलभामह इतीर्यते ॥

पूर्वोपलब्धेऽभिप्रेते हीच्छा भवति कस्यचित् ।
नान्येन पुरुषेणोपलब्धेऽपि विषये क्वचित् ॥
अन्येद्युरुपलब्धेऽर्थेऽप्यन्येद्युर्भवति ह्यसौ ।
समानकर्तृका सोपलम्भेनेत्यवगम्यते ॥
यदि विज्ञानमात्रं तदुपलम्भकमिष्यते ।
तस्मिन्नस्तमिते कस्यान्येद्युरिच्छा भविष्यति ॥
विज्ञाता यदि विज्ञानात् नित्यः कश्चिदुपेयते ।
स एवचोपलब्धा स्यात्स भवेदेषिताऽपि च ॥

4 अत्राह नोपपन्नेच्छेत्येष संप्रत्ययः क्व नः ।
विज्ञानात्तावदन्यं तं नचैवोपलभामहे ॥
नास्मिन्नसति विज्ञानसद्भावो नोपपद्यते ।
प्रत्यक्षसिद्धत्वादेव तत एव क्षणात्मता ॥
नच ज्ञातरि विज्ञानादन्यस्मिन् असति क्वचित् ।
नोपपन्नाऽन्येद्युरिच्छा ज्ञाने च क्षणिकात्मनि ॥
प्रत्यक्षसिद्धत्वादेव दृष्टं नैतदपि क्वचित् ।
अन्येद्युरुपलब्धा यस्स एवैषिष्यतीत्यपि ॥
इदं तु दृष्टमस्माभिः क्वचिदन्यविलोकितम् ।
इच्छत्यन्यः क्वाचिन्नेति सन्तत्यैक्यं नियामकम् ॥

5 अत्रोच्यते नास्मर्तार इच्छन्तीत्युपपद्यते ।
नादृष्टपूर्वे स्मरणं कस्यापि हि भविष्यति ॥

विज्ञानस्कन्धमात्रेण स्मृतिर्नैवोपपद्यते ।
समानायां संततावप्यैक्यं व्यक्तिषु दुर्लभम् ॥
ननु स्मृतिरपीच्छावत्पूर्वविज्ञानसन्निभम् ।
विज्ञानं तच्च नष्टेऽपि द्रष्टर्यन्येद्युरुद्भवेत् ॥
नैवचानुपपन्नं तत् प्रत्यक्षावगतत्वतः ।
किंचैकस्मिन् स्कन्धघनेऽन्येन स्कन्धघनेन यत् ॥
विज्ञातं तत्संततिजेनान्येनाप्युपलभ्यते ।
नातत्संततिजेनान्येनेति प्रत्यक्षनिश्चितम् ॥
तस्माच्छून्याः स्कन्धघनाः इत्यर्थे ब्राह्मणं पुनः ।
विज्ञानघन एवैभ्यो भूतेभ्यश्च समुत्थितः ॥
तान्येवानुविनश्येन्न प्रेत्य संज्ञेति पठ्यते ।
6 हेतुष्वेवं परोक्तेषु प्रतिषिद्धेषु संप्रति ॥
अहंप्रत्ययविज्ञेयः स्वयमात्मोपपाद्यते ।
तथाहि प्रतिसंधानमन्येद्युरवलोकिते ॥
अपरेद्युर्ह्यहमिदमदर्शमिति दृश्यते ।
प्रत्यगात्मैकविषयं न परत्र प्रसर्पति ॥
यतोऽन्येद्युर्दृष्टवतोऽपरेद्युः स्याद्विलक्षणः ।
तस्मात्तद्व्यतिरिक्तोऽस्ति यत्राहंशब्द ईर्यते ॥
स्मरणप्रत्यभिज्ञाने स्यातामन्यार्थगोचरे ।
वासनावशतः ज्ञातुः प्रत्यभिज्ञा तु दुर्लभा ॥

7 नन्वन्यत्राप्यहंशब्दप्रयोगो दृश्यते यथा ।
पुत्रोऽहमेवाहमेव देवदत्तोऽहमेवच ॥
पुमान् नीलः कृशः स्थूलः गच्छामीत्येवमादयः।
अत्रोच्यते नहि वयं प्रयोगविषयं ध्वनिम् ॥
अर्थेऽन्यस्मिन् हेतुतया निर्दिशामः परंत्वमुम् ।
तस्माच्छब्दात्प्रत्यभिज्ञाप्रत्यक्षं प्राङ्निरूपितम् ॥
व्यतिरिक्तं प्रतीमोऽतश्चायमर्थः प्रसिद्ध्यति ।
वयमेवान्येद्युरिममर्थं ह्युपलभामहे ॥
वयमेव स्मरामोऽद्य ततो जानीमहे पुनः ।
यथाच वयमेव ह्यः वयमेवाद्यचेत्यपि ॥
ये ह्योऽद्य च न ते नष्टाः अत्रार्थे ब्राह्मणं पुनः ।
स वा अयमसावात्मा ह्यशीर्यो नहि शीर्यते ॥
अविनाशी वाऽयमरे आत्मानुच्छित्तिधर्मकः ।
इति क्षणिकविज्ञानादन्य आत्मेति निर्णयः ॥
अर्था यथोपलभ्यन्ते न तथा सन्ति किंपुनः ।
यथा तु नोपलभ्यन्ते तथा सन्तीति नोचितम् ॥
तथासति शशो नास्ति विषाणं तस्य विद्यते ।
इत्येवमवगम्येत तस्माल्लोकोत्तरं त्विदम् ॥
नचाहंप्रत्ययो मोहः बाधकानुपलम्भनात् ।
तस्माद्यज्ञायुधीत्युक्तस्सुखेच्छादिविलक्षणः ॥

8 अत्राह यदि विज्ञानादन्यद्विज्ञातृ विद्यते ।
अपास्य तत्तु विज्ञानं तद्विज्ञातृ निदर्श्यताम् ॥
इदं तदीदृशं चेति न त्वयैतन्निदर्श्यते ।
तस्मात्ततोऽन्यदस्तीति कथं स्यादवधारणा ॥
अत्रोच्यते स्वसंवेद्यः नासावन्येन शक्यते ।
द्रष्टुं कथमसावन्यैः निदर्श्येतेति चिन्तय ॥
यथाच कश्चिच्चक्षुष्मान् स्वयं रूपं प्रपश्यति ।
नच शक्नोति जात्यन्धायान्यस्मै तन्निदर्शने ॥
एतावता तन्नास्तीति न केनाप्यवगम्यते ।
तथोपलभते चासावात्मानं पुरुषः स्वयम् ॥
नचान्यस्मै दर्शयितुं शक्नोतीन्द्रियवर्त्मतः ।
अन्यस्य दर्शने शक्तिः नास्ति तं पुरुषं प्रति ॥
एवमन्योऽपि पुरुषः स्वात्मानमवगच्छति ।
नचात्मानं परं तस्मात्सर्व एवात्मसाक्षिणः ॥
अत्रच ब्राह्मणं ह्यात्मज्योतिस्सम्राडितीक्ष्यते ।
अत्र स्वयं ज्योतिरयं पुरुषो भवतीत्यपि ॥
अन्येनाशक्य इत्यत्राप्यगृह्यो नहि गृह्यते ।
इति श्रुतं अभिप्रायोऽप्ययमेवास्य संगतः ॥
9 उपायेन पुनः केन वाऽन्यस्मै कथ्यते त्वसौ ।
इत्यत्रोपायोपदेशो ब्राह्मणं पठितं यथा ॥

स एष नेति नेत्यात्मेति होवाचेति, तस्य तु ।
अयमर्थः—इदंरूप इत्यादेष्टुं न शक्यते ॥
परः पश्यति यद्रूपं तद्रूपं प्रतिषिध्यते ।
तस्योपदेशोपायोऽयं तत्प्रकारोऽवधार्यताम् ॥
शरीरं दृश्यतेऽन्येन तेनात्माऽत्रोपदिश्यते ।
नात्मा शरीरं अन्योऽस्ति शरीरादिति युक्तितः ॥
शरीरप्रतिषेधेन शारीर उपदिश्यते ।
प्राणादिप्रतिषेधेन तेभ्योऽप्यन्योऽवगम्यते ॥
तथा परगताः दुःखसुखाद्या अपि लिङ्गतः ।
परेण ह्युपलभ्यन्ते तेऽपि नात्मान इत्यपि ॥
तेषां तु प्रतिषेधेन तदन्योऽत्रोपदिश्यते ।
स एष नेतिनेत्यादेः अर्थ एषोऽवधारितः ॥
किंच स्वयं पश्यति यं न ततोऽन्यः पुमानिह ।
इत्येतदपि चात्मीयप्रवृत्त्यैवानुमीयते ॥
किंचासौ पुरुषः पूर्वमर्थानां सामिकल्पितम् ।
ततः प्रतिसमाधत्ते शेषांशं चानुतिष्ठति ॥
एवं प्रवृत्त्याऽप्येषोऽर्थो ज्ञायते सूक्ष्मदर्शिभिः ।
नूनं नित्यमनित्यानप्यवगच्छत्यसाविति ॥
10 किंचोपदिश्यते चोपमानादात्मा यथापुनः ।
भवान् यादृशमात्मानं स्वयं पश्यति तादृशम् ॥

पश्याम्यहमपीत्येवमुपमानेन गम्यते ।
यथाच कश्चिदात्मीयां वेदनां संप्रचक्षते ॥
दह्यमानस्येव मे स्यात् यात्यमानस्य वा पुनः ।
रुद्ध्यमानस्येव मेऽद्य भवतीति विकल्प्यते ॥
अतः स्वेनैवावगम्यमानत्वादस्ति पूरुषः ।
अतिरिक्तो वेदनाभ्यः तस्मादात्मा स्वयंप्रभः ॥
11 यदुच्यते च विज्ञानमपास्यैतन्निदर्श्यताम् ।
इति तच्चेदुपायस्य निषेधो न स युज्यते ॥
विनोपायमुपेयं तूपेतुं नैव हि शक्यते ।
ज्ञातव्यानामथार्थानामभ्युपायोऽयमेव हि ॥
यो यथा ज्ञायते सोऽसौ तथेत्यपिच तद्यथा ।
कश्शुक्लो नाम यत्रास्ति शुक्लत्वं शुक्लता च का ॥
शुक्लशब्दप्रवृत्तिस्स्याद्यत्र सा शुक्लता ह्यसौ ।
क्व वा तस्य प्रवृत्तिस्स्यात् यस्तच्छब्दात्प्रतीयते ॥
तत्प्रत्याख्याय विज्ञानं रूपं कस्यापि वस्तुनः ।
न निदर्शयितुं शक्यं ज्ञानात्सर्वं हि सिद्ध्यति ॥
प्रत्ययेऽथ प्रतीतेऽपि प्रत्ययार्थो नियोगतः ।
नच प्रतीतो भवति तस्मात् ज्ञानविलक्षणः ॥
प्रत्यये ह्यप्रतीतेऽपि प्रत्ययार्थः प्रतीयते ।
प्रत्यक्षं तन्न विज्ञानं ज्ञेयोऽध्यक्ष इतीर्यते ॥

अथचापह्नवेऽवश्यवक्तव्ये ज्ञानमेव तु ।
अपह्नूयेतैव कामं नार्थ इत्यप्युदीरितम् ॥

12 अथ यद्विज्ञानघन इति ब्राह्मणकीर्तनम् ।
भूतचैतन्यवादस्य तत्र प्रतिविधीयते ॥
अत्रैव मां हि भगवान् मोहस्यान्तमपीपदत् ।
इत्यस्य चोत्तरं मोहमरे न प्रब्रवीम्यहम् ॥
अविनाशी वाऽयमात्मा तथाऽनुच्छित्तिधर्मकः ।
मात्रासंसर्गमात्रं तु भवत्यस्येति च श्रुतम् ॥
सदसन्नाश्यनाशात्मपरिकीर्तनमूढया ।
चोदितः पूर्वपक्षोऽयमिति सिद्धान्तमब्रवीत् ॥
अविनाशी स्वरूपेण पुरुषः या तु नाशिता ।
मात्राणां साधिकाराणां भूतादीनामसौ मता ॥
तस्मान्न विज्ञानमात्रं आत्माऽन्योऽस्ति सुखादितः ।
अहंप्रत्ययगम्यश्च नित्यः व्यापी स्वयंप्रभः ॥
इति शाबरभाष्यस्थमात्मतत्त्वं विचिन्तितम् ।
इतोऽप्यधिकयुक्त्यंशो वार्तिके त्ववधार्यताम् ॥

(33) कौमारिलात्मा.

1 अथ वार्तिककारीयस्यात्मवादस्य संग्रहम् ।
सारांशविषयं धीरा विमृशन्तु विशुद्धये ॥

शरीरेन्द्रियबुद्धिभ्यो व्यतिरिक्तत्वमात्मनः।
नित्यत्वं चेष्यते शेषं शरीरादि विनश्यति ॥
नित्यः कर्तृत्वभोक्तृत्वे प्रतिपन्नोऽपि सन् यदा ।
न कर्मफलसंबन्धं भोगकालेऽवबुद्ध्यते ॥
मया तत्तु कृतं कर्म तस्येदं भुज्यते फलम् ।
शुभाशुभं मयैवेति तदा कोऽस्य रसो भवेत् ॥
कुर्वन्नप्यशुभं कर्म तेनैवं चिन्तयेन्नरः ।
न स्मरिष्यामि भोगेऽहमिति नैतद्विवर्जयेत् ॥
तत्र नित्यत्वपक्षेऽपि कृतनाशाकृतागमौ ।
फलतस्तुल्यरूपौ चेत् वृथा तत्प्रतिपादनम् ॥
2 नैष दोषः न भोगे हि स्मृतिर्न उपयुज्यते ।
न प्रवृत्तिर्निवृत्तिर्वा भोगकाले स्मृतेर्भवेत् ॥
प्राक्प्रवृत्तेस्तु साऽस्त्येव विदुषां शास्त्रतः स्फुटा ।
पश्चादपिच शास्त्रज्ञाः विमृशन्त्येव केचन ॥
अपरामृश्यमानेऽपि स्वापकाले सुखाश्रये ।
संभोगे मृदुशय्यादौ प्राक्प्रवृत्तिश्च दृश्यते ॥
3 तत्र नित्यविभुत्वाभ्यामात्मानो निष्क्रिया यदि ।
सुखदुःखाविकार्यश्च कीदृशी कर्तृभोक्तृता ॥
अथ कर्तृत्ववेलायां दुःखादेश्चापि जन्मनि ।
प्राग्रूपादन्यथात्वं स्यात् नित्यताऽस्य विरुद्ध्यते ॥

नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे, न ह्युच्छेदोऽस्य तावता ॥
स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत् ॥
सुखदुःखाद्यवस्थाश्च गच्छन्नपि नरो मम ।
चैतन्यद्रव्यसत्तादिरूपं नैव विमुञ्चति ॥
दुःखिनः सुखव्यवस्थायां नश्येयुस्सर्व एव ते ।
दुःखित्वं चानुवर्तेत विनाशे विक्रियात्मके ॥
तस्मादुभयहानेन व्यावृत्यनुगमात्मकः ।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥
4 नैरात्म्यवादपक्षे तु पूर्वमेवावबुद्ध्यते ।
मद्विनाशात्फलं न स्यान्मत्तोऽन्यस्याथवा भवेत् ॥
इति नैव प्रवृत्तिः स्यात् नच वेदप्रमाणता ।
जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम् ॥
ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ।
निष्क्रियत्वाविभुत्वाभ्यां नच देहान्तराश्रितिः ॥
कर्ता स एव सन्तानः ननु भोक्ता स एव नः ।
विज्ञानक्षणभेदस्तु त्वदवस्थान्तरैस्समः ॥
कर्तृत्वमेव दुस्साधं दीर्घकालेषु कर्मसु ।
सत्सु ज्ञानसहस्रेषु कुलकल्पोपमं हि तत् ॥

व्यतिरिक्तो हि संतानो यदि नाभ्युपगम्यते ।
संतानिनामनित्यत्वात् कर्ता कश्चिन्न लभ्यते ॥
तस्मादत्यन्तभेदो वा कथंचिद्भिन्नताऽपिवा ।
संतानस्येत्ययं चात्मा स्याद्वैशेषिकसांख्ययोः ॥
नन्वन्यत्वं विदन्तोऽपि पुत्रादिफलसिद्धये ।
प्रवर्तन्ते यथा तद्वत् ज्ञानसंतानिनोऽपि नः ॥
अन्यत्वे च समानेऽपि यथा वंशान्तरोद्भवाः ।
न लभन्ते फलं तद्वत् संतानान्तरजाः क्षणाः ॥
न तावद्बुद्धिरत्रैवं, अपिचात्मफलेच्छया ।
पुत्रादिभरणे वृत्तिः स्यात्तदप्यत्र नास्ति ते ॥
भरणं यदपत्यानां तिर्यगादिषु दृश्यते ।
अज्ञानं शरणं तत्र प्राज्ञानां तु न युज्यते ॥
नच त्वमपि कृत्येषु निरन्वयविनाशतः ।
मत्सन्तानसमृद्ध्यर्थमिति मत्वा प्रवर्तसे ॥
5 देहान्तरे च संचारो बुद्धीनां नोपपद्यते ।
पूर्वदेहाद्बहिर्भावः नच तासां प्रतीयते ॥
वायुना प्रेर्यमाणं हि ज्वालाद्यन्यत्र संचरेत् ।
बुद्धेः कारणदेशात्तु प्रेरणं नास्ति केनचित् ॥
अमूर्तत्वात्स्वयं नासावुत्प्लुत्यान्यत्र गच्छति ।
अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना ॥

सहसा जायते तच्च सहसैव विनश्यति ।
सूक्ष्मरूपादियुक्तं चेत् उत्प्रेक्षामात्रमेव तत् ॥
कललादिषु विज्ञानमस्तीत्येतच्च साहसम् ।
असंजातेन्द्रियत्वाद्धि न तत्रार्थोऽवगम्यते ॥
यदि भूतेन्द्रियाधारा ज्ञानशक्तिः भवेत्ततः ।
तच्चैतन्यं प्रसज्येत नच जन्मान्तरं भवेत् ॥
परिणामविवेकाद्यैः शक्त्यभिव्यक्त्यनुग्रहात् ।
तेभ्य एव भवेद्बुद्धिः न बुद्ध्यन्तरपूर्विका ॥
अथाधारविनिर्मुक्ता शक्तिस्स्यात्कललादिषु ।
पश्चाद्विज्ञानसिद्ध्यर्थं आत्मा शक्त्यभिधो भवेत् ॥
6 ज्ञानशक्तिस्वभावोऽतो नित्यस्सर्वगतः पुमान् ।
देहान्तरक्षमः कल्प्यः सोऽगच्छन्नेव योक्ष्यते ॥
शक्त्याधारप्रक्लृप्तौ वा नात्मनोऽन्यः प्रकल्प्यते ।
ज्वालाबुद्बुदवद्वृत्तिः नचाधाराद्विना धियाम् ॥
तस्माद्यथाऽऽकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।
तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥
7 कृतं भूतेन्द्रियाणां च चैतन्यप्रतिषेधनम् ।
समस्तव्यस्तसंघातविवेकपरिणामिनाम् ॥
सांख्यादिभिरशुद्धत्वात् संघातात्सान्निवेशतः ।
मृतवच्च शरीरत्वात् भूतत्वाद्बाह्यभूतवत् ॥

स्मरणप्रत्यभिज्ञाने भवेतां वासनावशात् ।
अन्यार्थविषये ज्ञातुः प्रत्यभिज्ञा तु दुर्लभा ॥
अहं वेद्मीत्यहंबुद्धिः ज्ञातारमधिगच्छति ।
तत्र स्यात् ज्ञातृ विज्ञानं तदाधारोऽथवा पुमान् ॥
गुरुः स्थूलः कृशो वाऽहं इति देहेऽपि या मतिः ।
भ्रान्तिस्सा भेदरूपं हि गुरु मे तदितीक्ष्यते ॥
ममात्मेति मतिर्भेदव्यपदेशेन याऽऽत्मनः ।
तत्रावस्थाऽऽत्मना भेदं ज्ञानस्याश्रित्य कल्पना ॥
वेदादेवात्मनास्तित्वं यो नाम प्रतिपद्यते ।
विरोधं वाऽऽत्मनो ब्रूयात्तं प्रति ब्राह्मणाभिधा ॥
अन्यथाऽनुपपत्तेश्च विधिनाऽऽत्मन्यपेक्षिते ।
अस्तित्वद्योतनादेतैः अर्थाक्षिप्तसमर्थनम् ॥
इत्यात्मवादसारांशः श्लोकवार्तिकशोधितः ।
अथापूर्वाधिकरणतन्त्रवार्तिकसंग्रहः ॥
7 अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः ।
तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते ॥
सर्वत्र कार्योपलब्धेरात्मा सर्वगतो मतः ।
तच्च कार्यमहंबुद्धिः सुखदुःखादिधीरपि ॥
ननु लिङ्गं तदेव स्याद्देशान्तरगतेरपि ।
आत्मा शरीरसंमिश्रः तैरेव सह संगमात् ॥

तत्रतत्र सुखादीनि कार्याणि प्रतिपद्यते ।
युगपद्यदि सर्वत्र कार्यमात्मगतं भवेत् ॥
ततस्सर्वगतत्वं स्यात् पर्याये तु शरीरवत् ।
अन्यथा सर्वगतता शरीरस्यापि कथ्यताम् ॥
नैवं स्वतोऽस्यामूर्तत्वात् न मूर्तैर्मिश्रताऽऽत्मनः ।
ततश्च तैरसंश्लिष्टः न नेतुं शक्यते क्वचित् ॥
मूर्तानामपि सूक्ष्माणां चन्द्रदीपरवित्विषाम् ।
न मृत्पिण्डादिभिस्साकं मिश्रणं नयनं क्वचित् ॥
स्याद्वादिभिर्मता मूर्ता बद्धा जीवास्तथाऽपि ते ।
शरीरसंपर्कायत्तमूर्ततारहिताः पुनः ॥
ज्वालादीनां स्पर्शवत्त्वात् वायुना वोल्मुकादिना ।
युक्तं स्यान्नयनं वक्तुं तस्मात्सर्वगतः पुमान् ॥
8 असर्वगतपक्षे स्यात् जीवो देहादनिर्गतः ।
अणुश्शरीरमात्रो वा सर्वथाऽपि न युज्यते ॥
यद्यणुः कल्प्यते तत्र देहं न व्याप्नुयादसौ ।
ततश्च सर्वगात्रस्थसुखप्राप्त्याद्यसंभवः ॥
लघुसंचारयोगेन संभवो निष्प्रमाणकः ।
बह्वदृष्टं कल्पनीयं यथा स्यादवधार्यताम् ॥
सद्भावोऽवयवानां च तथा तेषामनन्तता ।
अश्लेषश्च विनाऽन्येन तद्भावेऽपि च नित्यता ॥

अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः ।
अन्तराभवसंचारः तज्ज्ञानाज्ञानकारणे ॥
यद्वियोजितमात्राणामङ्गानां स्फुरणं तु तत् ।
अभिघातप्रेरितेन वायुनेत्यवधार्यते ॥
दीपप्रभायास्संकोचविकासौ दर्शनान्मतौ ।
यद्वांशारम्भनाशाभ्यामुपपत्तिस्तयोर्भवेत् ॥
अङ्गुष्ठमात्रः पुरुष इति ये च श्रुतिस्मृती ।
सूक्ष्मग्रहणयोग्यत्वतत्परे इति बुध्यताम् ॥
अङ्गुष्ठमात्रं पुरुषं निश्चकर्षेति यद्वचः ।
द्वैपायनीयं तदपि काव्यशोभानिबन्धनम् ॥
गीतादिषु हि तेनैव वर्णिताऽनेकरूपतः ।
सर्वत्र गतता तस्मात् आत्मानो विभवः स्थिताः॥

9 ननु चैवं व्योमवत्स्यात् ऐकात्म्यमिति चेन्न तत् ।
सुखदुःखव्यवस्थातो नानेति प्रथितं हि तत् ॥
जन्ममृत्याद्यनियमात् पुंसां च बहुतोदिता ।
सर्वे समानदेशास्स्युरस्पर्शा हि यतास्त्विमे ॥
चैतन्यमात्रात्मकत्वाद्यविभागनिबन्धनः ।
ऐकात्म्यव्यवहारः स्यात् ततश्चोपनिषत्स्वपि ॥
यथा शरीरमात्रेऽपि मातृगर्भात्मवर्तिनाम् ।
सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति ॥

देशऽव्याप्तया यदीष्येत सुखादेरुपभोग्यता ।
ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता ॥
10 चलनादिक्रियाहीनोऽप्यसौ कर्तृत्वमात्रतः ।
देशान्तरप्रापणादिक्रियार्होऽतो न निष्क्रियः ॥
कर्तैव चाश्रयः तस्य कर्माप्यत्रैव च स्थितम् ।
अत एव स्थितं ह्येतत्कर्तृत्वं सर्वकर्मसु ॥
यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् ।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति ॥
कथमन्यत्रान्यशक्तिः समवैतीति चेत् शृणु ।
अत्यन्तभेदाभावो हि यागदानक्रियात्मनोः ॥
शक्तिः कार्यानुमेयत्वाद्यद्गतैवोपयुज्यते ।
तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपिवा ॥
तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः ।
राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् ॥
आत्माश्रिताङ्गापूर्वाणामेकार्थसमवायतः ।
प्रधानैस्सह संबन्धात् न तेषां पुरुषार्थता ॥
अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते ।
ततस्तत्सिद्धये भूयस्स्यादपूर्वान्तरप्रमा ॥
प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि ।
अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणकः ॥

11 आवृत्तिभिर्यथाऽध्याये संस्कारो भवति क्रमात् ।
वाक्यावयवरूपेण तथाऽपूर्वं भविष्यति ॥
नैकरूपैव भावानामभिव्यक्तिः प्रतीयते ।
आत्मस्थोन्मीलनं तेन व्यक्तिरस्य भविष्यति ॥
सर्वावाप्तिसमर्थो वा प्रकृत्याऽऽत्मा सदेष्यते ।
कश्चित्तु प्रतिबन्धोऽस्य कर्मभिस्सोऽपनीयते ॥
एवं विभुत्वं कर्तृत्वं भोक्तृत्वं तत्समर्थता ।
भाट्टसिद्धान्तानुरोधादात्मनामिह दर्शितम् ॥

(34) प्राभाकरात्मा.

1 आत्मतत्त्वं प्रकरणपञ्चिकायां निरूपितम् ।
श्रीमच्छालिकनाथेन तत्त्वालोकेऽस्य संग्रहः ॥
बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा विभुर्ध्रुवः ।
नानाभूतः प्रतिक्षेत्रं अर्थवित्तिषु भासते ॥
भोक्ता च भोगायतनं भोगसाधनमेव च ।
भोग्यं भुक्तिरिति ह्यत्र भोक्ता त्वात्मेति निश्चितः॥
शरीरं भोगायतनं इन्द्रियं भोगसाधनम् ।
भोग्यं सुखादिकं भुक्तिः वेदनेति च विश्रुता ॥
आसु पञ्चविधास्वर्थतत्त्वं परिसमाप्यते ।
जरायुजं चाण्डभवं स्वेदजं च त्रिधा मतम् ॥

उद्भिज्जं दैवमिति च द्विविधं तैर्न हीष्यते ।
श्मशाने जायते वृक्ष इत्यादिस्त्वर्थवादगीः ॥

2 प्रकाशरूप एवात्मा न स्वयं स्वस्य गोचरः ।
न परोक्षो न चाध्यक्षोऽपरोक्ष इति निर्णयः ॥

अतश्च मोक्षे दृषदा तौल्यमापाद्यते परैः ।
संवित्तिफलभागिन्यप्यात्मनीष्टा न कर्मता ॥

गन्तृवत्, परगामित्वं फलस्यास्ति विशेषणम् ।
आत्मा विषयसंवित्तेर्गोचरः सर्वदा ततः ॥

संवित्त्युपायोपरमे सन्मात्रं स्वापवन्मतः ।
विशेषोऽभिमतः कैश्चिदात्मनां स्वापमोक्षयोः ॥

संवित्तिवत्स्वतस्सिद्धमात्मानमपरे विदुः ।
निरूपकत्वाश्रयत्वयुता विषयता हि सा ॥

प्रकाशैकस्वरूपत्वात् स्वतो वा परतोऽपि वा ।
प्रकाशांशानपेक्षत्वं केचिदत्र प्रचक्षते ॥

घटादयो ह्यप्रकाशस्वरूपाः तदपेक्षिणः ।
विषयव्यपदेश्यास्स्युः आत्मा सर्वविलक्षणः ॥

प्रकाशतत्त्वनिष्कर्षः वासनैकनिबन्धनः ।
सौगतानां रीतिरन्या तार्किकाणां विलक्षणा ॥

देहादिव्यतिरिक्तत्वयुक्तयः प्राकप्रपञ्चिताः ।
न विशेषः विशेषांशास्त्वयानन्यत्र विस्तरः ॥

3 जयन्तन्यायमञ्जर्यां गुरूणामात्मनिर्णयः ।
कृतः तस्यापि सारांशस्संक्षेपात्किंचिदुच्यते ॥
गुरूणामपरोक्षोऽसावात्मा चापरसाधनः ।
चितिशक्तिस्वभावश्च तस्यैषा विवृतिर्यथा ॥
आत्मा ज्ञानेन जन्येन न चकास्ति घटादिवत् ।
अपितु स्वत एवासौ संविद्वदवगम्यते ॥
अनेककारकाधीनाऽप्येषा संवित्करोति तम् ।
आत्मानमेव ज्ञातारं चित्स्वभावोऽतएव सः ॥
संवित्तथैव संवेद्या यथा संवित्तथैव च ।
स्याद्ग्राहकतयैवात्मा ग्राह्यः ग्राह्यतया न तु ॥
तयोः प्रकाशयोर्मध्ये परोक्षो ज्ञानलक्षणः ।
व्यापारो जायते तस्य फलं संवित्तिरिष्यते ॥
द्वैरूप्यचोदना येषा कर्तृता कर्मतेति च ।
नात्मन्यस्मिन्न पक्ष इति दृश्यते न्यायमञ्जरी ॥
अहंप्रत्ययकर्तृत्वेनैव सिद्धिरिहात्मनः ।
अहंप्रत्ययकर्मत्वेनैवेत्याहुः कुमारिलाः ॥

## (35) बादरायणात्मा

1 यत्तु लोकायतः प्राह देहान्न व्यतिरिच्यते ।
आत्मेति तत्र प्रत्युक्तमाचार्यैर्बादरायणैः ॥

एक आत्मन इत्यादिसूत्रेष्वपि हि भाषितम् ।
श्रीशङ्करादिभिः यत्तत्सारांशोऽत्रावधार्यताम् ॥
यो मन्येतात्मधर्माणां देहभावे तु भावतः ।
शरीरधर्मतां सोऽसौ देहभावेऽप्यभावतः ॥
अतद्धर्मत्वमेवैषां किं न मन्येत बुद्धिमान् ।
अपिचैते देहधर्मवैलक्षण्यान्न देहगाः ॥
ये तु रूपादयो धर्माः यावद्देहं भवन्ति ते ।
प्राणचेष्टादयो न स्युः मृतावस्थे शरीरके ॥
देहधर्मश्च रूपादिः परैरप्युपलभ्यते ।
नत्वात्मधर्मश्चैतन्यस्मृत्यादिरिति भाव्यताम् ॥
किंच जीवति देहेऽस्मिन्नेषां भावोऽवगम्यते ।
असत्यभावो निश्चेतुं तेषां नैव हि शक्यते ॥
कदाचित्पतितेऽप्यस्मिन् देहे देहान्तराश्रयात् ।
अनुवृत्तिर्भवेदात्मधर्माणामिति शङ्क्यते ॥
न निवर्तयितुं शक्या सहसा विपरीतधीः ।
इति संशयमात्रेण परपक्षो निषिध्यते ॥
2 किंच भूतेभ्य उत्पत्तिमिच्छन् धीमान्निदर्शनः ।
किमात्मकं पुनरिदं चैतन्यं मन्यते भवान् ॥
नहि भूतचतुष्केभ्यः किंचित्तत्त्वं विलक्षणम् ।
भवान् प्रत्येति येनैतज्जायेत मदशक्तिवत् ॥

तच्चानुभवनं भूतभौतिकानां मतं यदि ।
विषयत्वात्तर्हि तेषां न तद्धर्मत्वमश्नुते ॥
न ह्यग्निरुष्णः स्वात्मानं दहतीत्युपगम्यते ।
शिक्षितस्सन्न हि नटः स्वस्कन्धमधिरोक्ष्यति ॥
अतः क्रिया विरुद्धैषा स्वात्मनीति श्रुतं बुधैः ।
रूपादिभिः स्वस्वरूपं विषयीक्रियते न हि ॥
नह्येवं भूतधर्मेण सता चैतन्यवस्तुना ।
भूतभौतिकवस्तूनां विषयीकरणं भवेत् ॥
भूतभौतिकवस्तूनि बाह्यान्याध्यात्मिकानि च ।
तच्चैतन्येन विषयीक्रियन्त इति सम्मतम् ॥
अतो यथैवोपलब्धेः सद्भावोऽभ्युपगम्यते ।
व्यतिरेकोऽप्येवमस्याः विषयेऽभ्योऽभ्युपेयताम् ॥
उपलब्धिस्वरूपोऽसावात्मेत्यस्माभिरिष्यते ।
तस्मात्तथाविधो ह्यात्मा सिद्धो देहविलक्षणः ॥
उपलब्धेरैकरूप्यान्नित्यत्वमपिचात्मनः ।
अहं वास्त्विदमद्राक्षमिति प्रत्यभिसन्धितः ॥
स्मृतीच्छाद्युपपत्तेश्च विज्ञानं क्षणिकं न सः ।
3 युक्त्यन्तरं पुनरिदं वस्तुतस्त्ववधार्यताम् ॥
यथोपलब्धिर्भवति दीपादौ सति साधने ।
नैतावता दीपधर्मः सोपलब्धिर्भविष्यति ॥

तथैव सति देहेऽस्मिन् साधने धीर्भविष्यति ।
न भविष्यत्यसति च न स्याद्देहगता ततः ॥
देहेनापि नचात्यन्तमुपयोगोऽत्र दृश्यते ।
निश्चेष्टेऽपिच देहेऽस्मिन् दृश्यन्ते स्वाप्नसंविदः ॥
तस्माद्देहातिरिक्तत्वमनवद्यं तथाऽस्तिता ।
इत्यात्मचिन्ता युक्तिस्था विज्ञेया बादरायणी ॥
चैत्रस्तारक्षवीं स्वप्ने तनुमास्थाय बुध्यते ।
मानुषीमात्मनः पश्यन् तनुं तदुभयानुगम् ॥
आत्मानमनुसंधत्ते स्वयं देहविलक्षणम् ।
सर्वलोकप्रसिद्धोऽयं प्रत्ययोऽप्यवमृश्यताम् ॥

(36) वेदान्तात्मा.

1 अथ सर्वार्थसिद्ध्युक्तः वैदिकात्मविनिर्णयः ।
विलिख्यते सुनिष्पन्नः विस्तरोऽन्यत्र दृश्यताम् ॥
मनुष्योऽहं कृशः स्थूलः इत्यादिस्सार्वलौकिकः ।
अभेदप्रत्ययोऽह्यस्ति नीलो घट इतीदृशः ॥
मम देहोऽप्यहमिमं जानामीत्यादिभेदधीः ।
अपिह्यस्ति मम क्षेत्रमित्यादिप्रत्ययो यथा ॥
लोके भेदेऽप्यभेदेन प्रत्ययो दृश्यते यथा ।
सेयं ज्वाला तथाचायो दहतीत्यादिलक्षणः ॥

तथा भेदप्रत्ययोऽपि ह्यभेदेऽपिच दृश्यते ।
चन्द्रद्वयं घटमठाकाश इत्यादिलक्षणः ॥
बलाबलव्यवस्थायां कर्तव्यायां प्रसज्यते ।
सर्वत्राप्रामाण्यशङ्का यथा चैषाऽवधार्यताम् ॥
निर्वापितारोपितवत् ज्वालैक्यप्रत्ययस्थले ।
सादृश्यसादेश्यमुखदोषाणां संभवो यथा ॥
अयःपिण्डस्थलेऽन्योन्यव्यतिहारधियामपि ।
हेतुर्विलक्षणो योगः यथा स्यात्प्रकृते तथा ॥
सादेश्यसंसर्गमुखदोषसद्भावशङ्कया ।
स्यादभेदप्रत्ययोऽप्रामाण्यशङ्काकलङ्कितः ॥
तथा भेदप्रत्ययोऽपि शिलापुत्रस्य देहवत् ।
राहोश्शिरोवदैक्यस्याग्रहणाद्वा भवेदिति ॥
तादृशाप्रामाण्यशङ्काकलङ्कान्न विमुच्यते ।
घटस्यात्मेत्यादिवत्तु ममात्मेत्यन्यथा भवेत् ॥
2 एवंच नित्यशास्त्रोत्थसंप्रदायानुसारतः ।
भेदधीः प्रबला नान्येत्याहुश्शास्त्रैकलोचनाः ॥
यथा चन्द्रे यथा सूर्ये परिमाणाल्पविभ्रमः ।
दिङ्मोहादिभ्रमश्चैव तलमालिन्यविभ्रमः ॥
एवंलक्षणकस्सर्वश्शास्त्रेणैव निवार्यते ।
तथा शास्त्रानुग्रहेण बलाबलविनिर्णयः ॥

ततः स्वतो वा युक्त्या वा योगदर्शनतोऽपिवा ।
आत्मनः सिद्धिरित्याहुः इति देहात्मसंग्रहः ॥

(37) आर्हतात्मा.

1 आर्हतानामात्मतत्त्वं प्रागेव सुनिरूपितम् ।
तदेवचात्माऽध्यायेऽस्मिन् अन्यूनत्वाय चिन्त्यते ॥
देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
स्वयंप्रकाशप्रत्यक्षसिद्ध आत्मेति निर्णयः ॥
आत्मा चैतन्यरूपस्स्यात्परिणामी करोति च ।
साक्षाद्भोक्ता स्वीयदेहसमानपरिमाणवान् ॥
प्रतिक्षेत्रं विभिन्नश्च विचित्रश्चाप्यनन्तकः ।
स च पौद्गलिकादृष्टसंयुतः पुरुषार्थभाक् ॥
आत्मतत्त्वं तु सहजचिद्रूपपरिणामवत् ।
आवृतिप्रक्षयादेषः सार्वज्ञ्यैकरसः स्वयम् ॥
ज्ञानाद्भिन्नो नचाभिन्नः भिन्नाभिन्नः कथंचन ।
ज्ञानं पूर्वापरीभूतं सोऽयमात्मेति कीर्तितः ॥
उपादेयं परं ज्योतिरुपयोगैकलक्षणः ।
उपयोगः कर्मणैकीभूतस्यास्य विवेचनम् ॥
2 औदयश्चौपशामिकः क्षायिकः पारिणामिकः ।
एते जीवस्य चत्वारः भावाः पर्यायलक्षणाः ॥

स स्यादौदयिको भावः यः कर्मोदयलक्षणः ।
स चौपशामिको भावः यः कर्मोपशमात्मकः ॥
स एव क्षायिको भावः यस्स्यात् मोक्षपदाभिधः ।
स पारिणामिको भावः सहजः चित्स्वभावता ॥
समनस्कोऽमनस्कश्च स जीवो द्विविधो मतः ।
संज्ञिनस्समनस्काः स्युः अमनस्काः त्रसाः स्थिराः
गुणपर्यायवद्द्रव्यं तत्रस्थाः निर्गुणाः गुणाः ।
चैतन्यसुखदुःखाद्याः पर्यायगुणलक्षणाः ॥

3 सत्कर्मपुद्गलाः पुण्यं पापं तस्य विपर्ययः ।
पूरयन्ति गलन्तीति पुद्गला इति निर्णयः ॥
धर्मः प्रवृत्तिहेतुः स्यादधर्मः स्थितिकारणम् ।
अधर्मे गलिते धर्मः स्यादूर्ध्वगतिसाधनम् ॥
आत्मनश्चलनं योगः तेन कर्म पुमानयम् ।
आदत्ते सलिलं विष्वक् तप्तायःपिण्डवत् सदा ॥
तदेव पौरुषं ज्योतिः इन्द्रियेभ्यस्स्रवत्सदा ।
स्पृशच्च विषयान् तद्धीरूपेण परिणाम्यदः ॥
स चास्रवः, तस्य धीरैः कर्तव्यस्संवरस्सदा ।
आस्रवस्रोतसो द्वारं संवृणोतीति संवरः ॥

इति मानमेयरहस्यश्लोकवार्तिके प्रमेयकाण्डे

प्रथमः परिच्छेदः



अथ प्रमेयकाण्डे द्वितीय परिच्छेद प्रारम्भः.

---

### (38) धर्मधर्मिभाववादः.

1 अथ मीमांस्यते धर्मधर्मिभावे विदां मतम् ।
सर्वेषां च विवादानां प्रायशोऽत्रैव विश्रमः ॥
सदसत्कार्यवादो वा नित्यानित्यविकल्पना ।
क्षणास्थिरविवादश्च सृष्टिप्रळयकल्पना ॥
द्वैताद्वैतविवादश्च मोक्षवादोऽपि तादृशः ।
तदुपायविवादो वा वादेऽस्मिन् पर्यवस्यति ॥
अद्रव्यवादिनः केचित्केचिद्द्रव्यैकवादिनः ।
तदैक्यवादिनः केचित् केचित्तद्भेदवादिनः ॥
भेदाभेदं वदन्त्यन्ये केचित्सन्मात्रवादिनः ।
असन्मात्रविदः केचित् तेषां भावोऽवमृश्यताम् ॥

2 स्पर्शादीन् जगतो धातून् पञ्च वैभाषिका विदुः ।
शब्दात्मनश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन् ॥
स्पर्शाद्येकद्वित्रिचतुस्स्वभावानपरे विदुः ।
निर्धर्मका निराधाराः न चेत्स्यादनवस्थितिः ॥
धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि ।
नोपकारस्ततस्तासां, तथा स्यादनवस्थितिः ॥

नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्यस्य को भेदस्स्यादनिश्चितः ॥
एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ।
दृष्टे तस्मिन्नदृष्टेऽपि तद्ग्रहे सकलग्रहः ॥
त्वगाद्येकैकेन्द्रियस्य ग्राह्या इत्यपि तत्स्थितिः ।
तेषां पुञ्जः प्रपञ्चोऽयं संबन्धस्यानवस्थितेः ॥
क्षीणानि चक्षुरादीनि रूपादिष्वेव पञ्चसु ।
न षष्ठमिन्द्रियं द्रव्यग्राहकं विद्यते बहिः ॥
तत्र धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् ।
संघातमात्र एवायं गवादिस्स्याद्वनादिवत् ॥
सिद्धे ज्ञानसुखादीनां गुणत्वे गुणिकल्पना ।
न तु तत्सिद्धमस्माकं तावन्मात्रोपपत्तितः ॥
एत एव विशेषैकवादिनोऽद्रव्यवादिनः ।
प्रायो वैभाषिका एते यथाच वनवादिनः ॥
3 अथ केचन सन्मात्रं विदुः तत्तु स्वलक्षणम् ।
तदेतत्सर्वसामान्यसहमित्यपि तैः स्मृतम् ॥
द्रव्यं गुणः कर्म जातिः नाम चेत्यपि पञ्चधा ।
विकल्प्यते वासनया वस्तुभावेन तद्यथा ॥
गोविन्दो वेणुमान् श्यामः गोपोऽयं गायतीत्यपि ।
प्रतीतिर्व्यवहारश्च वर्तते न तु वस्तुतः ॥

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतस्स्वयम् ।
कोऽन्यो न दृष्टो भागस्स्यात् यः प्रमाणैः परीक्ष्यते॥
स्वलक्षणः स प्रत्यक्षः निर्विकल्पकगोचरः ।
इत्याहुस्ते हि सन्मात्रवादिनः धर्मिवादिनः ॥
सामान्यवादिनश्चापि तथैवापोहवादिनः ।
बाह्याद्वैतिन इत्येवं कथ्यन्ते बहुरूपतः ॥
भेदे धर्मिस्वरूपे तु भ्रमः क्वापि न संभवेत् ।
धर्मरूपेऽनवस्था स्यात् अन्योन्याश्रयताऽपिवा ॥
भेदकाग्रहणे भेदो न गृह्येत कथंचन ।
तस्य चाग्रहणे सोऽपि न गृह्येतेति संग्रहः ॥
अभावस्य यथा देशकालाद्यैः सिद्धिरन्यथा ।
तथा रूपादिवस्तूनां किं न स्यात्सिद्धिरन्यथा ॥
साधारणोऽथान्यथा वा संबन्धो धर्मधर्मिणोः ।
आद्ये सकलसांकर्यं अन्त्ये भेदो न सिद्ध्यति ॥
आधाराधेयभावोऽपि न भेदे व्यवतिष्ठते ।
स्वभावान्नियमश्चेत्स्यात् स्वभावादेव चैकता ॥
4 सौत्रान्तिकानां सिद्धान्तः प्रायेणायमिति स्थितः।
द्रव्याद्रव्यैक्यसिद्धान्तस्त्वथ कापिलसम्मतः ॥
वस्तुजातं प्रतीत्यैव व्यवस्थाप्यं हि सर्वशः ।
धर्मी धर्मः प्रतीयेते नातोऽन्यतरनिह्नवः ॥

कार्यकारणयोर्द्रव्यगुणयोः कर्मकर्मिणोः ।
जातिव्यक्तयोरभेदोऽयं सम्मतोऽयुतसिद्धयोः ॥
धर्मत्वादथ कार्यत्वात् संयोगाप्राप्त्यसंभवात् ।
संवित्त्युत्पत्तिसत्तानां भेदेनानवभासनात् ॥
धर्मोऽसौ धर्म्यभिन्नस्स्यादिति सांख्यव्यवस्थितिः।
कथंचिदाश्रितत्वादिः स्यात्तु भेदविवक्षया ॥
यथेह कानने सन्ति तिलका इति गीस्तथा ।
5 वैशेषिकादयः केचिद्भेदमेकान्ततो विदुः ॥
प्रतीतिं व्यवहारं च प्रमाणं तेऽपि मन्वते ।
दर्शनस्पर्शनाभ्यां चाप्येकार्थग्रहणादिति ॥
अबाधिता प्रत्यभिज्ञा धर्म्यभावे हि दुर्घटा ।
धर्माभावः पटुत्वपटुप्रत्ययानुपपत्तितः ॥
पीतशङ्खभ्रमादेश्चाप्ययोगान्न हि संभवी ।
स एवच तदैवान्यैः शुक्लत्वेनोपलभ्यते ॥
अधिष्ठानस्य कार्त्स्न्येन भानेऽभाने च न भ्रमः ।
भाताभाताकृतिभिदा कथं निर्धर्मके भवेत् ॥
आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद्भवेत् ॥
ग्राह्यभेदे ग्राहकाणां भेदस्स्यादन्यथापुनः ।
अन्योन्यसंश्रयापत्त्या विजयी मध्यमागमः ॥

वेद्यहेतुफलाकारैः भिन्नैरेका समेति धीः ।
तथा बाह्येऽपि दृष्टत्वात् युगपत्क्रमशोऽपिवा ॥
प्रतिसंबन्ध्यनेकत्वं यथा नैकस्य बाधकम् ।
तथा संबन्ध्यनेकत्वं नाश्रयैकत्वबाधकम् ॥
अनादाविह संसारे पूर्वपूर्वोपदेशतः ।
शिक्ष्यमाणाः पुनर्बालाः व्युत्पद्यन्ते तथातथा ॥
सर्वोऽपि भेदो युगपत्सहसैवोपलभ्यते ।
सेनावनसभातारामण्डलादिविभागवत् ॥
आगन्तुकोऽथवाऽवस्था धर्मो मिथ्येति न क्षमः ।
जननादेश्च मिथ्यात्वे नित्यत्वं वाऽथ तुच्छता ॥
नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥
अस्तिहीति प्रतिज्ञाने नास्तिहीत्युत्तरं क्षमम् ।
प्रवृत्तिभिर्विशिष्टार्था बालमूकादिधीरपि ॥

6 ननु निर्धर्मको धर्मः उत वा स्यात्सधर्मकः ।
आद्येऽभिलपनं न स्यात् अन्त्ये स्यादनवस्थितिः॥
केचिद्धर्माः धर्मिणः स्युः स्वान्यनिर्वाहकाः परे ।
गोत्वादिनिष्कर्षशब्दे धर्मी धर्मविशेषकः ॥
सत्त्वं प्रामाणिकत्वाख्यं प्रमेयत्वं च वाच्यता ।
पदार्थत्वादिकं सर्वैः स्वस्ववृत्तीति सम्मतम् ॥

घटकुड्यवदन्यत्वेऽनन्यत्वे तु स्वरूपवत् ।
न गुणस्य गुणत्वं स्यादित्यसत्त्वोक्तिबाधतः ॥
दृष्यादन्यदनन्यद्वा दूषणं नतु दूषणम् ।
गर्दभादिवदन्यत्वे,ऽनन्यत्वे दूषणीयवत् ॥
सामान्यं वा विशेषं वा वादी नाङ्गीकरोति चेत् ।
भ्रान्तिबाधौ हि न स्यातां कुत्र किं केन साध्यते ॥
द्रव्यं सत्त्वमथाद्रव्यमसत्त्वमिति शाब्दिकम् ।
असत्त्वेन मृषात्वं स्यादद्रव्यस्येति चेन्न तत् ॥
असत्त्वं सत्त्वभिन्नत्वं द्योतकत्वादि तन्मतम् ।
नतु तुच्छं यतश्चार्थक्रियाकारित्वमिष्यते ॥
7 भेदाभेदे हेतवो ये कीर्तिताः धर्मधर्मिणोः ।
अभेदधीः प्राक्, परतश्चैकशब्दानुविद्धधीः ॥
सामानाधिकरण्यं च मत्वर्थीयाविनाकृतम् ।
सहोपलम्भनियमः इत्याद्याः, तत्र चोच्यते ॥
नाभेदधीः प्रागवैशिष्ट्यात् धर्म्यैक्यादेकतामतिः ।
मत्वर्थीयः पृथक्सिद्धे सहभावोऽपि भेदकः ॥
तदिहाभिन्नधीर्भिन्ने भ्रान्तिः ज्वालैक्यबुद्धिवत् ।
अभिन्ने भेदधीश्चैवं स्याच्चन्द्रद्वित्वबुद्धिवत् ॥
धर्मधर्मिस्वरूपैक्ये स्यान्नान्यतरधीः क्वचित् ।
सहधीश्च क्वचिन्न स्यात् सम्मतैक्ये यथा घटे ॥

सहस्रशस्सुप्रयोगास्सन्त्येव ह्यौपचारिकाः ।
तत्त्वं विनिश्चाययितुं अज्ञानां तैर्न शक्यते ॥
भेदाग्रहाद्विकारित्वात् धर्मत्वाद्देशसाम्यतः ।
परिमाणैश्चयतश्चेत्याद्यसारं सांख्यकल्पितम् ॥
बाधासिद्ध्यन्यथासिद्धिव्यभिचारादिविप्लुताः ।
हेतवस्तद्विदामेव जुगुप्सामात्रहेतवः ॥
यत्तु भेदे स्वरूपादिविकल्पः तत्र कथ्यते ।
यद्बुद्धौ यत्र यद्भ्रान्तिः न स्यात्, सा तत्र तद्विदा ॥
अभेदेऽपि स्वरूपादिविकल्पानुपपत्तयः ।
भेदे यथा तथैव स्युः समाधिश्चोभयोस्समः ॥
8 तस्माद्धर्मश्च धर्मी च निरपेक्षौ परस्परम् ।
विवादानवकाशस्स्यादभावे धर्मधर्मिणोः ॥
क्वा विधीयते किंवा साध्यं किं किंच साधनम् ।
कः पक्षः कश्च दृष्टान्तः सर्वं खल्विह दुर्घटम् ॥
इदमित्थंत्वयो किंचिद्यदि केनापि भज्यते ।
इदं नास्तीति वाचोऽपि भङ्गोऽन्यतरभङ्गतः ॥
विसंवादादिसाध्येषु विकल्पत्वादिहेतवः ।
व्याकुलाः पक्षहेत्वादिबाधाबाधविकल्पतः ॥
व्यवहारो हि जगतो भवत्यालम्बने क्वचित् ।
न तत्सामान्यतो नास्ति कथंता तु परीक्ष्यते ॥

सामान्यनिश्चितार्थेन विशेषे तु बुभुत्सिते ।
परीक्षा वर्तते स्वेष्टप्रमाणोत्पादनात्मिका ॥
संबन्धेऽनुपपत्तिर्या वृत्तित्वे याऽपि तादृशी ।
स्वीयकार्यविरोधेन सा नात्रोत्प्रेक्षितुं क्षमा ॥
वासनावशतस्सर्वनिर्वाहे शून्यता वरम् ।
इष्टप्रसक्तिरितिचेदनिष्टं तेऽस्तिवा नवा ॥
नास्ति चेन्नैव दूष्योऽन्योऽप्यस्ति चेत्तत्प्रसज्यते ।
इष्टानिष्टाविभागस्तु तिरश्चामपि दुर्वचः ॥
भेदमात्रापह्नवस्तु स्वक्रियायां विरुध्यते ।
न विरोधस्य संत्यागी लौकिको नाप्यलौकिकः ॥

9 अथ भेदाभेदवादसारांशोऽत्रावधार्यताम् ।
अर्हत्पातञ्जलकुमारिलप्रभृतिसम्मतः ॥
यदि ह्येकान्ततो भिन्नं विशेष्यात्स्याद्विशेषणम् ।
स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत्कथम् ॥
स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ।
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नानां हि भेदधीः ॥
न तु जात्यादिनिर्मुक्तं वस्तु दृष्टं कदाचन ।
तद्विवेकेन वा तानि लाक्षादिस्फटिकादिवत् ॥
तत्रापि चेन्न दृश्येत भेदः कैश्चित्कदाचन ।
रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ॥

नानिष्पन्नस्य संबन्धो निष्पत्तौ युतसिद्धता ।
तथाच सति संबन्धे हेतुः कश्चिन्न विद्यते ॥
समवायवियोगाच्च विश्लेषस्स्यात्परस्परम् ।
तत्क्लृप्तावव्यवस्था स्यात्तस्यतस्यान्यसंगतेः ॥
अथ तस्यात्मरूपत्वान्नान्यसंबन्धकल्पना ।
अभेदात्समवायोऽस्तु स्वरूपं धर्मधर्मिणोः ॥
अतो जात्यादिरूपेण धर्मी यद्गृह्यते नरैः ।
पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ॥
यो ह्यन्यरूपसंवेद्यः संवेद्येतान्यथापुनः ।
स मिथ्या नतु तेनैव यो नित्यमवभासते ॥
अत्यन्तभिन्नताऽस्माभिः नैव कस्यचिदिष्यते ।
सर्वं हि वस्तु रूपेण भिद्यते न परस्परम् ॥
सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
तेन नात्यन्तभेदोऽपि स्यात्सामान्यविशेषयोः ॥
तस्मात्सास्नादिमत्स्वेव गोत्वं यस्मात्तदात्मकम् ।
तादात्म्यमस्य कस्माच्चेत्स्वभावादिति गम्यताम् ॥
स्वरूपसत्त्वमात्रेण नच किंचिद्विशेषणम् ।
स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ॥
अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥

व्यावृत्तिरनुवृत्तिर्वा तदानीं नानुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावसीयते ॥
महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते ।
सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥
विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।
ते च केचित्प्रतिद्रव्यं केचिद्बहुषु संश्रिताः ॥
पूर्वोक्तादेव तु न्यायात्सिद्धयेदत्रावयव्यपि ।
तस्याप्यत्यन्तभिन्नत्वं न स्यादवयवैस्सह ॥
व्यक्तिभ्यो जातिवच्चैष न निष्कृष्टः प्रतीयते ।
कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥
दूषिता साधिता वापि नच तत्र बलाबलम् ।
कदाचिन्निश्चितं कैश्चित् तस्मान्मध्यस्थता वरम् ॥
ततोऽन्यानन्यते तस्य स्तो न स्तश्चेति कीर्त्यते ।
तस्मात्स्याच्चित्रवत्सर्वं मृषैव त्वेकरूपता ॥
तदभिन्नादभिन्नस्य तदभेदो न हीष्यते ।
रसरूपादिभेदस्य विनिपातः प्रसज्यते ॥
वस्त्वनेकान्तवादाच्च न संदिग्धाप्रमाणता ।
ज्ञानं संदिह्यते यत्र तत्र न स्यात्प्रमाणता ॥
इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम् ।
संदिग्धैकान्तवादो हि स्यात्क्लैव्यैकनिबन्धनः ॥

इदं कौमारिलमतमुक्तं तादात्म्यलक्षणम् ।
पातञ्जलार्हदादीनां सिद्धान्तोऽप्ययमेव हि ॥
अत्रैव च क्वचित्कंचिद्विशेषं परिगृह्य ये ।
प्रवृत्ता मतभेदास्ते सन्ति वेदान्तिनामपि ॥
सत्यासत्यविभागेनाविरोधं केचिदूचिरे ।
प्रतीत्यैव विरोधस्य पराहतिरितीतरे ॥
परे विप्रतिपद्यन्ते प्रतीतावेव तादृशि ।
तत्त्वं देवो विजानाति चित्रा मानुषशेमुषी ॥

(39) द्रव्यवादः.

1 द्रव्यादिव्यवहारेषु विकल्पोऽथ प्रदर्श्यते ।
न द्रव्यं नाम वस्त्वस्ति वस्तुत्वेऽपि गुणादितः ॥
नातिरिक्तं पृथक्त्वेऽपि न प्रत्यक्षं तदिष्यते ।
प्रत्यक्षेऽपि विकल्पोऽयमिति वादः प्रवर्तते ॥
उपलम्भे विश्रमोऽतः तत्रापि शपथोक्तयः ।
एवं प्रकारस्सर्वत्र विचारः सौगतादृतः ॥
गुणे कर्मणि सामान्ये विशेषादौ प्रवर्तते ।
विवर्तवासना काचिन्महती तैस्समाश्रिता ॥
तामेवाश्रित्य कतिचित् स्वंस्वं सिद्धान्तमभ्यधुः ।
तद्विवर्तपदार्थेऽपि विकल्पो विविधोऽस्ति हि ॥

तुच्छं विवर्तमपरेऽथानिर्वाच्यं विदुः परे ।
अन्यथात्वं विदुः केचित् साधारण्यं विदुः परे ॥
2 ख्यातिवादे पुनस्तत्त्वमेतस्य स्फुटमग्रतः ।
द्रव्यं नित्यं ब्रह्म तत्त्वं परमार्थं च सन्मतम् ॥
इति ब्रह्मविदः प्राहुः अत्रच श्लोकवार्तिकम् ।
महासामान्यमन्यैस्तु द्रव्यं सदिति भाषितम् ॥
शब्दाद्वैतविदः शब्दं द्रव्यमित्यभिमन्वते ।
कालाद्वैतविदः कालं द्रव्यमेकमुदैरयन् ॥
स्याद्वादिनां तु सिद्धान्ते त्वेतत्स्याद्द्रव्यलक्षणम् ।
अनागतपरिणामावस्थं द्रव्यमितीर्यते ॥
तद्वर्तमानपर्यायं भाव इत्यभिधीयते ।
द्रूयन्ते यानि पर्यायैः पर्यायैर्वा द्रवन्त्यपि ॥
द्रव्याणि तानि निर्दिष्टान्यद्रव्याणि द्विधा पुनः ।
आगन्तवः स्युः पर्यायाः सहजास्स्युर्गुणा इति ॥
सांख्यानां सकलं द्रव्यं अनेकान्तविदामपि ।
वैशेषिकादिसिद्धान्ते द्रव्यं धर्मितया स्थितम् ॥
गुणकर्मादिधर्माणामिति पूर्वं निरूपितम् ।
मूर्तं द्रव्यं विदुः केचित् परिणामीति केचन ॥
द्रव्यं शक्तिमदित्येके ह्यद्रव्यं नहि शक्तिमत् ।
यथा शक्तिरशक्तैवं अद्रव्यं स्वान्यसाधकम् ॥

अवस्थाधारता द्रव्यमिति स्वायंभुवादयः ।
आगन्तुकापृथक्सिद्धधर्मोऽवस्थेति कीर्त्यते ॥
स्फुरद्द्रव्यमिळद्धर्मोऽवस्थेत्येके विदुर्बुधाः ।
अवस्थातद्वतोर्भेदाभेदं तु बहवो विदुः ॥
द्रव्यं नित्यमवस्थास्स्युरनित्या इति भाषितम् ।
पातञ्जले महाभाष्ये सुवर्णमकुटादिवत् ॥
3 एवं गुणपदं कर्मपदाद्यमपि दृश्यते ।
वस्तुमात्रे संप्रयुक्तं कथं तत्त्वव्यवस्थितिः ॥
तस्माद्वस्तुव्यवस्थायां व्यवहारा न चेशते ।
प्रयोगाल्पत्वभूयस्त्वनिर्णयः प्राज्ञदुश्शकः ॥
तस्माद्विरुद्धसंस्कारशिक्षितानां मनीषिणाम् ।
अन्योन्यं प्रत्यवस्थाने व्यवहारान्न निर्णयः ॥
अतएव हि शब्दानां सर्वेषां सर्वशक्तताम् ।
सार्वात्म्यवादिनः प्राहुः व्यवस्थां सहकारिभिः ॥
सहकारिविकल्पस्तु वासनामनुवर्तते ।
अतश्च वासना सर्वमिति सौगतनिर्णयः ॥
4 वासनानां तु वैचित्र्यं वस्तुवैचित्र्यमूलकम् ।
वैचित्र्यं चापि वस्तूनां स्वभावादिति तद्विदः ॥
एवंविधाऽपि काचित्स्याद्वासनेति च सौगताः ।
साऽपि बाह्यार्थनिघ्नेति विदुर्बाह्यार्थवादिनः ॥

एवंविधविचारे तु प्रतिष्ठा कुत्र शाश्वती ।
इति संचिन्त्य मध्यस्थाः सम्प्रदायमुपाश्रयन् ॥
सर्वेऽपि हि स्वोपलम्भं वदन्त्यखिलसाक्षिकम् ।
तथाच लोकानुभवोऽप्येवमेवेति सम्भ्रमात् ॥
तेन वादी स्वोपलम्भं भ्रमबुद्ध्या त्यजेदपि ।
त्रासितोऽपि बुधैरेवं न बिभेति विशुद्धधीः ॥
भवन्ति बहवः क्लीबाः अचलो यस्स बुद्धिमान् ।
इत्यतो वादभेदोऽपि सत्त्वाशयवशानुगः ॥

(40) गुणवादः.

1 गुणाः प्रधानं सांख्यानां त्रयस्सत्त्वादिलक्षणाः ।
अप्रधानं याज्ञिकानां मतं द्रव्यादिलक्षणम् ॥
शक्त्यादयो गुणाः प्रोक्ता ह्यर्थशास्त्रविशारदैः ।
शोभादयो गुणास्त्विष्टाः काव्यालङ्कारवेदिभिः ॥
शुक्लादयो गुणाः केचित्तार्किकैः परिभाषिताः ।
दोषप्रतिद्वन्द्वितया गुणास्स्युस्सर्वसम्मताः ॥
रज्ज्वादिकं तु संघातं वस्त्वस्ति गुणशब्दितम् ।
तस्मात्सामान्यतो दृष्टौ वस्तुमात्रं गुणो मतः ॥
तथैव सर्वश्शब्दो हि वस्तुमात्रे प्रयुज्यते ।
तथापि पारिभाषिकया वृत्त्या शास्त्रे व्यवस्थितिः ॥

गुणे द्रव्यव्यपेक्षेऽपि द्रव्येऽपि गुणकाङ्क्षिणि ।
अन्योन्यनिरपेक्षे च गुणद्रव्ये प्रसिद्ध्यतः ॥
सर्वेषां वासना प्रायस्तर्कशास्त्रानुसारिणी ।
यतः पदार्थसंशुद्ध्यै शास्त्रमेतत्प्रवर्तितम् ॥
अतस्तदनुरोधेन गुणोद्देशोऽत्र गृह्यते ।
रूपं रसस्ततो गन्धस्स्पर्शस्संख्या ततः परम् ॥
परिमाणं पृथक्त्वं च संयोगस्तदनन्तरः ।
विभागश्च परत्वं चापरत्वं बुद्धिरेवच ॥
ततस्सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वस्नेहसंस्काराः शब्दोऽदृष्टं गुणा इमे ॥
न गुणानां पृथक्सत्ता व्याहारो द्रव्यसत्तया ।
इति केचित्तार्किकाश्च प्राहुरित्यपि दृश्यते ॥
स्वरूपमेव संबन्धः स स्वभावनिबन्धनः ।
इत्याहुर्गुणगुण्याद्योस्समवायं द्विषन्ति ये ॥
विशेषसामान्यभेदात् गुणान् द्वेधा विदुर्बुधाः ।
सामान्यद्रव्यवृत्तित्वे सामान्यगुणतेष्यते ॥
विशेषद्रव्यवृत्तित्वे तत्त्वं प्राहुः कुमारिलाः ।
रूपं गन्धो रसः स्पर्शः स्नेहस्सांसिद्धिको द्रवः ॥
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिका गुणाः ।
संख्यादिरपरत्वान्तः द्रवोऽसांसिद्धिकस्तथा ॥

गुरुत्ववेगौ सामान्यगुणा इति हि तार्किकाः ।
अथ रूपादिवस्तूनां विकल्पोऽप्यवधार्यताम् ॥

2 चक्षुर्ग्राह्यः गुणो रूपं तत्सप्तविधमुच्यते ।
तार्किकैरिति सिद्धान्तः सर्वेषामेव विश्रुतः ॥
चित्रं रूपं नोपयन्ति मीमांसकविपश्चितः ।
अवयव्यतिरेके तु चित्रं रूपं मतं भवेत् ॥
भेदाभेदेऽप्यभेदे वा नोपगन्तव्यमेव तत् ।
अंशैरेवान्यथासिद्धेः नव्यैरप्येवमिष्यते ॥
मन्त्रशास्त्रे तु वस्तूनां रूपादिस्स्याद्विलक्षणः ।
विलक्षणो वैद्यशास्त्रे वेदान्तेऽपि विलक्षणः ॥
प्रत्यक्षेणापि बहुधा वैलक्षण्यं समीक्ष्यते ।
निर्वाहस्तूपदेशस्स्यादिति केचित्प्रचक्षते ॥
चित्रं यद्यतिरिक्तं स्यात् स्पर्शो गन्धः तथा रसः ।
एवमाद्याः किंनु चित्रा न भवेयुरितीतरे ॥
दुरालभादिवस्तूनां स्पर्शास्सन्ति विलक्षणाः ।
कस्तूरीप्रभृतीनां तु गन्धास्सन्ति विलक्षणाः ॥
एवं रसादिभेदाश्च सर्वानुभवसाक्षिकाः ।
व्यवहाराय सामान्यात्तीर्थकृद्भिर्विभज्यते ॥
अतिरिक्तं रूपमाहुः स्निग्धत्वं वर्णलक्षणम् ।
तथैव पिच्छिलत्वं च, स्याद्गुणान्तरमन्यथा ॥

नैल्यादयो गुणा विभ्व्यः एकैकव्यक्तिलक्षणाः ।
तेषामाश्रयभेदेन भेदधीरिति शाबराः ॥

3 रसस्तु रसनाग्राह्यः स च षड्विध इष्यते ।
मधुरादिविभेदेन स्थूलदृष्ट्या बुधैरिह ॥
रसानां सूक्ष्मभेदस्तु सर्वज्ञस्यापि दुर्ग्रहः ।
इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ॥
तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ।
इति दण्ड्यादयः प्राहुः विद्वद्रसिकशेखराः ॥
तदाश्रयविकल्पोऽपि विविधः परिदृश्यते ।
चिन्तनानलसाश्चापि सन्ति दुश्शकनिर्णयाः ॥

4 घ्राणग्राह्यो गुणोगन्धः स च द्विविध इष्यते ।
सुगन्धश्चाथ दुर्गन्धः इत्यत्र तु विचार्यते ॥
तत्तदन्यविभेदेन विभागो न हि दुश्शकः ।
सूक्ष्मभेदाविवक्षा चेत् रूपादौ सा प्रसज्यते ॥
सौगतादिप्रबन्धेषु विभागोऽस्ति विलक्षणः ।
विचाररसिकानां तु केवलं दिक्प्रदर्शनम् ॥

5 स्पर्शस्त्वगिन्द्रियग्राह्यस्स च त्रिविध इष्यते ।
अनुष्णाशीतशीतोष्णभेदादिति हि तार्किकैः ॥
वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
पृथिव्यपि तथैवेति सर्वैरभ्युपगम्यते ॥

आयुर्वेदे शीतगुणो मारुतस्संप्रकीर्तितः ।
तच्चिकित्सानियत्यर्थमिति सर्वार्थसिद्धिकृत् ॥
संयोगभेद एवायं स्पर्श इत्यपरे विदुः ।
संबन्धवादे संयोगविचारेऽस्त्यस्य विस्तरः ॥
काठिन्यमार्दवाद्यास्स्युः स्पर्शा हि विविधा भुवि ।
तेषां संयोगरूपत्वे का शीताद्युपकारिता ॥
6 सर्ववस्तुषु संख्याया व्यवहारो हि दृश्यते ।
तेन संख्याऽतिरिक्तोऽर्थः सा चैकत्वादिलक्षणा ॥
बहुत्वं नातिरिक्तं स्यात्किंतु त्रित्वादिलक्षणम् ।
इति प्राभाकराः प्राहुः अथ कौमारिलाः पुनः ॥
वैशेषिकादिवत्संख्यां गुण इत्यभिमन्वते ।
द्रव्य एवहि दृश्यन्ते व्यवहारास्तु भूयसा ॥
संख्यायामपि संख्यायाः व्यवहारस्य दर्शनात् ।
अनवस्था प्रसज्येत यदि संख्याऽतिरिच्यते ॥
गुणादावपि संख्यायाः व्यवहारस्य दर्शनम् ।
एकार्थसमवायादिसंसर्गादन्यथा भवेत् ॥
अपेक्षा बुद्धिरेव स्यात्संख्या द्वित्वादिलक्षणा ।
अपेक्षाबुद्धिजन्यं तत् इति प्राञ्चः प्रचक्षते ॥
संघातः पुनरेकत्वमिति संख्यापलापिनः ।
ऐक्यं भेदाभावरूपमिति भूषणनिर्णयः ॥

स्वरूपभेद एव स्यात् द्वित्वाद्यपि च तन्मते ।
वस्तुतस्सर्ववस्तूनि संख्या ग्रसितुमर्हति ॥
वनादौ नियतापेक्षाबुद्ध्यभावेऽपि दृश्यते ।
बहुत्वं, न शतत्वादि, तद्बहुत्वातिरिक्तता ॥
इति श्रीधरसिद्धान्तः तत्र चोदयनः पुनः ।
सेनेयं महती याति सैषा सेना महत्तरा ॥
इत्यादिव्यवहारेण ह्यतिरेकं निषेधति ।
त्रित्वाद्येकाधिकरणं बहुत्वमिति शंकरः ॥
7 एकत्वं त्वसहायत्वं मुख्यत्वं वाऽन्यतां जगुः ।
भावत्वेनैव वेद्यत्वात् अमुख्येष्वपि दर्शनात् ॥
स्वस्मिन्नप्यैक्यबुद्धेश्च त्रितयं नैक्यमिष्यते ।
संघातैक्यं तु राश्यादाविव स्यादौपचारिकम् ॥
तस्मादसंघातसंस्थमेकत्वं निरुपाधिकम् ।
अपेक्षाबुद्धिभेदैः स्यात् द्वित्वादीनां निराक्रिया ॥
इति सर्वार्थसिद्धौ हि वेदान्ताचार्यनिर्णयः ।
अभूदैक्यभ्रमो भेदादर्शनादिति वेदनात् ॥
ऐक्यं स्वसत्त्वमेवेति निरणैषुः परे बुधाः ।
स्वरूपादतिरिक्तं तत्पक्षयोरुभयोरपि ॥
यतः स्वरूपे ज्ञातेऽपि द्वित्वव्यामोहदर्शनम् ।
प्रामाणिकः स्वभावो यः तत्स्वरूपमिति स्थितम् ॥

अभिज्ञाग्राह्यमेकत्वमन्यत् तस्माद्विलक्षणम् ।
प्रत्यभिज्ञाग्राह्यमिति विपश्चिद्भिर्निरूपितम् ॥
देशकालादिभेदेन भेदो यस्तु प्रसज्यते ।
तद्विरोध्यैक्यमेतत्स्यादिति तल्लोकसाक्षिकम् ॥
तेनैव क्षणभङ्गं तं निरुन्धन्ति विपश्चितः ।
प्रत्यभिज्ञाविचारस्तु क्षणवादे प्रतिष्ठितः ॥
8 मानव्यवहृतेर्हेतुः परिमाणमितीर्यते ।
महद्दीर्घमणु ह्रस्वमिति तत्स्याच्चतुर्विधम् ॥
परमाणुरणुः ज्ञेयः त्र्यणुकाद्यं महत् मतम् ।
द्व्यणुकं स्यादणु ह्रस्वं तदूर्ध्वं दीर्घमिष्यते ॥
विभुद्रव्याणि परममहान्तीति विनिर्णयः ।
परमाणौ विभौ चापि मानं नास्तीति केचन ॥
परिमाणं तु परितो भाववेष्टनलक्षणम् ।
तच्चापरिमितख्यातेः विभौ नास्तीति केचन ॥
देशव्याप्तिविशेषः स्यात् परिमाणमितीतरे ।
राश्यादिषु महत्त्वादिः देशसंबन्ध एवहि ॥
आर्जवेनैकदिग्योगो दीर्घतेत्येवमूह्यताम् ।
वक्रत्वं चतुरश्रत्वं कुण्डलत्वादिकं तथा ॥
परिमाणं हि परितो मानमित्यभिधीयते ।
आकाशधातुरेवायं स तुच्छ इति सौगताः ॥

अणूनां स्यात्परिमितिराकाशमितत्तैव हि ।
तस्मादवच्छेदभेदान्महदित्यादिधीरिति ॥
विभुत्वं तर्हि सर्वेषां स्यादित्यापाद्यते बुधैः ।
परस्परविरोधे हि न प्रकारान्तरस्थितिः ॥
सर्वप्रकारपरिमित्यभावो विभुतैव हि ।
सर्वोत्कृष्टपरीमाणं विभुत्वमिति केचन ॥
अवस्थैव परीमाणं प्रकृतेरिति कापिलाः ।
उपाधिभिः पार्श्वभेदः परमाणोरितीतरे ॥
स प्रदेशो निरंशोऽपि स्वभावादिति चार्हताः ।
उपाधीनामुपाधिश्चेत् भवेदेवानवस्थितिः ॥
9 पृथक्त्वं भेद इत्यन्ये वैशिष्ट्यमिति केचन ।
परे वैधर्म्यमित्याहुः गुणान्तरमितीतरे ॥
अयमस्मात्पृथगिति प्रतीतेः भिन्न इत्यसौ ।
विलक्षणा प्रतीतिः स्यादित्याहुर्वृद्धतार्किकाः ॥
वैशिष्ट्यस्य पृथक्त्वे तु व्योम्नि शब्दविशेषिते ।
व्यवहारः पृथक्त्वेनापाद्यते प्रागपेक्षया ॥
वैधर्म्यस्य पृथक्त्वे तु पाकरक्ते घटे पुनः ।
श्यामाद्घटात्पृथगिति व्यवहारः प्रसज्यते ॥
पृथक्त्वं भेद एवेति नव्यतार्किकनिर्णयः ।
भेद एव पृथक्त्वं स्यात् भिन्नः पृथगसाविति ॥

सामानाधिकरण्येन व्यपदेशो न विद्यते ।
पृथक्त्वं लक्षणं भेद इत्यनर्थान्तरं विदुः ॥
भेदोऽप्यसाधारणोऽसौ धर्म एवेति तात्त्विकाः ।
एकद्वित्रिपृथक्त्वादि संख्यावदिति निर्णयः ॥
वैशेषिकविशेषाणां पृथक्त्वेनान्यथा गतेः ।
नित्यानां निष्प्रमाणोऽयं विशेष इति वैदिकाः ॥
10 अप्राप्तिपूर्विका प्राप्तिः संयोगस्सार्वलौकिकः ।
अबाधिता प्रतीतिश्च संयुक्त इति तद्वति ॥
नान्यथाऽवयवी सिद्ध्येत् उत्पत्तिरपि पाकजा ।
न स्याच्च जगतः सृष्टिः तथा यन्त्रादिकल्पना ॥
आलानादिविनिर्माणं संसर्गश्चेन्द्रियार्थयोः ।
संबन्धो बीजजलयोः शौचाशौचव्यवस्थितिः ॥
न स्याच्छब्दोत्पत्तिरपि जगत्स्यादपि निश्चलम् ।
विभोर्न च्छिद्रमणुना नाणूनां विभुना च तत् ॥
यथाप्रमाणं संबन्धमात्रमेव तयोर्भवेत् ।
न विभज्यते गच्छद्भिः न विहन्ति गतिं च यत् ॥
अस्पर्शत्वात्तथाभूतं विभु वाऽविभु वाऽस्तिहि ।
कौमारिलास्त्वजमपि संयोगं श्रोत्रशब्दयोः ॥
विभ्वोरिच्छन्ति तत्पक्षे स्याद्विभागोऽपि तादृशः ।
इत्याक्षेपस्तार्किकाणां नचेष्टापत्तिसंभवः ॥

विरोधस्य परित्यागप्रसङ्गादिति तात्त्विकाः ।
इति वैशेषिकाः प्राहुरेषा सौगतपद्धतिः ॥
असिद्धः क्षणभङ्गेन संयोगस्स्यात्सहेतुकः ।
स्याच्चाविरलदेशस्योत्पत्त्या वा सिद्धिरन्यथा ॥
तस्मात्संयोगसंबन्धो विकल्प इति ते विदुः ।
संबन्धतत्त्वापलापः प्राग्रूपं शून्यसंपदः ॥
नैरन्तर्यं त्वन्तरालाभावस्संयोग एव चेत् ।
अभावस्स्यादसन् तुच्छः न कार्यं नापि कारणम् ॥
संयोगेऽन्तर्भावयन्ति पदार्थं कर्मलक्षणम् ।
केचिद्दार्शनिकाः केचित्तार्किकाः भूषणानुगाः ॥
संयोगमेव विषयविषयित्वं विदुः परे ।
द्रव्ययोरेव संयोगनियमं न प्रचक्षते ॥
अतीतेऽनागते चापि संयोगस्यास्ति संभवः ।
समकालिकयोरेव संयोग इति नेष्यते ॥
11 संयोगयुक्तिरेवात्र विभागेऽपि विपर्ययात् ।
शक्याऽनुसंधातुमिति क्रियते नात्र विस्तरः ॥
संयोगाभावरूपश्चेद्विभक्त इति शेमुषी ।
भवेद्विज्ञानवादेन सर्वापह्नवसंभ्रमः ॥
विभागो यदि संयोगनाशः किं न विपर्ययः ।
मिथो विनिगमाभावे तूभयं चेह निर्भयम् ॥

पूर्वसंयोगनाशश्चेदौत्तरो योग उच्यते ।
विभक्तसंयुक्तधियां सांकर्यं दुर्निवारणम् ॥

12 परत्वं चापरत्वं च दैशिकं कालिकं द्वयम् ।
आद्यं संयुक्तसंयोगभूयस्त्वाल्पत्वधीकृतम् ॥
कालिकं सूर्यचलनभूयस्त्वाल्पत्वधीकृतम् ।
भूयस्त्वाल्पत्वबुद्धी ते अपेक्षाबुद्धिसंज्ञिते ॥
ताभ्यामेवान्यथासिद्धिं तयोः केचिद्विदुर्बुधाः ।
बुद्ध्यधीने हि विज्ञानवादशङ्का प्रसज्यते ॥
विद्यावृत्ताभिजात्यादौ परताऽपरताऽपिच ।
गुणे गुणमजानद्भिः अखिलैर्व्यपदिश्यते ॥
द्विपरत्वादयो न स्युः द्विपृथक्त्वादिवत्पुनः ।
नीलाविमौ द्वावितिवत् द्वाविमौ च पराविति ॥
सदाऽनवधिकत्वेन प्रतीतेरिति गम्यताम् ।
द्वित्वैकार्थत्वतश्चापि तेषां स्यादन्यथागतिः ॥
परत्वादिगुणाभावे चाभावो देशकालयोः ।
तद्विस्तरः कालवादे स्थित इत्युपरम्यते ॥

13 गुरुत्वमाद्यपतनासमवायितया गुणः ।
अतीन्द्रियं चाम्बुभूम्योः कल्प्यते किल तार्किकैः ॥
नव्यास्तन्नोपगच्छन्ति वस्त्वधोदेश एवहि ।
गुरुत्वबुद्धिविषयः ततस्स्यात्पतनादिकम् ॥

ततश्चांशप्रभेदः स्याद्गुरुत्वं ततएव हि ।
मारुतः पवते वायुः पोपवीतीति कथ्यते ॥
वह्निः ज्वलति सप्तार्चिः जाज्वल्यत इतीर्यते ।
एवं जले च भूमौ च क्रियासमभिहारतः ॥
पततीति प्रयोगस्स्यात् अंशभेदनिबन्धनः ।
लघुत्वमतिरिक्तं च किंवा न स्याद्विभागवत् ॥
तिर्यगूर्ध्वाधोगुरूणीत्याहुः केचिद्विधात्रयम् ।
तानि वाय्वग्निवारीणि क्रमादिह निदर्शनम् ॥
गुरुत्वातिशयोऽप्येषः यदाक्रमणमुच्यते ।
सांख्यैस्तमःकार्यभूतं गुरुत्वमभिधीयते ॥
पृथिवीजलवृत्त्येतत्पतनस्य प्रयोजकम् ।
तेजःपवनयोरूर्ध्वगतिहेतुर्लघुत्वकम् ॥
सत्त्वकार्यं ह्येषितव्यमिति तान्प्रत्युदीर्यते ।
अदृष्टकारितत्वोक्तिः पृथिव्यादावपीष्यताम् ॥
14 आद्यस्यन्दनहेतुस्तु द्रवत्वमभिधीयते ।
सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमथापरम् ॥
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः ।
पृथिव्यां घृतजत्वादौ सुवर्णादौ च तेजसि ॥
मसृणत्वं तद्विशिष्टं गुरुत्वं स्यन्दयेज्जलम् ।
माषादिषु तथा दृष्टेः द्रवत्वं नातिरिच्यते ॥

मसृणत्वं त्ववयवव्यूहः संयोगलक्षणः ।
इति सिद्धान्तयन्त्यन्ये तर्को न प्रतितिष्ठति ॥
15 चूर्णादिपिण्डीभावस्य हेतुः स्नेहो गुणान्तरम् ।
जलमात्रे त्वसाविष्टः नान्यथासिद्धिरन्यतः ॥
तैलादौ पार्थिवे तस्य प्रकर्षाद्दाहहेतुता ।
इति तार्किकसिद्धान्ते प्रत्युक्तिरियमुच्यते ॥
अग्नौ स्नेहविरुद्धं यद्रौक्ष्यं तत्स्याद्गुणान्तरम् ।
द्रव्यस्वभाववादस्तु सुलभस्सर्वसम्मतः ॥
16 लौकिकोऽलौकिकश्चेति संस्कारो द्विविधो मतः ।
वेगादिलक्षणस्त्वाद्यः चोदनालक्षणः परः ॥
वेगः स्थितस्थापकश्च भावनेति त्रिधाऽऽदिमः ।
मूर्तमात्रे तु वेगस्स्यात् कर्मजः, वेगजः क्वचित् ॥
स्थितस्थापकसंस्कारः क्षित्यादिषु मतः क्वचित् ।
भावनाख्यस्तु संस्कारः जीववृत्तिरतीन्द्रियः ॥
उपेक्षाऽनात्मकस्तस्य निश्चयः कारणं भवेत् ।
अदृष्टं सहदृष्टं च सदृकूदृष्टमिति त्रिधा ॥
सहकारी स्मृतेर्हेतोस्संस्कारस्य प्रदर्श्यते ।
इति तार्किकसिद्धान्तं शक्त्याऽपह्नुवते परे ॥
संस्कारः ज्ञानशक्तिः स्यात् कर्मशक्तेर्विलक्षणा ।
वेगः कर्मविशेषेऽन्तर्भवतीत्यपरे विदुः ॥

संस्थानस्य प्रभेदोऽयं स्थितस्थापकतेत्यपि ।
मीमांसकाः कर्मततिं वेगमाहुर्निरन्तराम् ॥
शरादौ प्रथमं वेगः नोदनेन प्रजायते ।
ततश्च कर्मसंतानः चरमोत्तरदेशजात् ॥
संयोगाद्वेगनाशस्स्यात् इति वैशेषिका विदुः ।
कर्मसंततिवद्वेगसंततिं गौतमा विदुः ॥
चोदनागम्यसंस्कारो बहुधा प्रतिपादितः ।
तद्धेतुर्गुणकर्मेति तच्छक्तिरिति केचन ॥
मीमांसकास्तु संस्कारं तं द्रव्यादिगतं विदुः ।
नैयायिकाः पुनः प्राहुः तं वै पुरुषसंगतम् ॥
स्वभाववादावकाशः वस्तुवादे प्रसज्यते ।
आत्मवादेऽदृष्टवादः, विस्पष्टः कुसुमाञ्जलौ ॥
केचित्तु ज्ञानसंस्कारः कर्मसंस्कार इत्यपि ।
विभजन्ते च तत्राद्यो भावनान्तर्गतो भवेत् ॥
अन्त्यो वीणामृदङ्गादिवाद्यवादनकौशलम् ।
शिल्पादिकौशलं वा स्यात्तत्सर्वं शक्तिसात्कृतम् ॥
संस्कारो वासना चैव भावनेत्यपि गीयते ।
पूर्वप्रज्ञा प्रत्यभिज्ञा श्रद्धा चैवास्य विस्तरः ॥
स एव ह्यात्मनो रूपं मुख्यमित्यभिधीयते ।
तेनाभ्युदयिकं नैश्श्रेयसं चाहुः विपश्चितः ॥

(41) बुद्धिवादः.

1 देहधातुविशेषो वा विकासो वाऽस्य कश्चन ।
ज्ञानमित्येव वक्तव्यं वरं धर्मिप्रकल्पनात् ॥
हृदयस्थः पित्तभागः प्रकाश इति वैद्यकम् ।
एवं चार्वाकसिद्धान्ते बुद्धिवस्तु विविच्यते ॥
बौद्धा विदुश्चित्तचैत्तमान्तरं बुद्धिलक्षणम् ।
चित्तं ज्ञानं चैत्तमेतत् रागाद्यं बहुधा स्थितम् ॥
तार्किकाः सुखबुद्ध्याद्यानष्टावात्मगुणान्विदुः ।
निमित्तकारणान्यत्वमपि कार्यस्य भेदकम् ॥
तद्भेदात्सुखदुःखाद्याः न विज्ञानात्मका मताः ।
सर्वं सुखं ज्ञानपूर्वं न ज्ञानं ज्ञानपूर्वकम् ॥
गर्भादौ च प्रबोधादौ प्रथमज्ञानसंभवात् ।
सांख्याः बुद्धिपरिणामाः बुद्ध्याद्या इति जानते॥
सर्वेऽप्यात्मपरिणामाः इत्याहुः शाबराः पुनः ।
कौमारिला आर्हताश्च तथौपनिषदा अपि ॥
केश्चित्तु धर्मभूतस्य ज्ञानस्य परिणामिनः।
एते विकारास्तेनात्मा सुखाद्याधार इष्यते ॥
आनुकूल्यप्रातिकूल्योपेक्षावस्थाविभेदतः ।
बुद्धिरेव सुखं दुःखमुपेक्षेत्यपि शक्यते ॥
इच्छाद्वेषादिकं बुद्धेः प्रपञ्चः स्यादिहान्यथा ।
ईर्ष्याभ्यसूयाकरुणाभयधैर्यबलादयः ॥

इच्छाद्वेषादिवत्किं वा न भवेयुः पृथग्गुणाः ।
केचिदिच्छाप्रभेदं तद्रागद्वेषादिकं विदुः ॥
रागोऽनुकूलविषयोपादानेच्छेति निर्णयः ।
प्रतिकूलजिहासा तु द्वेष इत्यभिधीयते ॥
तावेव तीव्रभावेन कामक्रोधाविति स्थितौ ।
अशनायापिपासाद्यास्सहस्रं स्युरिहान्यथा ॥
तस्माद्द्वेषो विशेषः स्यादिच्छाया इति निर्णयः ।
2 शृङ्गारादिरसाश्चापि बुद्धिभेदाः प्रकीर्तिताः ॥
शृङ्गारवीरबीभत्सरौद्राद्याः स्यू रसा दश ।
बुद्धेरात्मस्वरूपत्वे त्वात्मैव रस उच्यते ॥
बुद्धेरात्मगुणत्वे तु गुणा एव रसा मताः ।
बुद्धेश्चित्तस्वरूपत्वे सत्वोद्रेको रसो भवेत् ॥
बुद्धेस्स्वयंप्रकाशत्वे स्वयंवेद्यो रसो मतः ।
बुद्धेर्मानसपक्षे तु सोऽपि मानस उच्यते ॥
बुद्धिर्यद्यनुमेया स्यात्तदा चानुमितो रसः ।
एवं सिद्धान्तभेदेन रसतत्त्वं विकल्प्यते ॥
बुद्धेः प्रपञ्चः प्रामाण्यवादे सम्यग्विचिन्त्यते ।
सुखदुःखेच्छादयस्तु गुणास्स्युर्बुद्धिसात्कृताः ॥
3 प्रयत्नोऽपि धियो भेदः पौरुषेयी कृतिर्हि सा ।
सर्वत्राख्यातवाच्यैषा या त्वार्थी भावनोच्यते ॥

वाक्यार्थवादे तत्तत्त्वं स्फुटमग्रे भविष्यति ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥
एवं प्रयत्नत्रैविध्यं तार्किकैः परिकीर्तितम् ।
तत्र जीवनयोनिर्यः स च कैश्चिन्न कल्प्यते ॥
अदृष्टादेव च प्राणसंचारं ते विदुर्बुधाः ।
प्रवृत्त्यभाव एव स्यान्निवृत्तिरिति केचन ॥
निवृत्त्यभावः पवृत्तिरित्याशङ्का दुरुत्तरा ।
निवृत्तिर्यत्नभेदस्स्यादिति नव्याः विदुर्बुधाः ॥
4 आनूकूल्यप्रातिकूल्यवेद्यता सुखदुःखयोः ।
लक्षणं तत्रानुकूलं सुखं, दुःखं विपर्ययः ॥
प्रायो विदितमेवैतत् कैश्चिद्वेदान्तिभिः पुनः ।
अनुकूलतया वेद्यं सर्वं सुखमितीष्यते ॥
प्रतिकूलतया वेद्यं सर्वं दुःखमिति स्मृतम् ।
अतः सर्वे पदार्थास्स्युः सुखदुःखपदाभिधाः ॥
सैषाऽऽनन्दस्य मीमांसा युवा स्यादित्युपक्रमात् ।
अनुकूलतया वेद्यं सर्वमानन्दमब्रवीत् ॥
आनुकूल्यं विषयताविशेषः सर्वगामि तत् ।
तस्मात्सर्वं सुखं यद्वा तज्ज्ञानं सुखमिष्यते ॥
तद्धेतोरेव तत्त्वे तु किं वस्त्वन्तरचिन्तया ।
तस्मादविदितावस्थायोगित्वं तस्य नेष्यते ॥

साक्षिवेद्यत्वसिद्धान्तः पर्यायादयमेवहि ।
स्वप्रकाशात्मवादो वा सर्वमेकफलोन्मुखम् ॥
अत्रैव शाक्यभिक्षूक्तं वचनं त्ववधार्यताम् ।
तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ॥
तत्सुखादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ।
विकल्पो यदि बाह्येऽपि किं वक्तव्यमिहान्तरे ॥

(42) प्राकट्यवादः.

1 अथ बुद्धिप्रसङ्गेन प्राकट्यमिह कथ्यते ।
भाट्टदृष्टः प्रकटता गुणः न तु परैः बुधैः ॥
घटो हि विद्यमानोऽपि कस्यचिद्व्यवहार्यताम् ।
प्रपद्यते न सर्वेषामथवा नापि सर्वदा ॥
तस्माद्यदा व्यवहरेत् चेतनोऽसौ घटादिना ।
तदा तद्व्यवहारस्यानुगुणोऽतिशयोऽस्ति यः ॥
स ज्ञानमिति सर्वेऽपि कल्पयन्ति परीक्षकाः ।
उत्पन्नमेव तत् ज्ञानं प्रत्यक्षमिति केचन ॥
ज्ञानजन्यादतिशयादनुमेयमितीतरे ।
कीर्त्यतेऽसौ प्रकटता दृष्टता ज्ञाततेति च ॥
सामान्यतस्तु प्राकट्यमिति तैः परिभाष्यते ।
दृष्टता जायतेऽध्यक्षात्परोक्षात् ज्ञाततेत्यपि ॥

तत्रापरोक्षं दृष्टत्वं घटो दृष्टो मयेति हि ।
दृष्टत्वमनुसंधत्ते सर्वोऽप्यर्थस्य चात्मना ॥
नान्यथा ह्यर्थसद्भावो दृष्टस्सन्नोपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात्प्रमाणमुपजायते ॥
तथैवानुमिते ह्यर्थे मया ज्ञातोऽग्निरित्यपि ।
ज्ञातत्वमनुसंधत्ते ज्ञातता नाक्षगोचरा ॥
अथाप्यत्रोपपत्तिं ते सूक्ष्मदृष्ट्या प्रचक्षते ।
ज्ञातता ह्यात्मनोऽर्थेन संबन्धः प्राप्तिलक्षणः ॥
कर्तृकर्मात्मनोर्मातृमेययोराप्तिरेव सा ।
सैव प्राकट्यदृष्टत्वज्ञातत्वादिपदोदिता ॥
व्यापारोऽवश्यवक्तव्यः पुमान् येन प्रवर्तितः ।
अर्थोऽपि प्रापितश्च स्यात्प्रमेयाधिगतिर्हि सा ॥
मानसाध्यक्षवेद्या सा परोक्षो विषयो यदि ।
कल्पयेदेव विज्ञानमन्यथाऽनुपपत्तितः ॥
तं पदार्थान्तरं प्राहुः प्राकट्यमिति पण्डिताः ।
एवं प्राकट्यतत्त्वार्थो न्यायरत्नाकरे स्फुटः ॥
2 संविदं स्वप्रकाशां तु मन्यन्ते ये च तन्मते ।
स्वोत्पत्तिसमये संवित् वेत्तारं वेद्यमेव च ॥
स्वस्वरूपं भासयति न त्वेषां तु परस्परम् ।
संबन्धं स्वस्वरूपस्यानिष्पन्नत्वादसत्त्वतः ॥

संविदन्तरनिष्पत्तिसमये पूर्वसंविदः ।
नष्टत्वादुक्तसंबन्धो न तद्गोचरतामियात् ॥
किंतु संवेत्तृधर्मोऽसौ प्राप्तयाख्यः स्वात्मसाक्षिकः।
निष्पन्नायां तु संवित्तौ स संबन्धोऽवभासते ॥
ततएवच संवित्तिवस्तुकल्पनसंभवात् ।
संवित्तेः स्वप्रकाशत्वकल्पना गुरुताऽऽहृता ॥
3 प्राकट्यं स्यात् ज्ञानधर्मः इत्याहुः किल सौगताः।
आत्मधर्म इति प्राहुः प्राभाकरमतानुगाः॥
प्राकट्यं नाम सर्वेषु विषयेषु स्थितो गुणः ।
इति कौमारिलाः प्राहुः हेतुः प्रागेव विस्तृतः ॥
ज्ञानार्थयोश्च संबन्धः यस्स्याद्विषयताऽऽत्मकः ।
स ज्ञानरूप एवेति नैयायिकमुखा विदुः ॥
अतिरिक्तं पदार्थं तं नव्यनैयायिका विदुः।
विषयत्वविकल्पस्तु संबन्धेऽत्र प्रपञ्चयते ॥
सर्वासां च प्रतीतीनां बुद्धिसंबन्धमात्रतः ।
उपपत्तेः प्रकाशोऽन्यैः तदन्यो नाभ्युपेयते ॥
यदि कल्प्येत विषये प्राकट्यं व्यवहारतः ।
तद्धेतुत्वेन कल्प्या धीः तत्फलार्थं प्रकल्प्यताम् ॥
यदि तत्रैव तस्यैव प्राकट्यं ते धिया भवेत् ।
तथा ज्ञानादयोऽपि स्युः किमन्तर्गडुनाऽमुना ॥

प्राकट्यं प्रकटं वा स्यादन्यतः स्वत एव वा ।
आद्येऽनवस्थितिश्शेषे बुद्धिरेव तथा न किम् ॥
स्वदते मोदत इति यथा भाति घटस्तथा ।
शब्दानां नियतिस्सेयं नार्थधर्मप्रसाधकम् ॥
इष्टता द्विष्टता चैव कृतता च प्रणष्टता ।
तथा संस्कृतता च स्यात् अधिका ज्ञातता यथा ॥
प्राकट्यं हि गुणः प्रोक्तस्स रूपादौ कथं भवेत् ।
गतिक्रियायाः कर्मत्वं प्राप्त्या चेत्फलरूपया ॥
प्राप्तिक्रियायाः कर्मत्वं किमन्यदिह कथ्यते ।
तस्मात्प्राकट्यसिद्धान्तः मतिजाड्यनिबन्धनः ॥
ज्ञानस्य द्रव्यरूपत्वे स स्यात्संयोगलक्षणः ।
दृग्दृश्यसंगतिं चान्ये दुर्निरूपां विदुर्बुधाः ॥
स योगाचारमार्गः स्यात्तादात्म्ये पर्यवस्यति ।
तद्वादधूननायैव प्राकट्यपरिरक्षणम् ॥

(43) शब्दवादः

1 वैभाषिकास्तु शब्दादीन् पञ्चधाऽणून् प्रचक्षते ।
शब्दात्मानश्चतुर्ष्वेव केचिदित्यपरेऽब्रुवन् ॥
अणवस्सर्वशक्तित्वाद्भिदसंसर्गवृत्तयः ।
छायातपतमश्शब्दभावेन परिणामिनः ॥

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्या इति तन्मतम् ॥

2 निरोधोत्पत्तिधर्मं च शब्दं वस्त्वन्तरं परे ।
अनाश्रितं महाभूतसंक्षोभजनितं विदुः ॥

3 शब्दस्यावयवास्सूक्ष्माः सन्ति केचन पुद्गलाः ।
तैर्वर्णो जायते तैश्च शब्दोऽन्योऽवयवी भवेत् ॥
स च क्रियाश्रयः स्पर्शगुणवान् त्वगगोचरः ।
महत्त्वाणुत्वगुणवानुद्भवाभिभवाश्रयः ॥
स्वभूमेस्सोऽभिनिष्क्रम्य तिर्यगूर्ध्वमधोऽपि च ।
पुंसां श्रुत्यन्तरं चोपसर्पतीत्यार्हतं मतम् ॥

4 अजस्रमूर्तिर्यश्शब्दः सूक्ष्मत्वान्नोपलभ्यते ।
व्यजनाद्वायुरिव सः स्वनिमित्तात्प्रतीयते ॥
स एव कैश्चित्कुशलैराकाश इति पठ्यते ।
इत्याहुरपरे शब्दसाक्षात्कारविचक्षणाः ॥

5 अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन स्फोटं तं मनुते हरिः ॥
शब्दब्रह्म यदेकं यच्चैतन्यं प्राणिनां तथा ।
इदं त्रिभुवनं सर्वं यत्परीणाम इत्यपि ॥
हलायुधोऽब्रवीदेवं तथाऽऽलंकारिका विदुः ।
देवतां कांचिदुद्दिश्य भक्त्या यो वक्ति किंचन ॥

तस्य दोषं न यत्किंचिन्मनसाऽपि विचिन्तयेत् ।
इति चोक्तं परमतभङ्गे भागे चतुर्दशे ॥
नादैराहितबीजायां अन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥
अप्रच्युतस्वभावस्य तत्त्वादेकस्य वस्तुनः ।
स विवर्तो विभक्तान्यरूपोपग्राहिता तु या ॥
भेदानुकारेणासत्या स्वाप्नार्थप्रतिभासवत् ।
तद्वाक्यपदवर्णादिभेदस्सर्वो विकल्पना ॥
6 अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
वर्णाः पदानि वाक्यानि व्यक्तयो व्यक्तिहेतवः ॥
7 कौष्ठ्यो बहिर्निस्सरति समीरण इति स्फुटम् ।
स गच्छन् सर्वतोदिक्कः स्तिमितानिलनोदनम् ॥
करोति कर्णाकाशे च प्रयाति श्रुतियोग्यताम् ।
स मूर्तः प्रसरन् मूर्तैः अपरैः प्रतिहन्यते ॥
कुड्यादिभिरतो नास्य श्रुतिर्व्यवहितात्मनः ।
इति वायुं तत्क्रियां वा शब्दं शिक्षाविदो विदुः ॥
वायो त्वमेव प्रत्यक्षं ब्रह्मासीति नमोऽस्तु ते ।
इति शान्तिं तैत्तिरीयाः पठन्त्युपनिषन्मुखे ॥
8 गन्धादिसहसंस्थानः पञ्चभूतेष्ववस्थितः ।
शब्दोऽभिव्यक्तिधर्मेति प्रसिद्धं कापिलं मतम् ॥

9 आकाशस्य गुणश्शब्दो यस्संयोगविभागजः ।
वर्णध्वन्यात्मकः गत्वगान्धारत्वादिजातिमान् ॥
उत्पन्नः को विनष्टः कः इति बुद्धेरनित्यता ।
तदेवौषधमित्यादितुल्यस्सोऽयमिति भ्रमः ॥
क्षणिकस्स्वसजातीयशब्दमारभते पुनः ।
तारङ्गान्मौकुलाद्वाऽपि न्यायादिति हि तार्किकाः ॥

10 भगवानुपवर्षोऽपि मतान्येतान्यधिक्षिपन् ।
गौरित्यत्राथ कश्शब्दः इत्याद्याहेति शाबरम् ॥
वर्णात्मकास्तु ये शब्दा नित्यास्सर्वगतास्तथा ।
पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः ॥
वर्णराशिः क्रमव्यक्तः पदमित्यभिधीयते ।
पदे न वर्णा भिद्यन्ते वर्णेष्ववयवा नच ॥
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ।
ह्रस्वोदात्तद्रुतत्वादिधर्माः व्यञ्जकसंस्थिताः ॥
अध्यस्ता अपि वर्णेषु प्रतीत्यौपयिका मताः ।
व्यञ्जकस्तु ध्वनिस्सोऽयं वायुर्वा तद्गुणोऽस्तु वा ॥
अभिव्यञ्जकनानात्वात् वर्णो नानेव लक्ष्यते ।
नेत्रवृत्तिविभेदेन वर्णस्तैमिरिकैरिव ॥
यथा तुरगदेहस्थो वेगः पुंसोऽर्थसिद्धये ।
ध्वनिधर्मोऽपि दीर्घादिः वर्णानामुपकारकः ॥

यथा सर्वगता जातिः पिण्डदेशैव गृह्यते ।
नच कार्त्स्न्यगृहीताऽपि पिण्डेऽन्यत्र न दृश्यते ॥
तथा सर्वगतश्शब्दः नाददेशेषु गृह्यते ।
कार्त्स्न्येन च गृहीतोऽपि पुनरन्यत्र गृह्यते ॥
पिण्डोऽभिव्यञ्जको जातेः वर्णस्य व्यञ्जको ध्वनिः।
आश्रितानाश्रितत्वादिविशेषः क्वोपयुज्यते ॥
प्रतिभावाक्यवाक्यार्थवादाद्यनवकाशिनी ।
शब्दस्य नित्यता वर्णलक्षणस्यैव साध्यते ॥
11 व्यवहारानादितायै सैषा कूटस्थनित्यता ।
प्रवाहतस्तु नित्यत्वं क्रमस्याभ्युपगम्यते ॥
क्रमस्य कालरूपत्वात् कालो नित्यो विभुस्ततः ।
क्रमोऽपि कूटस्थनित्य इति केचिद्विदुर्बुधाः ॥
शब्दत्वं परसामान्यमपरं स्वरतादिकम् ।
गत्वादिकं न सामान्यं एकव्यक्त्याख्यदोषतः ॥
वर्णा एवावगम्यन्ते न पूर्वापरवस्तुनी ।
वर्णकारणभूता येऽवयवाः पूर्वशब्दिताः ॥
गत्वमत्वं चावयवी गोशब्दत्वं गणोऽपि वा ।
स्फोटश्चेति विकल्पाश्चापरशब्दाविवक्षिताः ॥
प्रयोजनं तु यज्जात्या तद्वर्णादेव जायते ।
व्यक्तिलभ्यं तु नादेभ्यः इति गत्वादिधीः वृथा ॥

त्रिगुणः पौद्गलो वाऽयं आकाशस्याथवा गुणः ।
वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः ॥
पदवाक्यात्मकः स्फोटः सारूप्यान्यनिवर्तने ।
एतेषामस्त्वनित्यत्वं नास्माकं तेषु नित्यता ॥
प्रत्यभिज्ञा यदा शब्दे जागर्ति निरवग्रहा ।
अनित्यत्वानुमानानि सैव सर्वाणि बाधते ॥
नादेन संस्कृताच्छ्रोत्राद्यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधं केचित्प्रचक्षते ॥
नैव वा ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात् ।
संस्कारानुकृतेः, यद्वत् महत्त्वाद्यवगम्यते ॥

12 एवं सिद्धान्तयन्त्यत्र कुमारिलविपश्चितः ।
अपिचैते स्फोटवादे नैयायिकमतेऽपि नः ॥
व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।
वर्णेषु, जैमिनेः पक्षः तथाऽपि न विरोत्स्यते ॥
नित्यत्वयत्नस्सर्वोऽपि गत्वादिषु भविष्यति ।
गकारादिवचस्त्वेतत्तेष्वेव न विरोत्स्यते ॥
इति स्पष्टं यतः प्राहुः युक्तिज्ञास्सरलाशयाः ।
अतस्तार्किकसिद्धान्तो नानिष्ट इति गम्यते ॥
कर्मैकं बुद्धिरप्येका जगत्येकास्सितो गुणः ।
वर्णोऽप्येको गकारादिरिति युक्तिर्गरीयसी ॥

शब्दनित्यत्ववादे हि विस्तरेण निरूपिता ।
तस्मात्सर्वेऽपि सिद्धान्ताः विश्रान्ताः किल युक्तिषु ॥

13 इति कौमारिलमतमथ प्राभाकराः पुनः ।
नभोगुणं ध्वनिं शब्दं वर्णं चापि प्रचक्षते ॥

14 भर्तृमित्रस्तु वदति श्रोत्रं नाम न किंचन ।
ध्वनिजन्यो हि संस्कारः श्रोत्रमित्युच्यते त्विति ॥
ध्वनिर्विषयसंस्कारं श्रोत्रसंस्कारमेव वा ।
करोति न तु संस्कारमात्रं श्रोत्रमितीतरे ॥

15 श्रोत्रमप्राप्यकारीति प्राहुस्ताथागताः पुनः ।
श्रोत्रवृत्तिश्शब्ददेशं गच्छतीति हि कापिलाः ॥
शब्दस्स्वभूमेर्निष्क्रम्य सर्पतीत्यार्हतं मतम् ।
स्वस्मिन् गृह्णाति संभूतमिति तार्किकपद्धतिः ॥
ध्वनयश्श्रवणग्राह्याः वर्णाः व्यज्यन्त इत्यपि ।
वर्णनित्यत्वसिद्धान्ते प्राहुर्मीमांसका बुधाः ॥

16 वेदानित्यत्वभीत्यैव स्थाप्यते वर्णनित्यता ।
शब्दनित्यत्ववादस्थं वार्तिकं त्ववधार्यताम् ॥
स्थिते कूटस्थनित्यत्वे व्यवहारस्य नित्यता ।
कूटस्थेन विनैतेन न तस्यालम्बनं भवेत् ॥
प्रसिद्धत्वादृते सर्वो व्यवहारो हि नेष्यते ।
तस्माद्वेदप्रमाणार्थं नित्यत्वमिह साध्यते ॥

नित्येषु सत्सु वर्णेषु व्यवहारात्क्रमोदयः ।
घटादिरचना यद्वत् नित्येषु परमाणुषु ॥
अणुकल्पाश्च वर्णांशाः न सन्त्यनुपलम्भनात् ।
द्रष्टव्यो विस्तरस्तत्र, चेत्कुतूहलशीलता ॥
तस्माच्छ्रोत्रग्राह्यतैव शब्दलक्षणमिष्यते ।
अर्थप्रत्यायकत्वं तु स्फोटवादिभिरुच्यते ॥
तत्रेतरेषां सिद्धान्तस्वान्तमित्थं विचिन्त्यते ।
वर्णानामेव वेदत्वे वाङ्मात्रं नित्यमापतेत् ॥
नहि वर्णाः स्वयं वेदाः वाक्यं तद्व्यपदेशभाक् ।
अस्वातन्त्र्यं तु संदर्भे स्यात्प्रवाहनिबन्धनम् ॥
तत्र प्रवाहनित्यत्वं संदर्भेऽपि समत्यजन् ।
तार्किका हीश्वरत्वं स्यात्तदानीं पुष्कलं त्विति ॥

(44) ध्वनिवादः.

1 एवं वर्णविकल्पोऽत्र संगृहीतः प्रमाणतः ।
अथ ध्वनिविकल्पोऽपि विद्वद्भिः श्रूयतां मुदे ॥
शब्दत्वं नाम सामान्यं ध्वनिमाहुः परे बुधाः ।
ध्वनिर्नादश्च घोषश्चेत्यनर्थान्तरवादिनः ॥
अतएव हि संस्थासु दूरस्थैः श्रूयते ध्वनिः ।
न व्यञ्जनं न स्वरो वा न पदं वाक्यमेववा ॥

शब्दाः स्युस्तन्मते नूनं स्वरव्यञ्जनलक्षणाः ।
ततो विशेषसामान्यभा स्स्यात् ध्वनिशब्दयोः ॥

2 शब्दत्वव्याप्यसामान्यं ध्वनित्वं कतिचिद्विदुः ।
मतमेतत्तु बहुशो भवेत्तार्किकसम्मतम् ॥

3 अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
शाब्दिकैः व्यक्तयस्तास्तु ध्वनित्वेन प्रकल्पिताः ॥
तन्मते ध्वनयो ज्ञेयाः स्वरव्यञ्जनलक्षणाः ।

4 अनित्यस्फोटपक्षे तु ध्वनितत्त्वमिदं मतम् ॥
यः शब्दः प्रथमं जातः स स्फोट इति कीर्त्यते ।
तद्रूपप्रतिबिम्बावग्राहिणः सर्वतोमुखाः ॥
मन्दप्रदीपप्रकाशरूपभानक्रमेण ये ।
भासमानाः श्रुतिं वार्णीं ध्वनयो विभजन्ति ते ॥

5 स्फोटानित्यत्वपक्षे तु यस्संयोगविभागजः ।
स ध्वनिः तदभिव्यङ्ग्यः स्फोटो वर्णविभागशः ॥

6 आदौ कारणतो जातः शब्दः कैश्चित् ध्वनिः स्मृतः ।
नादो द्वितीयादिशब्दः तद्व्यङ्ग्यः स्फोट इष्यते ॥

7 तथाऽऽकाशगुणश्शब्दः ध्वनिस्स्यात् गौरवे मते ।
वर्णास्ते तदभिव्यङ्ग्याः तेऽप्याकाशगुणा मताः ॥

8 वायुसंयोगादिरेव संयुक्तादिस्स एव वा ।
ध्वनिरित्याहुरपरे वायव्यध्वनिवादिनः ॥

यद्वा वायुगुणश्शब्दो ध्वनिनादपदाभिधः ।
पूर्वकल्पेऽतीन्द्रियस्स्यात् द्वितीये श्रुतिगोचरः ॥
9 ध्वनिर्नादश्च घोषश्च वीणाघण्टादिभेदतः ।
प्रायेण व्यवहारेण विभिन्ना लोकविश्रुताः ॥
एवं ध्वनिविकल्पस्तु बहुधा प्रसमीक्ष्यते ।
शब्दनित्यत्वाधिकृतौ वाक्यपद्यां च विस्तृतः ॥

(45) अदृष्टवादः.

1 धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ।
गङ्गास्नानादियागादेः व्यापारस्स तु कीर्तितः ॥
नाश्यस्त्वसौ कर्मनाशास्पर्शसंकीर्तनादिना ।
अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ॥
प्रायश्चित्तादिना नाश्यः जीववृत्ती त्विमौ गुणौ ।
संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः ॥
स्वगुणाः परमाणूनां विशेषाः पाकजा मताः ।
इमौ तु तत्त्वविज्ञानादपि क्वापि विनश्यतः ॥
अपूर्वं कर्मनिर्वर्त्यं वृद्धमीमांसका विदुः ।
2 शाबरा ब्रुवते धर्मं कर्म यागादिलक्षणम् ॥
तस्मात्फले प्रवृत्तस्य यागादेश्शक्तिमात्रकम् ।
उत्पत्तौ वाऽपि पश्चादेः अपूर्वं न ततः पृथक् ॥

3 अपूर्व एव वाक्यार्थः नियोगः धर्मशब्दितः ।
इति प्राभाकराः प्राहुः ते वाच्यापूर्ववादिनः ॥
4 कर्मजन्यो हि संस्कारः पुंसो बुद्ध्यादिवद्गुणः ।
तस्य चाफलसंयोगादवास्थितिरुपेयते ॥
स यागदानहोमादिजन्यो धर्मगिरोच्यते ।
ब्रह्महत्यादिजन्यस्तु सोऽधर्म इति कथ्यते ॥
इति कौमारिलाः प्राहुः ते कल्प्यापूर्ववादिनः ।
5 सांख्याः पुनः प्राहुरन्तःकरणस्याचिदात्मनः ॥
बुद्धेः वृत्तिविशेषं तत् अदृष्टमिति कल्पितम् ।
6 धर्मः स्यात् शाक्यभिक्षूणामदृष्टा चित्तवासना ॥
7 धर्मत्वेन व्यपदिशन्त्यार्हताः पुण्यपुद्गलान् ।
विभुरूपं तत्तु तत्त्वान्तरं चेत्यपि कीर्त्यते ॥
8 आराध्यदेवताप्रीतिरिति वैयासिकं मतम् ।
स च सर्वेश्वरस्यैव सङ्कल्प इति निर्णयः ॥
9 विस्तरस्तस्य च पुनर्विवेकाय विलिख्यते ।
शास्त्रैकसमधिगम्यं श्रेयसस्साधनं तु यत् ॥
स धर्म इति जैमिन्याचार्यैर्लक्षणमुच्यते ।
तस्यैव शाबरो भाट्टो गौरवो निर्णयः कृतः ॥
द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥

श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥
कार्यमात्रे कारणं तत् अदृष्टमिति वैदिकाः ।
तत्र लोकायताः प्राहुः कुतोऽदृष्टं प्रकल्प्यते ॥
नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन ।
विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥
वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः ॥
दृष्टेषु कारणेष्वेव सूक्ष्मो भेदः प्रकल्प्यताम् ।
किं धर्म्यन्तरकॢप्त्येति तत्रेत्थं यौक्तिका विदुः ॥
10 जगतो यच्च वैचित्र्यं सुखदुःखादिभेदतः ।
कृषिसेवादिसाम्येऽपि विलक्षणफलोदयः ॥
अकस्मान्निधिलाभश्च विद्युत्पातश्च कस्यचित् ।
क्वचित्फलमयत्नेऽपि यत्नेऽप्यफलता क्वचित् ॥
तदेतद्दुर्घटं दृष्ट्वा कारणाद्व्यभिचारिणः ।
तेनादृष्टमुपेतव्यमस्य किंचन कारणम् ॥
अदृष्टो भूतधर्मस्तु जगद्वैचित्र्यकारणम् ।
यदि कश्चिदुपेयेत को दोषः कर्मकल्पने ॥
संज्ञामात्रे विवादश्च तथा सत्यावयोर्भवेत् ।
भूतवद्भूतधर्मस्य नच दृश्यत्वसंभवः ॥

दृष्टश्च साध्वीसुतयोर्यमयोः तुल्यजन्मनोः ।
विशेषो वीर्यविज्ञानसौभाग्यारोग्यसम्पदाम् ॥
स्वाभाविकत्वं कार्याणां बहुधा सुनिराकृतम् ।
तस्मात्कर्मभ्य एवैष विचित्रजगदुद्भवः ॥
सापेक्षत्वादनादित्वात् वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥
चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
संभागो निर्विशेषाणां न भूतैस्संस्कृतैरपि ॥
अथ स्यात्कर्मवैचित्र्यं कर्मान्तरकृतं यदि ।
अनवस्था स्वतः तस्माज्जगत्स्यादिति चेन्न तत् ॥
कर्मणां शास्त्रतो ज्ञाता विचित्रफलशक्तता ।
दृष्टार्थेषु च वाक्येषु दृष्टा प्रत्यक्षतश्च सा ॥
तस्माद्दृष्टस्य कार्यस्य युक्ता कारणकल्पना ।
कारणस्य त्वदृष्टत्वे किं हेत्वन्तरचिन्तया ॥
हेत्वन्तरनिमित्तेऽपि कर्मवैचित्र्यकल्पने ।
संसारस्य ह्यनादित्वान्नानवस्था भयावहा ॥
शपता यत्कृतं पुण्यं शप्यमानमुपैति तत् ।
शप्यमानस्य यत्पापं शपन्तमुपगच्छति ॥
तथाच पुण्यः पुण्येन पापः पापेन कर्मणा ।
जायते जन्तुरित्येवं धर्मशास्त्रेषु पठ्यते ॥

11 इति यौक्तिकसिद्धान्ते धर्मादिरनुमीयते ।
चोदनैकाधिगम्यत्वसिद्धान्ते किंचिदुच्यते ॥
विहितप्रतिषिद्धत्वे मुक्त्वाऽन्यत् नच कारणम् ।
धर्माधर्मावबोधस्य तेनायुक्ताऽनुमानगीः ॥
अनुग्रहाच्च धर्मत्वं पीडातश्चाप्यधर्मताम् ।
वदतो जपसीध्वादिपानादौ नोभयं भवेत् ॥
क्रोशता हृदयेनापि गुरुतल्पादिगामिनाम् ।
भूयान् धर्मः प्रसज्येत भूयसी ह्युपकारिता ॥
अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ।
हृदयक्रोशनं कस्मात् दृष्टां पीडामपश्यतः ॥
पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः ।
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ॥
तस्मादनुग्रहं पीडां तदभावमपास्य च ।
धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ॥
हिंसायाः विषयो यादृक् प्रेत्य कर्तुस्तथाविधम् ।
फलं प्रजायते यद्वच्छास्त्रोक्ते दानकर्मणि ॥
मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥
य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ।
सुरापानादिभिश्चापि विपक्षैः व्यभिचारिता ॥

क्षत्रं क्षत्रस्य यद्धर्मः नास्ति तस्मात्परं भुवि ।
इति सृष्टिप्रकरणे श्रुता ज्ञातपथी श्रुतिः ॥

12 इत्याहुर्धर्ममीमांसाविदो यद्यपि युक्तितः ।
तथापीदं बुधास्तत्र विमृशन्ति धिया यथा ॥
अनुग्रहो निग्रहो वा नैकस्यात्र विवक्षितः ।
अन्यथा दण्ड्यदण्डादावपि पापादि संभवेत् ॥
निग्राहकं भूयसां यत् यच्चानुग्राहकं तथा ।
विवक्षितं तदेवात्र जपादिष्वपि चास्ति तत् ॥
यत्परंपरया साक्षाद्वा स्याच्चेदुपकारकम् ।
भूयसां धर्म एवासौ विपरीतं विपर्ययः ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥
आर्याः प्रशंसन्ति यत्तु क्रियमाणमितीरितम् ।
आपस्तम्बादिभिः व्यासमहर्षिप्रमुखैः पुनः ॥
श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥
इत्युदीरितमेतेन निष्कृष्टार्थोऽयमुच्यते ।
एतावज्जन्मसाफल्यं प्राणिनामिह देहिषु ॥
प्राणैरर्थैर्धिया वाचा श्रेयआचरणं सदा ।
निष्कर्षोऽयं सर्वनरदेशकालानुपप्लुतः ॥

13 कर्मानुष्ठानजनितदेवताबुद्धिरेव हि ।
अदृष्टमिति सिद्धान्तः बादरायणसम्मतः ॥
यागो हि देवतापूजा पूजनं प्रीणनं मतम् ।
अतो यज्ञाराधितस्सन् फलं देवः प्रयच्छति ॥
नच प्रीतेरपूर्णत्वं नच कोपात्सदुःखता ।
फलप्रदित्सारूपत्वादुभयोरपि कर्मणोः ॥
विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥
इति लाघवयुक्तिस्तु शास्त्रेणैव व्यपोद्यते ।
प्रजया पशुभिश्चैव तृप्त एनं समर्धयेत् ॥
अन्नादो वसुदानश्चेत्याद्याः बह्वीरधीयते ।
यथा स्वर्गपरो वेदः तथा वै देवतापरः ॥
प्रत्यक्षमुभयं कस्माद्देवताद्वेषसंभवः ।
कृष्यादौ मर्दनादौ च फलं स्यात्स्वस्वशक्तितः ॥
न तद्वदेव शास्त्रीये कर्मण्यपि कुतो भवेत् ।
नहि दृष्टान्तमात्रेण श्रुतस्य त्याग इष्यते ॥
राज्ञामाज्ञानुवृत्त्यादेः प्रीतिकोपौ हि सिध्यतः ।
प्रधानकर्मवत्प्रीतिः गुणकर्मस्वपीष्यते ॥
केचित्सत्त्वसमुद्रेकं द्रव्यादिष्वनुजानते ।
सोऽपीशसंकल्पनिघ्नः तं विना न तृणं चलेत् ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
इत्याह भगवान् देवः सर्वदेवमयोऽच्युतः ॥
आत्मनां विभुतासिद्ध्यै गीताऽधीता कुमारिलैः ।
अन्यत्र विस्मृता कस्मात् प्रमादो धीमतामपि ॥
तस्मादिन्द्राद्यपायेऽपि न फलस्य च्युतिः क्वचित् ।
सुप्तिर्मृतिः यस्य न स्तः तस्य चाज्ञा श्रुतिः स्मृतिः ॥
पितृत्वं देवतात्वं च केषां चित्कर्मणां फलम् ।
तेषां समाराध्यताऽतः द्वारं तत्सर्वशासितुः ॥
बहुधा दृश्यते धर्मः दुर्ज्ञानः सूक्ष्म इत्यपि ।
महर्षयोऽपि धर्मज्ञाः प्राहुरन्यत्र विस्तरः ॥

(46) कर्मविभागवादः.

वेदेन सकलं कर्म काम्यमेवोपदिश्यते ।
इत्येतत् भर्तृमित्रादेः मतमित्यूहितुं क्षमम् ॥
यतस्ते नोपगच्छन्ति फलं नित्यनिषिद्धयोः ।
इति कौमारिलाः प्राहुरित्यूचे पार्थसारथिः ॥
निषिद्धस्य फलाभावे न त्याज्यमितिचेन्न तत् ।
द्विजातिकर्मणो हानिः परत्रासिद्धिरित्यपि ॥
तमेते नरकं प्राहुरिति गौतमसूत्रणम् ।
नरकं स्यान्यक्करणं नीचैर्गमनमेव वा ॥

नास्यास्मिन् रमणं वेति निरुक्तं यास्कसूरिणा ।
इति गौतमशास्त्रस्य भाष्ये मस्करिणोदितम् ॥
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥
हिंसास्तेयानृताब्रह्मचर्यग्रहणभेदतः ।
निषिद्धं कर्म सकलं संजग्राह पतञ्जलिः ॥
यत् शौचसंतोषतपस्स्वाध्यायेश्वरसेवनम् ।
विहितस्य च सर्वस्य पञ्चधा संग्रहो ह्ययम् ॥
2 नित्यकाम्यविभेदेन विहितं द्विविधं पुनः ।
काम्यमेव हि कर्मेति यदि मीमांसका विदुः ॥
सर्वस्यैव च काम्यत्वे कामना न भवेद्यदि ।
सर्वोऽपि वैदिकः पन्थाः भवेद्दत्तजलाञ्जलिः ॥
कैश्चित्तु सकलं कर्म नित्यमेवेति भण्यते ।
तथात्वे पुरुषाशक्त्या शास्त्रं हि स्यादवत्सलम् ॥
तन्नित्यकाम्यभेदेन विभागो न्यायविन्मतः ।
तत्र नित्यं तु शक्याङ्गं काम्यमुक्ताङ्गकं मतम् ॥
नित्यकाम्यस्वरूपैक्ये विनियोगपृथक्त्वतः ।
फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः ॥
नित्येन काम्यसिद्धिं तु कल्पकाराः प्रचक्षते ।
प्रत्यवायपरीहारफलं नित्यं प्रचक्षते ॥

पापक्षयफलं केचित् काम्यं चापि क्वचित् यदा ।
आरब्धे कामनाहानावुक्ताङ्गाशक्तिसंभवे ॥
नित्यं सामान्यफलतः काम्यं फलविशेषतः ।
पापक्षयादिस्सामान्यं पश्वादिस्तु विशेषतः ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
एवमेव प्रवृत्तिश्चेच्चैतन्येनास्य किं फलम् ॥
3 नैमित्तिकं कर्मभेदं प्रायश्चित्तादिलक्षणम् ।
प्राहुः परे तत्तु कर्म काम्यमेवेति केचन ॥

(47) हिंसावादः.

1 कर्माङ्गपशुहिंसादिः हिंसेत्येव हि कापिलाः ।
यत्पशुर्मायुमित्यादिमन्त्रलिङ्गेन सा दृढा ॥
तत्त्याज्यं दोषवदिति चान्ववादीद्यदूत्तमः ।
यज्ञदानतपःकर्म न त्याज्यमिति चाब्रवीत् ॥
2 अपि पापं निषिद्धं स्यात् श्येनस्य विहितत्वतः ।
यागाङ्गपशुहिंसावत् हिंसात्वं नेति केचन ॥
3 साक्षान्मरणहेतुर्यः स हिंसाशब्दशाब्दितः ।
श्येनस्यातादृशत्वेन न हिंसेत्यपरे विदुः ॥
अदृष्टाद्वारकत्वेन मृतिः कैश्चिद्विवक्ष्यते ।
मरणानुगुणस्साक्षाद्व्यापारो वधलक्षणः ॥

अभिचारे कृते प्रायश्चित्तस्यापि विधानतः ।
अधर्म एव श्येनादिरिति तार्किकपद्धतिः ॥
धर्मस्त्विष्टस्य बलवदनिष्टाननुबन्धिनः ।
साधनं स्यात्तता हिंसानिषेधश्श्येनगोचरः ॥
4 मीमांसकास्तु श्येनस्य धर्मत्वमनुजानते ।
तत्र कौमारिलमते हिंसा श्येनफलं मतम् ॥
अभिचारो हि मरणानुगुणव्यापृतिर्मता ।
श्येनो विधीयते तस्मान्न निषेधस्य गोचरः ॥
तथाऽपि तामसत्वेन शिष्टास्तावन्न कुर्वते ।
प्रभाकरमते श्येनापूर्वं कर्तव्यमिष्यते ॥
यागो निषेधविषयः विरोधविरहस्ततः ।
प्रायेणाधर्म इत्येव परेषामिव सम्मतः ॥
कर्मस्वपि च काम्येषु विधिरेव प्रवर्तकः ।
फलरागात्प्रवृत्तिश्चेत् निषिध्येत क्रतौ वधः ॥
साध्यसाधनविध्यन्तलक्षणांशत्रयास्थिता ।
हिंसा तत्र फलांशस्था निषेधाविषयो मता ॥
अंशद्वये तु या नाम तन्निषेधाभिधायिनाम् ।
अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ॥
निषेधनानवष्टब्धे विषये न ह्यनर्थता ।
प्रत्यक्षादेरशक्यत्वात् कल्प्यते निष्प्रमाणिका ॥

ज्ञानमेव च शक्तीनां नावापोद्वापनक्रियाः ।
ज्ञायन्ते शास्त्रतस्तास्तु क्रियाभेदव्यवस्थिताः ॥
व्यवस्थाऽशक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ।
अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ॥
इति वार्तिककारीययुक्तिसिद्धान्तसंग्रहः ।
5 अथ वेदान्तिनां तत्त्वविदां सिद्धान्तसंग्रहः ॥
अनर्थपर्यवसितः दुःखस्य जनकश्च यः ।
व्यापारस्स हि हिंसेति श्रीरामानुजनिर्णयः ॥
सर्वापहारे नाव्याप्तिः नातिव्याप्तिश्चिकित्सने ।
यज्ञे वधोऽवधो यस्मात्पशुर्देवत्वमृच्छति ॥
यत्किंचिदपि कार्यं तु नियोगादेव कुर्वताम् ॥
न प्रत्यवायशङ्काऽस्ति शासनादिव भूभृताम् ॥
श्येनादिवचनं शत्रुहिंसायत्नवतां स्वतः ।
उपायबोधनपरमिति वैषम्यकल्पना ॥
तत्र प्रायश्चित्तकाम्यपश्वालम्भनकर्मणाम् ।
प्रत्यवायापादकत्वप्रसङ्गः श्येनसाम्यतः ॥
अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्ती भवेन्नरः ॥
इत्यादिशास्त्राद्विहिताकरणादिनिमित्ततः ।
प्रत्यवायाद्धि भीतोऽसौ प्रायश्चित्तमिहेच्छति ॥

कामी च पुत्रपश्वन्नस्वर्गभूत्यादिसाधने ।
प्रवर्ततेऽतः श्येनादिसाम्यं स्यान्निष्प्रतिक्रियम् ॥
तत्त्वटीकाकृतामुक्तिरत्रैषाऽप्यवधार्यताम् ।
एषौपनिषदानां स्यात् गतिः प्रायेण सम्मता ॥
मुमुक्षुत्वामुमुक्षुत्वदशाभेदेन कर्मिणः ।
कर्मैकं पापपुण्यत्वे साध्यैक्येऽपि समश्नुते ॥
श्येनादेश्चोदितस्यैव द्वैरूप्यं द्विविधश्रुतेः ।
एकस्यैवैकदैवास्ति कालभेदे तु किम्पुनः ॥
श्येनेषुवज्रप्रभृतिष्वपि नानर्थचोदना ।
इष्टस्यारातिभङ्गादेरुपायांशोपदेशतः ॥
घोरोपायान्तरेभ्यश्च लभ्येतात्र निवारणा ।
लघुनिष्कृतिनिस्तार्यं ह्यभिचारं प्रचक्षते ॥
किंचानभिचरन् षट्सु पतेदित्यपि शिष्यते ।
तेन धर्मोपयुक्तत्वमाततायिवधे विदुः ॥
6 वेदो हिंसामयस्तस्मादनुपादेय इत्यपि ।
आपाततस्तु पश्यन्तो बाह्या नार्हन्ति शङ्कितुम् ॥
7 अथ कार्तयुगो धर्मः पुंविशेषव्यवस्थितः ।
नारायणीये विस्पष्टः भारते शान्तिपर्वणि ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥

अजेन यष्टव्यमिति प्राहुर्देवाः द्विजोत्तमान् ।
स चाप्यजश्छाग एव नान्यः पशुरिति स्थितिः ॥
बीजैर्यज्ञेषु यष्टव्यमित्याहुर्मुनयः पुनः ।
अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ ॥
व्रीह्यादिभिः पुनरजैः त्रिवर्षपरमोषितैः ।
बीजैरजं पिष्टमयं कृत्वा यष्टव्यमित्यपि ॥
नैष धर्मः सतां देवाः यत्र वध्येत वै पशुः ।
अथ ते संविदं कृत्वा विबुधा ऋषयस्तथा ॥
अपृच्छन् सहसाऽभ्येत्य वसुं राजानमन्तिकात् ।
भो राजन् केन यष्टव्यं अजेनाहोस्विदौषधैः ॥
देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् ।
छागेनानेन यष्टव्यमेवमुक्तं वचस्तदा ॥
कुपितास्ते ततस्सर्वे मुनयस्सूर्यवर्चसः ।
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत ॥
तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं ततश्चैनममुञ्चत ॥
तस्मिन् मुहूर्ते संजज्ञे राजोपरिचरो वसुः ।
सशरीरो गतश्चैव ब्रह्मलोकान् नृपोत्तमः ॥
इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः ।
अहिंस्या यज्ञपशवः युगेऽस्मिन्न तदन्यथा ॥

चतुष्पात्सकलो धर्मः भविष्यत्यत्र वै सुराः ।
ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ॥
प्रोक्षिता यत्र पशवः वधं प्राप्स्यन्ति वै मखे ।
यत्र पादश्चतुर्थो वै धर्मस्य न भविष्यति ॥
यत्र देवाश्च यज्ञाश्च तपस्सत्यं दमस्तथा ।
अहिंसाधर्मसंयुक्ताः प्रचरेयुस्सुरोत्तमाः ॥
स वो देशस्सेवितव्यः मा वो धर्मः पदा स्पृशेत् ।
इत्याह भगवान् साक्षाद्देवान्प्राति हरिः स्वयम् ॥

8 अतीते तु महाकल्पे जातो विद्वान् बृहस्पतिः ।
तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः ॥
स राजा भावितः पूर्वं दैवेन विधिना वसुः ।
पालयामास पृथिवीं दिवमाखण्डलो यथा ॥
तस्य यज्ञो महानासीत् अश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायः तत्र होता बभूव ह ॥
प्रजापतिसुताश्चात्र सदस्याश्चाभवन् त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥
संभृतास्सर्वसंभाराः तस्मिन् राजन् महाक्रतौ ।
न तत्र पशुघातोऽभूत् राजैवावस्थितोऽभवत् ॥
अहिंस्रश्शुचिरक्षुद्रः निराशीः सर्वसंस्तुतः ।
आरण्यकपदोद्भूता भागास्तत्रोपकल्पिताः ॥

प्रीतस्ततोऽस्य भगवान् देवदेवः पुरातनः ।
साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥
स्वयंभागमुपाघ्राय पुरोडाशं गृहीतवान् ।
अदृश्येन कृतो भागः देवेन हरिमेधसा ॥
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ।
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् ॥
शान्तियज्ञरतो दान्तः ब्रह्मयज्ञे स्थितो मुनिः ।
वाङ्मनःकर्मयज्ञश्च भविष्याम्युपगायने ॥
कुर्याद्घृतपशुंसङ्गे कुर्यात्पिष्टपशुं तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥

9 पुरूरवस आख्याने पुराणे वैष्णवेऽपिच ।
एकोऽग्निरादावभवत् स च त्रेधा प्रवर्तितः ॥
तेन मन्वन्तरे तत्र ततो यज्ञसमुद्भवः ।
इति श्रुतं ततः पूर्वं हिंसा नास्तीति गम्यते ॥
एवंच देशकालादेर्विपर्यासात्तदातदा ।
हिंसाऽहिंसाविभागः स्यात्पुंशक्त्यनुगुणस्त्वसौ ॥

10 अत्र केचित्पुरा हिंसाबहुला जगति स्थिता ।
प्रवृत्तिरथ बुद्धादेरुपदेशादनन्तरम् ॥
अहिंसा प्रथमो धर्मः इति सर्वत्र सुस्थितम् ।
स एव धर्मः प्रागासीदस्माकमिति वैदिकैः ॥

पुराणपुरुषैर्व्यासपराशरमुखैर्बुधैः ।
परिष्कृतो वेदमार्ग इति युक्त्या प्रचक्षते ॥
तदिष्टमपिचास्माकं अनादित्वेन जानताम् ।
व्यवहारं प्रपञ्चस्य चक्रवत्परिवर्तितम् ॥
अनादितोऽप्यहिंसायाः धर्मत्वे परिनिष्ठिते ।
बुद्धेनापि हि तत्साक्षात्कर्तुं शक्येत नान्यथा ॥
तस्मादहिंसाधर्मत्वं देशकालानुपस्कृतम् ।
आविर्भावतिरोभावौ देशे काले भविष्यतः ॥
सनातनस्स एवासौ धर्म इत्याहुरादिमाः ।
मन्वाद्याः परमोदाराः तस्मात्सर्वं समञ्जसम् ॥

(48) अदृष्टसामर्थ्यम्.

1 अथात्रावसरात्कर्मसामर्थ्ये किंचिदुच्यते ।
कर्मप्राधान्यवाङ्मात्रान्मूढाः पौरुषशालिनः ॥
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठति ।
कर्मी कर्मापि कृत्वाऽन्यो न प्राप्यमधिगच्छति ॥
अज्ञो जन्तुरनीशोऽयमात्मनस्सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेववा ॥
कर्मादिनिरपेक्षं च कारणं परमेश्वरः ।
सर्वेषामिति सिद्धान्तमाहुः पाशुपताः परे ॥

शरीरधारणं पुंसां सर्वेषामप्यपेक्षितम् ।
चिरकालं तन्न शक्यं कर्तुं यत्नशतैरपि ॥
नचौदासीन्यमात्रेण तन्निवृत्तिश्च दृश्यते ।
नियतावधिको देहः स्यादारम्भककर्मणा ॥
विवाहो जन्म मरणं जरा चेत्येवमादयः ।
नियता इति शास्त्रेषु स्मरन्त्यपिच कार्मिकाः ॥
2 अत्रायमाशयो ज्ञेयः न्यायाचार्यैः प्रकाशितः ।
चित्राक्षेपपरीहारे भाष्यवार्तिकयोरपि ॥
अनुरुध्यैव तं न्यायं वेदान्ताचार्यसूरिभिः ।
गीतातृतीयतात्पर्यचन्द्रिकायां स्फुटीकृतः ॥
नियतं चाप्यनियतं द्विधा कर्मफलं स्मृतम् ।
आद्यं प्रबलशापादिसंभवं नियतं तु तत् ॥
इतरत्स्यादनियतं देशकालाद्यपेक्षया ।
नतु स्वरूपतो येन निष्फलत्वं प्रसज्यते ॥
यच्चात्रानियतं तत्रावकाशः पुरुषस्य हि ।
यच्चापि दृष्टसामग्रीवैकल्याद्विकलं भवेत् ॥
यच्चाधिकृत्य सुधियां लोकानुग्रहकारिणाम् ।
नीतिमन्त्रौषधप्रायश्चित्तशास्त्रादिदेशना ॥
अन्यथा विजिगीषूणां समृद्धपरिपन्थिनाम् ।
चतुरङ्गादिकं नैव स्वीकार्यं स्यान्महीक्षिताम् ॥

भेषजं नोपभुज्येत विबुधैरातुरैरपि ।
स्वेच्छया करणाभावे शास्त्रादेरप्यनुत्थितिः ॥
तत्सा स्वतन्त्रता पुंसां कर्मकर्तृत्वकारणम् ।
येच्छानुकूलानुष्ठानसामर्थ्येऽन्यानिवार्यता ॥
3 अथ प्राक्प्राक्कर्ममूलज्ञानेच्छादिनियन्त्रितः ।
कथं स्वतन्त्रः पुरुषो नदीवेगहतो यथा ॥
नहीच्छोत्पत्तिमात्रेण पुंसामर्थ्यं विनश्यति ।
प्रायेण विपरीतेच्छामसत्कुर्वन्ति सूरयः ॥
सत्यामप्योदनेच्छायां विषसंपृक्तताधिया ।
तन्निवारणसामर्थ्यं चेतनस्येह दृश्यते ॥
निधिलाभोपायदृष्ट्या नरः काष्ठनिचायकः ।
विनिवारयितुं शक्तः काष्ठसंपादनस्पृहाम् ॥
एवंच प्रत्यवायस्य तथाऽधिकफलस्य वा ।
ज्ञाने सतीच्छान्तरस्य दृश्यते विनिवारणा ॥
पुंसां स्वातन्त्र्योपपत्त्या कर्तृत्वं युज्यते ततः ।
तत्कृत्याकरणाकृत्यकरणेच्छानिवारणे ॥
क्षमोऽपि प्रत्यवायस्यानादरेण विमूढधीः ।
न निवारयतीत्येषोऽपराधो दण्डकारणम् ॥
4 सामान्येनेश्वरः कर्ता ह्यङ्कुराणां जलं यथा ।
विना तेन तृणस्याग्रं न चलेदिति कीर्त्यते ॥

तथा कारयिता चानुमन्ता साक्षीत्यपीष्यते ।
करुणावसरस्तत्र श्रीभाष्योक्तोऽवधार्यताम् ॥
स्वशासनोल्लङ्घनाभिसन्धिविच्छेदमात्रतः ।
अनादिकालोपचितानन्तदुर्विषहागसाम् ॥
अनभ्युपगमद्वारा सुखसंवृद्धये स्वयम् ।
यतते च तथाचोक्तं वसुदेवतनूभुवा ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
5 अथपुण्यापुण्यरूपकर्मशक्तिनिबन्धनाः ।
सर्वा व्यवस्थाः सिध्यन्ति कृतमीशेन तादृशा ॥
पुरुषार्थानुरूपा सा प्रकृतिः परिणंस्यते ।
तथा व्यवस्थया कर्मसंस्कारैरभिसंस्कृता ॥
परिणामविशेषोऽस्ति देशकालव्यवस्थया ।
विषादिदूषितस्यान्नपानादेर्दुःखकारणम् ॥
दृश्यते परिणामश्च सुखहेतुस्तथा भुवि ।
महौषधाप्यायितस्याप्यन्नादेः देशकालयोः ॥
अत्रोच्यतेऽनभिज्ञस्त्वं पुण्यापुण्यस्वरूपयोः ।
पुण्यापुण्यस्वरूपे हि शास्त्रैकाधिगते स्थिते ॥

शास्त्रं चानादिनिधनाच्छिन्नपाठसमागतम् ।
अनाघ्रातप्रमादादिदोषं वेदाभिधं मतम् ॥
तच्चाह कर्मणी पुण्यापुण्ये तस्याखिलेशितुः ।
आराधनं तदन्यच्च कोऽत्र पर्यनुयुज्यताम् ॥
अनुग्रहान्निग्रहाच्च सुखदुःखे हि तत्फले ।
इत्यौपनिषदैकान्तः बादरायणसम्मतः ॥
नच प्रीतेरपूर्णत्वं नच कोपात्सदुःखता ।
फलप्रदित्सारूपत्वादुभयोरपि कर्मणोः ॥
6 ईश्वरेच्छाऽधिकारो वा वासना पुद्गलोऽपि वा ।
अदृष्टं वाऽपि दृष्टं वा न्यायस्त्वेकोऽवधार्यताम् ॥
दृष्टार्थस्यापि सेवादेरायातमपि सत्फलम् ।
उत्पद्यते चिरेणैव प्रतिबन्धेन केनचित् ॥
स्वाभाविकयेव सर्वेषामुत्पत्तिरिति केचन ।
किमदृष्टेन दृष्टेन हेतुना वेति तन्मतम् ॥
निर्निमित्ता नचोत्पत्तिः नच सर्वाप्रमाणता ।
बोधयन्ति प्रमाणानि सर्वाणि सनिमित्तताम् ॥
ईश्वरेच्छाधिकारादौ शब्दलिङ्गादिवर्जनात् ।
व्यभिचाराच्च सेवादेः पश्चादेस्साधनान्तरम् ॥
तच्च चित्रादिकमिति शब्देन त्ववगम्यते ।
तदपि स्यादनियतमिति कौमारिला विदुः ॥

एतद्देहानुभाव्यं यत्तदैहिकफलं मतम् ।
देहान्तरानुभाव्यं तु विदुरामुष्मिकं बुधाः ॥
7 भर्तृमित्रादयस्त्वाहुश्चित्राद्यैहिकसाधनम् ।
क्वचित्फलादर्शनं तु प्रबलप्रतिरोधतः ॥
प्रतिबन्धककर्मापि मतमैहिकसाधनम् ।
निर्निमित्तं फलं तेषां स्यादिहाकृतकर्मणाम् ॥
चित्रादीनां फलं तावत् क्षीणं प्राक्तनजन्मनि ।
नच स्वर्गफलस्येह कश्चिदंशोऽनुवर्तते ॥
नैव ह्यन्यफलं कर्म साधयेन्नः फलान्तरम् ।
गौतमीयेऽपि तच्छेषः चित्रादेश्शेष इष्यते ॥
स्वाभाविकत्वे सिद्धे च कर्मानन्तरभाव्यपि ।
फलं क्रियानिमित्तत्वं न कथंचित्प्रपद्यते ॥
तत्र म्लेच्छादिवत्सर्वे कर्माकृत्वाऽपि वैदिकम् ।
फलं लभन्त इत्येवं नष्टा वेदप्रमाणता ॥
8 अक्षपादीयसिद्धान्ते चित्राद्यमपि चैहिकम् ।
तत्कारिणां फलाभावः वैगुण्यादिति ते विदुः ॥
तेषामपि मते प्राग्वत् वेदानामप्रमाणता ।
फलं स्वाभाविकं यस्मात्स्यादिहाकृतकर्मणाम् ॥
आमुष्मिकं तत्स्वर्गादि वृष्ट्याद्यैहिकमिष्यते ।
पश्चाद्यनियतं ग्राह्यमसति प्रतिबन्धके ॥

अभुक्तेन विरोधे तु प्रबलेन च कर्मणा ।
सर्वं चानियतं ग्राह्यं देशकालाद्यपेक्षया ॥
यच्चान्नादिफलं कर्म पूर्वजन्मन्यनुष्ठितम् ।
तत्तु स्वफलदानाय वृष्ट्याद्यपिच यच्छति ॥
ततश्चाकृतकारीरीकर्मणाममपि सिद्ध्यति ।
वृष्ट्याद्यन्नादिनिष्पत्तिरिति शास्त्रीयपद्धतिः ॥
तस्माददृष्टाधीनत्वं सर्वेषां सुखदुःखयोः ।
नतु स्वाभाविकत्वं स्यादिति वैदिकदर्शनम् ॥
यदा सर्वमदृष्टस्य वशं विहत एव सः ।
स्वभाववादः, भूतानां परिणामोऽपि तद्वशः ॥
अग्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।
ऊर्ध्वाधस्तिर्यगित्येवंगतयोऽपिहि तद्वशाः ॥
9 प्रळयेऽपि प्रमाणं तु सर्वोच्छेदात्मके नहि ।
स च युक्तो यथेदानीं भूतानां दृश्यते क्रमात् ॥
तस्माद्यवदेवात्र सर्गप्रळयकल्पना ।
समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका ॥
कर्मान्तरनिरुद्धं हि फलं न स्यात्क्रियान्तरात् ।
सर्वेषां तु फलापेतं न स्थानमुपपद्यते ॥
ईश्वरेच्छा यदीष्येत सैव स्याल्लोककारणम् ।
ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना ॥

न चानिमित्तया युक्तमुत्पत्तुं हीश्वरेच्छया ।
यत्तु तस्या निमित्तं स्यात्तद्भूतानां भविष्यति ॥
सन्निवेशादिमत्सर्वं बुद्धिमद्धेतु यद्यपि ।
प्रसिद्धेः, सन्निवेशादेरेककारणता कुतः ॥
सर्गप्रळयविज्ञानं समस्तजगदाश्रयम् ।
स्वशरीरविदां पुंसां नाधिक्येनोपयुज्यते ॥
देहानित्यत्वधीमात्रात् स्वर्गमोक्षार्थगोचरा ।
प्रवृत्तिस्सिद्ध्यति यतः व्यर्था सर्गादिधीस्ततः ॥
10 यस्मादवश्यंवक्तव्या प्रयोजनवदर्थता ।
स्वाध्यायविध्यधीतानां सर्वोपनिषदां ततः ॥
दैवप्रभावकथनार्थोऽयं सर्गादिरुच्यते ।
प्रधानं पौरुषं येषां तन्निरासकटाक्षतः ॥
सृष्टिकाले दैववशेनैव सर्वा प्रवर्तते ।
सृष्टिस्समस्तपुरुषकाराभावेऽपि केवलम् ॥
लयकाले तु पुरुषकारे सत्यपि सर्वशः ।
तद्दैवोपरमादेवोपरमेत्सकलं जगत् ॥
धर्मानुष्ठान एवातः यतितव्यं कृतात्मभिः ।
इत्येतत्परमेष्ठव्यं सृष्टिप्रलयकीर्तनम् ॥
भारतादीतिहासानां धर्मादौ वृत्तिरिष्यते ।
व्यवहारानादिवादिमीमांसकमतं त्विदम् ॥

निर्विशेषविदां सृष्टिकथाफलमिदं मतम् ।
सर्वस्य ब्रह्मकार्यत्वे सर्वं ब्रह्माधितिष्ठति ॥
नेतिनेतिनिषेधेन निषिद्धमखिलं भवेत् ।
सृष्ट्याद्यकथयित्वैव निषेधे केवले कृते ॥
ब्रह्मानध्यस्तवस्तूनां नित्यानां सत्त्वशङ्कया ।
सर्वं ब्रह्मातिरिक्तं न प्रतिषिद्धं भवेदिति ॥
यच्चौपनिषदानां तु सविशेषविदां मतम् ।
निरूपितं प्रागित्थं तु दैवपौरुषनिर्णयः ॥
दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
पौरुषस्य त्वभावे हि दैवं नैव प्रसिद्ध्यति ॥
प्राग्दैहिकं पौरुषं हि दैवमित्युच्यते बुधैः ।
व्यज्यते तद्बहुफलोदयादप्यल्पयत्नतः ॥
केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥

(49) शास्त्रसामर्थ्यम्.

1 यच्चात्र शास्त्रवैयर्थ्यचोद्यं किंचित्समाहितम् ।
तस्य प्रपञ्चो ज्ञातव्यः गीताशास्त्रनिरूपितः ॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥
इत्यस्यायमभिप्रायः देहोऽधिष्ठानमुच्यते ।
जीवः कर्ताऽथ करणमिन्द्रियं चक्षुरादिकम् ॥
प्राणश्चेष्टा हि विविधा या क्रियाशक्तिरुच्यते ।
ईश्वरो दैवमुद्दिष्टं तत्र न्यायोऽवधार्यताम् ॥
दैवं दिष्टं भागधेयं दैवं कर्म पुराकृतम् ।
सत्येवं व्यवहारेऽपि दैवमत्रेश्वरो मतः ॥
नहि प्रागेव नष्टानां कर्मणामिह हेतुता ।
कर्मजन्यादृष्टरूपसंकल्पादप्यसौ वरम् ॥
सत्यंसत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ।
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ॥
इत्येवं भारते रामायणे चापि प्रयुज्यते ।
श्रूयतां परमं दैवं दुर्विज्ञेयं मयाऽपिच ॥
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ।
सभापर्ववचस्त्वेवं अथ योगविदां वचः ॥

आर्षं छन्दश्च दैवं च मन्त्राणां ब्राह्मणं तथा ।
आत्मानं पूजयेन्नित्यं भूषणाच्छादनादिभिः ॥
स्वदेह एव दैवं स्यात् अन्यद्दैवं न विद्यते ।
दैवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतम् ॥
तन्मन्त्रं ब्राह्मणाधीनं तस्माद्विप्रा हि दैवतम् ।
शास्त्रेऽप्यस्मिन् दैवशब्दः प्रयुक्तः पुरुषे यथा ॥
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
तस्माद्दैवमिह ब्रूमः परमात्मानमीश्वरम् ॥
2 ननु स्वतन्त्रः कर्तेति शिष्यते कर्तृलक्षणम् ।
स कारकप्रयोक्ता स्यात् न प्रयोज्यश्च कारकैः ॥
उच्यतेऽत्रोत्पन्नबुद्धिचिकीर्षाकृतिशालिनः ।
स्यात्कारकप्रयोक्तृत्वं ज्ञानाद्युत्पत्तिरेव तु ॥
श्रुता परात्मायत्तेति तदायत्तैव कर्तृता ।
सिद्धं स्वातन्त्र्यमपिच सामर्थ्ये चानिवार्यता ॥
अथेश्वरो यदि ज्योतिष्टोमादौ संप्रवर्तयेत् ।
तदा किंचिन्न जीवस्य विधेयं चोदनादिभिः ॥
बलिना ह्रियमाणेन न गन्तुमिह शक्यते ।
निरुन्धे परमात्माऽथ न विधेयं प्रसज्यते ॥
प्रबलेन निरुद्धस्य गमनं न विधीयते ।
यदि प्रवर्तयेदीशः निषेधोऽत्र हि निष्फलः ॥

नासौ प्रवर्तयेद्यत्र निषेधो न ह्यपेक्ष्यते ।
चोद्यकाष्ठेयमखिलास्तिकैकान्तावलम्बिनी ॥
निग्रहानुग्रहाख्यानपूर्वाद्दृष्टप्रचोदितः ।
निग्रहानुग्रहाद्यर्ह इतीदं घटते कथम् ॥
3 अपिचात्र पराधीनास्वपि सर्वप्रवृत्तिषु ।
कृतप्रयत्नापेक्षत्वं परस्य कथमुच्यते ॥
शास्त्रवैयर्थ्यचोद्यस्यावैयर्थ्यादिप्रसङ्गतः ।
परिहारे साध्यहेत्वोः अविशेषः प्रसज्यते ॥
अत्रेदमवधातव्यं यत्तावत्परमेशितुः ।
प्रवृत्तिशक्तकरणकळेबरसमर्पणम् ॥
यच्च सर्वाधारतयाऽवस्थानं भूतलादिवत् ।
स्वरूपाच्चापि संकल्पात् प्रवृत्त्याद्यानुगुण्यतः ॥
कळेबराद्यधिष्ठानशक्तिदानं च यत्पुनः ।
यच्चापि बाह्यविषयपुरस्करणमित्यपि ॥
तत्सर्वं जीवकर्तृत्वानुगुणं नात्र चोदना ।
प्रवृत्तौ च निवृत्तौ च साधारणमिदं यतः ॥
एतावतैव भगवानुदासीन इतीर्यते ।
प्रवृत्तिकाले भगवान् अनुमन्तेत्युपेयते ॥
सा चानुमन्तृता जीवकर्तृतां न निवारयेत् ।
किंतूत्तभ्नातीति नातः शास्त्रवैयर्थ्यचोदना ॥

नैवानियोज्यताहेतुः कर्त्रन्तरसहायता ।
संभूयकार्येऽप्येकस्य दृश्यते हि नियोज्यता ॥
एवं प्रवृत्तिशक्तस्य चेच्छायामनिवार्यता ।
स्वतन्त्रताऽस्य सिद्धेति कर्तृत्वमपि सुस्थितम् ॥
4 यत्त्वथज्ञानशक्त्यादौ करणे च कळेबरे ।
प्रदानं विषमं यच्चाकृत्यादावनिवारणम् ॥
यदप्यनुमतेर्दानं प्रत्यवायस्य सर्जनम् ।
तदप्यनादिप्राक्कर्म वैषम्याद्विषमं मतम् ॥
अकृत्यकारिणोऽपीशानुग्राह्यास्स्युर्यदीशितुः ।
शास्त्रमाज्ञात्मकं व्यर्थं सोऽपि स्यादव्यवस्थितः ॥
अपुंस्त्वमावहेच्चास्य दण्ड्यानामप्यदण्डने ।
न गुणायावकल्पेत लोके दुष्टस्य शिक्षणम् ॥
यद्यप्यदृष्टवैषम्यात्प्रवृत्तिर्विषमा मता ।
तत्त्वदृष्टं शास्त्रपुरस्काराद्दृष्टादि साधयेत् ॥
तदप्येवं तत्र विधिनिषेधावसरो यथा ।
यतः प्रवृत्तिः शास्त्रोत्थबुद्ध्यादिकमपेक्षते ॥
यज्ञादिकारणं पूर्वमनेन सुकृतं कृतम् ।
इत्येतेनैव नेदानीं यज्ञनिष्पत्तिसंभवः ॥
नापि पापं केवलं वा पापमारभतेऽपि तु ।
स्वबुद्ध्यैव निषेधातिवृत्त्या पापस्य कारणम् ॥

ननु चादृष्टमूलत्वे विध्यानर्थक्यमुच्यते ।
शास्त्रं च सार्थकं सर्वैः परैरभ्युपगम्यते ॥
तस्माददृष्टमूलत्वं त्यक्तव्यमिति चोद्यते ।
तन्नैवं लौकिकविधिनिषेधेऽपि प्रसङ्गतः ॥
लोके प्रवृत्तिवैचित्र्यं स्यात्सामग्रीविशेषतः ।
किंवा गामानयेत्यादिनियोगेनेति चिन्त्यताम् ॥
नियोगस्सोऽथ सामग्रीमध्यान्तर्भावमर्हति ।
इति चेत् वैदिकश्चापि नियोगस्तादृगिष्यताम् ॥
परित्यजाम इति चेत् नियोगमपि लौकिकम् ।
हन्त संव्यवहारस्यासिद्ध्या व्युत्पत्त्यसंभवः ॥
लौकायतेनापि लीनं जगदान्ध्यं प्रसज्यते ।
तस्माददृष्टं शास्त्रं च नान्योन्यप्रतिबन्धकम् ॥
तस्मादिष्टाऽदृष्टमूलशास्त्रवश्यदशान्वयात् ।
पुनस्तथातथा दृष्टसंपत्तिरुपपद्यते ॥
पुमर्थसाधनत्वेन प्रतीते स्वेच्छया पुमान् ।
प्रवर्ततेति तादर्थ्यात् सावकाशाऽत्र चोदना ॥
इत्येवं शास्त्रवैयर्थ्यचोदनाक्षेपदूषणम् ।
तात्पर्यचन्द्रिकाग्रन्थविस्तृतस्यात्र संग्रहः ॥
एवं शास्त्रं शास्त्रजन्यादृष्टं वा बुद्धिपूर्वकम् ।
प्रवर्तयेदतः शास्त्रवैयर्थ्यं न प्रसज्यते ॥

दैवाधीनं जगत्सर्वमिति तत्त्वविदां वचः ।
मयि सर्वाणि कर्माणीत्युक्तगीतार्थगोचरम् ॥

(50) कर्मवादः.

1 कर्मत्वजातिमत्कर्म प्रत्यक्षं चलनात्मकम् ।
अविभुद्रव्यसंस्थं तत् हेतुर्योगवियोगयोः ॥
वेगस्यापीति सिद्धान्तमाहुर्भाट्टाश्च तार्किकाः ।
न संयोगादिविषयः चलतिप्रत्ययो यतः ॥
सर्वसंयोगधाराऽपि धरा न चलतीति धीः ।
नवा तरङ्गिणीतीरपाषाणश्चलतीति धीः ॥
भूकम्पादौ महोत्पाते ह्यचला चलतीति धीः ।
संयोगो वा विभागो वा न कश्चित्तत्र दृश्यते ॥

2 प्राभाकरास्तु मन्यन्ते कर्म चैतदतीन्द्रियम् ।
सुसूक्ष्मो व्यापार एषः सर्वद्रव्यगतोऽपि च ॥
अनुमेयं हि संयोगाद्विभागाद्वाऽऽर्ककर्मवत् ।
अन्वयव्यतिरेकानुविधानं चक्षुरादिभिः ॥
लिङ्गस्य दर्शने क्षीणं, गमनं यच्च चाक्षुषम् ।
स च संयोग एव स्यात् संयोगस्सर्वसम्मतः ॥
तत्र कौमारिलास्त्वित्थमाक्षेपं संप्रचक्षते ।
गुरुर्गृहीतविषयमनुमानं प्रजल्पति ॥

अनुमानेन कर्मादिसिद्धिमप्यभिवाञ्छति ।
3 क्षणिकास्सर्वसंस्कारा अस्थिराणां कुतः क्रियाः ॥
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।
ततोऽविरलदेशादेरुत्पादः कर्मलक्षणः ॥
संयोगादिस्स एवेति क्षणभङ्गोऽनुपद्रवः ।
इति युक्त्या सौगतास्तु कर्मैवापलपन्ति हि ॥
क्षणवादस्स दूष्यो हि प्रत्यक्षेणैव कर्मणा ।
कर्म चेदनुमेयं स्यात् जिता एव हि सौगताः ॥
संयोगेनान्यथासिद्धिः वक्तुं शक्येत कर्मणः ।
नित्यत्वे सर्वदा जन्म स्यात्संयोगविभागयोः ॥
अनित्यत्वेऽस्य यो हेतुस्तेनैव स्यात्तयोर्जनिः ।
तद्धेतुरेव तद्धेतुरिति न्यायोऽहि लौकिकः ॥
4 अतएवहि काणादाः कर्मणः कर्मसाध्यताम् ।
स्वभाववादभङ्गाय धूत्वाऽऽहुर्गुणसाध्यताम् ॥
आत्मजन्या भवेदिच्छा हीच्छाजन्या भवेत्कृतिः ।
कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया ॥
अदृष्टाधीनतां चाहुः ज्वलनोर्ध्वादिकर्मणाम् ।
एतेन चेतनायत्तं सर्वं कर्मेति साधितम् ॥
कृतेराख्यातवाच्यत्वस्थापनैतन्निबन्धना ।
व्यापारमात्रवादस्तु सांख्यादिमतिमूलकः ॥

अदृष्टं दृष्टसामग्रीं पुरस्कृत्यैव कारकम् ।
इतीरयद्भिरप्यग्नेरूर्ध्वज्वलनमिष्यते ॥
कर्मणः कर्मसाध्यत्वं निषेधत्यपि जैमिनिः ।
अभिक्रामं जुहोतीति वाक्यस्यार्थनिरूपणे ॥
क्रियाकारकनिष्पाद्या कारकं मूर्तमिष्यते ।
कर्म चैतदमूर्तं स्यात् इति न्यायोऽत्र शाबरः ॥
क्रियैव कारकमिति क्षणप्रध्वंसवादिनाम् ।
सिद्धान्तोऽनेन वाक्येन संक्षेपेण कटाक्षितः ॥
कर्मणः कर्मसाध्यत्वं स्वीकृतं श्लोकवार्तिके ।
कर्मणः कर्मसाध्यत्वं नास्मत्पक्षे विरुध्यते ॥
अनात्मसमवेतस्य निमित्तं कर्म हीष्यते ।
इति वाक्याधिकरणपद्यमत्र निशम्यताम् ॥
निषिद्धं समवायित्वं स्वीकृता तु निमित्तता ।
इति रत्नाकरव्याख्या विरोधपरिहारिणी ॥
यद्यपि क्षणवादोऽयमेतेन प्रतिहन्यते ।
स्वभाववादावसरो निमित्तत्वेऽपि दुस्तरः ॥
5 अत्र वेदान्तिनः केचिन्न्यायतत्त्वानुसारिणः ।
नैयायिकाश्च कतिचिन्न्यायभूषणयायिनः ॥
द्रव्ये गुणे वा विश्रान्तिं कर्मणो ये विजानते ।
तेषामाशयसारोऽयं संक्षेपादवधार्यताम् ॥

प्रत्यक्षं कर्म येऽप्याहुः नूनं तैरपि कर्मजात् ।
संयोगाद्वा विभागाद्वा निपुणं नान्यदीक्ष्यते ॥
चलतिप्रत्ययोऽपि स्यात्तावतैव मनीषिणाम् ।
चलत्यचलदित्याद्या धियोऽवस्थानिबन्धनाः ॥
कर्मादीनां गुणैर्द्रव्यैर्वाऽन्यथासिद्धिसंभवात् ।
द्रव्यं चाद्रव्यमित्येव विभागो मेयसंग्रहः ॥
एतावताऽपि भग्नास्ते भवन्ति क्षणभङ्गिनः ।
कर्मापह्नवसिद्धान्तो दुःस्थ एवेति च स्थितम् ॥
कर्मैकं बुद्धिरप्येका जगत्येकस्सितो गुणः ।
वर्णोऽप्येको गकारादिरिति च श्लोकवार्तिके ॥
न प्रत्यक्षे इति ह्युक्तिश्शाबरी बुद्धिकर्मणी ।
प्रत्यक्षत्वे तयोस्स्याद्धि नित्यतेत्यपि तन्मतम् ॥
शब्दनित्यत्ववादे हि विस्तरेण निरूपितम् ।
उपालभन्ते चात्रेत्थमेतान् नैयायिकाः पुनः ॥
किंनाम शब्दनित्यत्वसमर्थनतृषातुरः ।
जङ्गमं स्थावरं चैव सकलं पातुमिच्छसि ॥
इत्येवं वादसंरम्भे विचित्रा धीमदुक्तयः ।
6 अथ चात्रात्मसंबन्धिक्रियाचिन्ता निशम्यताम् ॥
साक्षाद्यद्यपि संबन्धो नात्मनो यज्ञसाधनैः ।
तथाऽपि लक्षणावृत्त्या शरीरद्वारको भवेत् ॥

प्रत्यक्षत्वं च देहस्थं भाक्तमात्मनि कल्पितम् ।
आत्मनः स्वर्गयानं वा शरीरस्योपचर्यते ॥
जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम् ।
ज्ञानानां क्षणिकत्वाद्धि कर्तृभोक्त्रन्यता भवेत् ॥
निष्क्रियत्वाविभुत्वाभ्यां नच देहान्तराश्रितिः ।
ज्ञानशक्तिस्वभावोऽतो नित्यस्सर्वगतः पुमान् ॥
यजमानत्वमप्यात्मा सक्रियत्वात्प्रपद्यते ।
न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥
नच स्वसमवेतैव कर्तृभिः क्रियते क्रिया ।
क्रिया धात्वर्थमात्रं स्यात् अन्याधारेऽपि कर्तृता ॥
सत्ताज्ञानादिरूपाणां कर्ता तावत्स्वयं पुमान् ।
योऽपि भूतपरिस्पन्दः तत्राधिष्ठानतो भवेत् ॥
तदुद्देशप्रवृत्तेश्च याया देहेन्द्रियैः क्रिया ।
क्रियते पुरुषेणैव सासा सर्वा कृतोच्यते ॥
नैव ह्येषां प्रवृत्तिस्स्यात्पुरुषेणापरिग्रहे ।
अस्वातन्त्र्यादतो नैषां परिस्पन्देऽपि कर्तृता ॥
तत्कर्मोपार्जितैश्चैतैः क्रियमाणेषु कर्मसु ।
कर्तृता यजमानानामृत्विक्परशुकर्मवत् ॥
यथा परिक्रयाम्नानादृत्विग्द्वारा क्रियोच्यते ।
गमनादिविधेस्तद्वत् भूतद्वारत्वमाश्रितम् ॥

नच सर्वत्र तुल्यत्वं स्यात्प्रयोजककर्मणाम् ।
चलनेन ह्यसिं योद्धा प्रयुङ्क्ते छेदनं प्रति ॥
सेनापतिस्तु वाचैव भृत्यानां विनियोजकः ।
राजा सन्निधिमात्रेण विनियुङ्क्ते कदाचन ॥
तस्मादचलतोऽपि स्यात् चलने कर्तृताऽऽत्मनः ।
यथैवाभिद्यमानस्य देवदत्तस्य भेत्तृता ॥
तस्माद्यथाऽऽकृतौ शास्त्रं प्रवृत्तं व्यक्तिमाश्रयेत् ।
तथा पुंसि प्रवृत्तस्य भूतेन्द्रियसमाश्रयः ॥
शक्तिः कार्यानुमेयत्वात् यद्गतैवोपयुज्यते ।
तत्रैव साऽभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपिवा ॥
आत्मैव चाश्रयस्तस्य क्रियाऽप्यत्रैव च स्थिता ।
आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥
यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् ।
तद्विनाशे ततो न स्यात्कर्तृस्था तु न नश्यति ॥
प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि ।
अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणकः ॥
कर्मजन्यो हि संस्कारः पुंसो बुद्ध्यादिवद्गुणः ।
तस्य चाफलसंयोगादवस्थितिरुपेयते ॥
स यागदानहोमादिजन्यो धर्मगिरोच्यते ।
ब्रह्महत्यादिजन्यस्तु सोऽधर्म इति कथ्यते ॥

एवं कर्मविचारेण नास्तिक्यं परिहीयते ।
तस्मान्निश्श्रेयसावाप्तिः तत्त्वज्ञानाद्धि सूत्र्यते ॥

(51) जातिवादः.

1 विकल्पविभ्रमो जातिरिति केचित्प्रचक्षते ।
उपाधिभेदाभिन्ना सा महासत्तेति केचन ॥
एके सतीमभिन्नां तामाश्रयेभ्यो विजानते ।
अभिन्नामपि तामेतामनुमेयां विदुः परे ॥
अपोहलक्षणां केचित्केचित्सारूप्यलक्षणाम् ।
स्वासाधारणरूपां तामन्ये संस्थानलक्षणाम् ॥
एकार्थकारितामेके विवादा बहवोऽत्र हि ।
संग्रहो वचसां तेषां पूर्वेषामवगम्यताम् ॥
अर्थक्रियासु नित्यस्य ह्यसामर्थ्यं स्फुटं ततः ।
जनकत्वस्य चाभावाद्विषयत्वाद्यसंभवः ॥
इति बुद्धिविरोधेन विकल्पो जातिरुच्यते ।
तथाऽवयविनोऽभावे निराधारा कथं नु सा ।
अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि ।
तस्मादचलतः स्थानात् वृत्तिरित्यतियुक्तिता ॥
यत्रासौ वर्तते भावः तेन सम्बध्यते न तु ।
तद्देशिनं च व्याप्नोति किमप्येतन्महाद्भुतम् ॥

नायाति नच तत्रासीदस्ति पश्चान्न चांशवत् ।
जहाति पुनराधारमहो व्यसनसंततिः ॥
परतन्त्रैव सर्वत्र स्वात्मानं लब्धुमर्हति ।
अतो वृत्तिविरोधेन विकल्पो नैव संशयः ॥
पिण्डे सामान्यमेकत्र यदि कात्स्न्येंन वर्तते ।
तत्रैवास्य समाप्तत्वान्न स्यात्पिण्डान्तरे ग्रहः ॥
एकदेशेन वृत्तौ तु गोत्वजातिर्न कुत्रचित् ।
समग्राऽस्तीति, गोबुद्धिः प्रतिपिण्डं कथं भवेत् ॥
पृथक्त्वे व्यक्तितो जातेः दृश्येत पृथगेव सा ।
अभेदे व्यक्तिमात्रं स्यात् द्वेधा चेन्न विरोधतः ॥
जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि ।
भवत्यध्यस्य धीः तस्मान्मृगतृष्णादिभिस्समा ॥
तस्माद्यतोयतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥
2 अत्र वैशेषिकादीनामभिप्रायोऽवगम्यताम् ।
प्रत्यक्षबलसिद्धस्य सामान्यस्य कुतर्कतः ॥
न शक्यो निह्नवः कर्तुं प्रत्यक्षं जयि सर्वतः ।
नहि दृष्टेऽनुपपन्नं नामेत्यपिच लोकवाक् ॥
सर्वा सर्वगता जातिरिति तावदुपेयते ।
सर्वत्राग्रहणं तस्याः व्यञ्जकव्यक्त्यसन्निधेः ॥

अभिव्यक्तिस्तु तत्काला यत्कालं व्यक्तिदर्शनम् ।
तस्मात्सकृदभिव्यक्ता नान्यदाऽपि प्रतीयते ॥
व्यक्तिसर्वगतत्वेऽपि सयूथ्यैः कैश्चिदाश्रिते ।
भविष्यत्यद्यजातायां गवि गोधीस्तथा ग्रहात् ॥
जायमानैव हि व्यक्तिः जायते प्रतियोगिनी ।
एक एव हि कालोऽस्याः जातेस्संबन्धजन्मनोः ॥
नच जातेः पुराऽस्तित्वं नच संक्रान्तिरन्यतः ।
किंतु स्वहेतोस्सा व्यक्तिः तादृश्येवोपजायते ॥
वृषः पिशङ्गो गौः कृष्णा सा च नीलतृणादिनी ।
ताभ्यामुत्पादितो वत्सः कथं भवति पाण्डरः ॥
तस्माद्वस्तुस्वभावेऽस्य विदित्वाऽननुयोज्यताम् ।
चोद्यचुञ्चुत्वमुत्सृज्य प्रतिपत्तिर्निरूप्यताम् ॥
केचिन्नैयायिकाः जातिं नेच्छन्ति गुणकर्मणोः ।
द्रव्यजात्यैव हि तयोः जातिव्यवहृतिं विदुः ॥
त्रिषु सत्तां केचिदाहुः सैव नास्तीति केचन ।
मानयोगार्हता सा स्यात् भावत्वं वेति ते विदुः ॥
अनुमानं तु सामान्यापेक्षं सामान्यनिह्नवे ।
नालमित्यसमीक्ष्यैव वृथा कण्ठो विशोष्यते ॥
3 अथ प्रभाकरगुरोस्सिद्धान्तोऽत्र प्रकाश्यते ।
जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा ॥

पूर्वाकारावमर्शेन ह्यनुवृत्तिमती तु सा ।
यो नानाव्यक्तिसंबन्धः साऽनुवृत्तिरितीर्यते ॥
तत्सामान्यं विशेषश्च बुद्ध्यपेक्षमिति स्मृतिः ।
इयान्विशेषाङ्शिष्टांशः वैशेषिकनये स्थितः ॥
4 जातिं व्यक्तिगतां नित्यां व्यक्तितादात्म्यशालिनीम् ।
प्रत्यक्षगम्यां सर्वां तामाहुः कौमारिलाः पुनः ॥
सत्ता पदार्थमात्रे स्यान्महासामान्यमुच्यते ।
द्रव्यत्वब्राह्मणत्वादि सामान्यं स्यादवान्तरम् ॥
महासामान्यमपरे नैवेच्छन्त्यनवस्थितेः ।
पुनस्तेन सहान्येषु सामान्यमतिरस्ति हि ॥
जातिमेवाकृतिं प्राहुः व्यक्तिराक्रियते यया ।
सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥
सर्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका ।
जायते द्व्यात्मकत्वेन विना सा च न सिद्ध्यति ॥
नचाप्यन्यतरा भ्रान्तिरुपचारेण गम्यते ।
दृढत्वात्सर्वथा बुद्धेः भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥
निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।
सामान्यरहितत्वाच्च विशेषास्तद्वदेवहि ॥
विषेषतो हि जिज्ञासा ज्ञाते सामान्यतो मता ।
सामान्यस्यानुपगमे प्रश्नोत्तरपराहतिः ॥

स्वाभाविकश्च संबन्धो जातिव्यक्तयोर्न हेतुमान् ।
तेनैतस्य प्रसिद्ध्यर्थं नान्यसामान्यमिष्यते ॥
विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते ।
विशेषादन्यदिच्छन्ति सामान्यं तेन तद्ध्रुवम् ॥
तस्मात्सास्नादिमत्स्वेव गोत्वं यस्मात्तदात्मकम् ।
तादात्म्यमस्य कस्माच्चेत्स्वभावादिति गम्यताम् ॥
एकानेकत्वमेकस्य तथाऽन्यानन्यता कथम् ।
तत्सामान्यं विशेषश्चेत्येवमादि च दुष्करम् ॥
विरोधस्तावदेकान्ताद्वक्तुमत्र न युज्यते ।
सामान्यानन्यविज्ञाते विशेषे नैकवृत्तिता ॥
सामान्यानन्यवृत्तित्वं विशेषात्मैकभावतः ।
तेन नात्यन्ततो भेदस्स्यात्सामान्यविशेषयोः ॥
या चावयवशो वृत्तिः स्रक्सूत्रादिषु दृश्यते ।
भूतकण्ठगुणादेश्च प्रतिपिण्डं समाप्तितः ॥
तत्रावयवयोगित्वमविभुत्वं च कारणम् ।
आकृतेस्तदभावेन न प्रसक्तमदोद्वयम् ॥
नच द्वैविध्यमेवेति वृत्तेरास्ति नियामकम् ।
त्रैविध्यमपि दृष्टत्वात्संभवेत् द्वे विधे यथा ॥
दीर्घह्रस्वत्ववच्चात्र व्यपेक्षाभेदतो भवेत् ।
अविरोध इति ज्ञात्वा प्रतिपत्तिर्निरूप्यताम् ॥

5 शाब्दिकास्तां विदुस्सत्तां तदुक्तिरवधार्यताम् ।
संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ॥
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ।
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ॥
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।
अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता॥
कैश्चिद्व्यक्तय एवास्याः ध्वनित्वेन प्रकल्पिताः ।
सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ ॥
सत्यं यत्तत्र सा जातिः असत्या व्यक्तयो मताः ।
तद्ब्रह्म स च शब्दः स्यात् सकलं तदधिष्ठितम् ॥
आकृतिग्रहणा जातिः लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैस्सह ॥
प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

6 अभाषत च संस्थानजातिपक्षं पतञ्जलिः ।
जातिनित्यत्वपक्षोक्तिरन्वारुह्येति नीयताम् ॥
संस्थानजातिसिद्धान्तसारांशोऽत्रावगम्यताम् ।
संस्थानं चाप्यवयवव्यूहस्सास्नादिलक्षणः ॥
जातेस्तुव्यञ्जकं यत्स्यात् जातितस्तस्य संग्रहे ।
जातिमालाऽनवस्थाऽतः संस्थानं जातिरिष्यते ॥

यद्यप्येकैकसंस्थं तत्संस्थानं गळकम्बळम् ।
स्वभावतः तथाऽप्येतत्सप्रतिद्वन्द्विकं मिथः ॥
प्रामाणिकं स्वरूपं यत् स स्वभाव इतीर्यते ।
तत्तथैव स्वीक्रियते यद्यथैव प्रतीयते ॥
सन्निवेशाः स्वभावेन नियतप्रतियोगिकाः ।
अन्योन्यसादृश्यरूपाः मिथः स्मारकतावशात् ॥
एकस्मृतिसमारूढाः एकबुद्धिनियामकाः ।
सादृश्यसामान्यशब्दावेकार्थाविति निर्णयः ॥
उपाधिसंकरन्यायादवस्थासंकरो मतः ।
भ्रमणस्यन्दनत्वाद्यमेकस्मिन् गमने मतम् ॥
अन्योन्यसप्रतिद्वन्द्वि रूपं सादृश्यमुच्यते ।
तदेवानुगतज्ञप्तिहेतुः जातिर्न चाधिका ॥
कथ्यते यैस्तु सादृश्यं संस्थानादिविलक्षणम् ।
गुरुत्वं जातिगुप्तौ च धृतं तैर्जातिगुप्तिवत् ॥
जातिखण्डनयुक्तीनां नावकाशोऽत्र लभ्यते ।
प्रायः परीक्षकाणामप्येतदेव मनोरमम् ॥
7 तिर्यगूर्ध्वत्वभेदेन द्विविधं त्वार्हता विदुः ।
तुल्या परिणतिर्यत्र प्रतिव्यक्ति प्रदृश्यते ॥
तत्तिर्यग्यद्धि शबलाशाबलेयादिवस्तुषु ।
गोत्वादिकं तथाऽश्वत्वनरत्वामरतादिकम् ॥

पूर्वापरपरीणामसाधारणमवस्थितम् ।
द्रव्यं तदूर्ध्वताख्यं स्यात् कटकादिषु काञ्चनम् ॥
तथौपनिषदाः प्रायः तार्किकं वाऽथ वैदिकम् ।
पन्थानमाश्रिताः किंचित्किंचिद्भेदं समाश्रिताः ॥
8 अथच ब्राह्मणत्वादिजातिव्यवहृतौ मताः ।
प्राचां ग्रन्थकृतां मार्गाः निशम्यन्तां समाहृताः ॥
अनादाविह संसारे दुर्वारे मकरध्वजे ।
कुले च कामिनीमूले का जातिपरिकल्पना ॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।
तन्मे रेतः पिता वृङ्क्तामित्यप्यस्य निदर्शनम् ॥
अब्राह्मणो ब्राह्मणस्स्यात्प्रवरस्यानुमन्त्रणात् ।
इतिश्रुत्यर्थजिज्ञासा शाबरादिषु विस्तृता ॥
न संस्थानं नापि धातुः न भयाद्यं न चौषधम् ।
न वृत्तिः नापि चाचारः किंतु संकेत एव सः ॥
इत्यादीनि च वाक्यानि जातिविप्लववादिनाम् ।
विश्रुतान्येव सर्वत्र विज्ञेयोऽन्यत्र विस्तरः ॥
9 श्रुतिस्मृतिनिबन्धेषु तद्व्याख्यानेषु यच्छ्रुतम् ।
भाष्यादिषु च यच्चोक्तं तत्सारांशोऽयमुच्यते ॥
जातिनाम्नोऽतिरिक्तस्य स्वीकर्तारस्तु वस्तुनः ।
ब्राह्मणत्वादिकां जातिं नरत्वावान्तरं विदुः ॥

तत्र क्वचिद्ब्राह्मणादिशब्दानां गुणवाचिताम् ।
वृत्तादिवाचितां चापि मन्वते तत्त्वदर्शिनः ॥
नञ्सूत्रेऽतो महाभाष्ये गुणसंदोहवर्तिनः ।
ब्राह्मणाद्या अमी शब्दाः क्वचिदंशेष्वितीरितम् ॥
जात्यनभ्युपगन्तारः व्यवहारस्य गोचरम् ।
विदुश्शुद्धकुलोत्पत्तिं जातिजन्मादिशब्दिताम् ॥
सैव संततिसंतानकुलशब्दादिशब्दिता ।
सर्ववर्णेषु तुल्यास्वित्यादिस्मृतिवचोबलात् ॥
तमश्शूद्रे रजः क्षत्रे ब्राह्मणे सत्त्वमुत्कटम् ।
इत्याश्वमेधिकस्मृत्या सत्त्वाद्यं केचिदभ्यधुः ॥
सन्निवेशसमानत्वेऽप्यारणेयादिवह्निषु ।
क्षीरभेदादिकेऽप्यस्ति शक्तिभेदास्तथाऽत्र हि ॥
परेऽदृष्टविशेषं तमात्मस्थमनुजानते ।
तदभिव्यञ्जिकां शुद्धकुलोत्पत्तिं प्रचक्षते ॥
ब्राह्मणो जायते ह्येष यो यज्ञाज्जायते त्विति ।
ब्राह्मणत्वं कर्मरूपमिति शातपथी श्रुतिः ॥
यथैव दीक्षणीयेष्ट्या जायन्ते ब्राह्मणादयः ।
इति पाद्मे पाञ्चरात्रे तन्निमित्तमनूदितम् ॥
मुखबाहूरुपज्जत्वं पुंसूक्तोक्तं विदुः परे ।
तत्र प्रश्नानुरोधेन तद्रूपणमितीतरे ॥

मनूनां सर्गमकरोन्मुखबाहूरुपादतः ।
एते सावर्ण्यनामानः विष्वक्सेनागमोदिताः ॥
महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा ।
इत्यत्र मनवस्ताद्दक्सावर्ण्या इति भाषितम् ॥
10 प्रत्यक्षं ब्राह्मणत्वादि सहकार्यपेक्षया ।
घृतत्वादिवदित्युक्तं मीमांसातन्त्रवार्तिके ॥
सहकार्यत्रोपदेशः स पारम्परिको मतः ।
समूहलेख्यानि परंपराऽविस्मृतिकारणम् ॥
नहि तत्करणं लोके वेदे वा किंचिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥
तथाच संततिस्मृत्याऽनुगृहीतेन चक्षुषा ।
विज्ञायमानं ब्राह्मण्यं प्रत्यक्षत्वं न मुञ्चति ॥
तथाच दृश्यते नानासहकार्यपेक्षया ।
चक्षुषो जातिविज्ञानजनकत्वं यथोदितम् ॥
सुवर्णं व्यज्यते रूपात् ताम्रत्वादेरसंशयम् ।
तैलाद्धृतं विलीनं च गन्धेन तु रसेन वा ॥
भस्मप्रच्छादितो वह्निः स्पर्शनेनोपलभ्यते ।
अश्वत्वादौ च दूरस्थे निश्चयो जायते ध्वनेः ॥
संस्थानेन घटत्वादि ब्राह्मणत्वादि योनितः ।
क्वचिदाचारतश्चापि सम्यग्राज्ञाऽनुपालितात् ॥

यत्समानवयोवेषपिण्डद्वयविलोकने ।
तत्क्षणादक्षतो भेदो नावभातीति भाषितम् ॥
नैतावता विभागस्य प्रत्यक्षत्वं निवर्तते ।
सादृश्यदोषात्तत्र स्याद्विभागस्यानवग्रहः ॥
समानरूपसंस्थानशुक्तिकाकलधौतयोः ।
विवेकस्सहसा नाभादिति कालान्तरेऽपि किम् ॥
विश्वामित्रे च कर्माधिकारमात्रस्य संभवः ।
न विप्रतादेः सांकर्यादिति कौस्तुभकृन्मतम् ॥
यामुनाचार्यहेमाद्रिमाधवप्रमुखा बुधाः ।
पन्थानमनुरुन्धाना अमुमेवेति निर्णयः ॥
11 नाध्यक्षगम्या जातिस्सा किंतु स्मरणलक्षणा ।
इति मेधातिथेः विज्ञानेश्वरस्य च निर्णयः ॥
तथा सेश्वरमीमांसातत्त्वटीकादिकारिणः ।
औपदेशिकसिद्धान्तं स्थापयामासुरूर्जितम् ॥
तदन्वयविशेषेषु संभवो विप्रतादिकम् ।
अन्वयव्यतिरेकाभ्यां यथालोकं प्रतीयते ॥
संभवोऽपिच साध्याः स्यान्मातुरेवानुभाविकः ।
द्रव्यादीनां धर्मतावदन्येषां त्वौपदेशिकम् ॥
ते सन्ततिविशेषास्स्युः वृद्धा येषु प्रयुञ्जते ।
विप्रादिशब्दं येषां तु गोत्रार्षेयाद्यविस्मृतिः ॥

पक्षे त्वस्मिन् विप्रताद्यं व्यवहारनिबन्धनम् ।
अनादिर्व्यवहारोऽयं वारादिव्यवहारवत् ॥
या चोत्कर्षापकर्षाभ्यां सप्तमे पञ्चमेऽपिवा ।
वर्णान्तरापत्तिरुक्ता पर्यायाच्छुद्धिरेव सा ॥
संभवः तदभिव्यङ्ग्या जातिर्वा विप्रता यदि ।
मुखबाहूरुजातानां मानसानां कथंनु सा ॥
द्रौपद्यगस्त्यवाल्मीकिदृष्टद्युम्नादिधीमताम् ।
पौराणिकानामन्येषां कथं सा व्यवतिष्ठते ॥
तद्योनिजायोनिजादिक्रोडीकरणनिर्मलम् ।
ब्राह्मण्यमभिनिर्वाच्यं तद्धि सत्त्वादिलक्षणम् ॥
सत्त्वादयो गुणा एव स्वभावप्रभवा गुणाः ।
तद्धेतुभूतं प्राचीनं कर्म स्वो भाव उच्यते ॥
प्रजापतेः ऋषीणां च प्रत्यक्षं तत्तु मादृशाम् ।
गोत्रप्रवरसंबन्धपारंपर्यौपदेशिकम् ॥
सवर्णान्येन संयोगे सांकर्यं नैव संभवि ।
महर्षिषु प्रमादोऽपि तपोभिरनुपप्लुतः ॥
12 तद्ब्राह्मण्यं द्विधा प्रोक्तं शारीरं मानसं त्विति ।
सत्त्वादिरूपं शारीरं मानसं तु शमादिकम् ॥
शरीरसत्तापर्यन्तं शारीरनियमः स्थितः ।
मानसं सर्वपूज्यं स्यात् मनोवृत्तिनिबन्धनम् ॥

ब्राह्मण्यमासीत्प्रथमं ततः क्षत्रादि वैभवम् ।
इतिच ब्रह्म वेत्यादि बृहदारण्यके श्रुतम् ॥
आदौ कृतयुगे शूद्राद्यभावो भारतादिषु ।
प्रपश्चितस्सच्चरित्ररक्षायामप्यनूदितः ॥
बीजप्राधान्यतो जातिव्यवस्थाऽऽदावभूत्ततः ।
क्षेत्रप्राधान्यत इति चाधुना ज्ञायते गतिः ॥
ब्राह्मणानां पुनः बीजं क्षत्राणां क्षेत्रमित्यपि ।
मेधातिथेरभिप्रायः ज्ञायते दशमे मनोः ॥
पुराणादिषु चान्येषु विविधा ज्ञायते गतिः ।
सर्वे सर्वानुग्रहाय मुखभेदा इति स्थितिः ॥

(52) असंबद्धवादः.

1 संबन्धस्य च संबन्धे तस्यापीत्यनवस्थितिः ।
ततस्तस्य परित्यागे स्वरूपे पर्यवस्यति ॥
एवं विशेषे सामान्ये कारणे धर्मधर्मिणोः ।
आधारेऽवयवे शक्तौ शेषिण्यङ्गे च संविदि ॥
अनवस्थाप्रसङ्गेन व्यवहारः स्वरूपतः ।
वरमित्याहुरपरे संबन्धोऽत्र कुतः कयोः ॥
2 अथ संबन्धतत्त्वापलापिनामिह कारिका ।
प्रमेयाम्बुजमार्ताण्डोदाहृतैषाऽवधार्यताम् ॥

पारतन्त्र्यं हि संबन्धः सिद्धे का परतन्त्रता ।
तस्मात्सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः ॥
रूपश्लेषो हि संबन्धः द्वित्वे स च कथं भवेत् ।
तस्मात्प्रकृतिभिन्नानां संबन्धो नास्ति तत्त्वतः ॥
द्वयोरेकाभिसंबन्धात्संबन्धो यदि तद्द्वयोः ।
कस्संबन्धोऽनवस्था च, न संबन्धमतिस्ततः ॥
तौ च भावौ तदन्यश्च सर्वे ते स्वात्मनि स्थिताः ।
इत्यमिश्राः स्वयं भावाः तान्मिश्रयति कल्पना ॥
तामेवचानुरुन्धानैः क्रियाकारकवाचिनः ।
भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ॥
3 कार्यकारणभावाख्यः संबन्धो न भविष्यति ।
तयोरसहभावेन द्विष्ठस्यास्याप्यसंभवात् ॥
क्रमेण भाव एकत्र वर्तमानोऽन्यनिस्स्पृहः ।
तदभावेऽपि तद्भावात् संबन्धो नैकवृत्तिमान् ॥
यद्यपेक्ष्य तयोरेकमन्यत्रासौ प्रवर्तते ।
उपकारी ह्यपेक्ष्यः स्यात् कथं चोपकरोत्यसन् ॥
यद्येकार्थाभिसंबन्धात्कार्यकारणता तयोः ।
प्राप्ता द्वित्वाभिसंबन्धात्सव्येतरविषाणयोः ॥
द्विष्ठो हि कश्चित्संबन्धो नातोऽन्यत्तस्य लक्षणम् ।
येन चैतस्य संख्यादेः व्यवस्थाप्येत भिन्नता ॥

भावाभावोपधिर्योगः कार्यकारणता यदि ।
योगोपाधी न तावेव कार्यकारणताऽत्र किम् ॥
पश्यन्नेकमदृष्टस्य दर्शने तददर्शने ।
अपश्यन् कार्यमन्वेति विनाऽप्याख्यातृभिर्जनैः ॥
दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसंभवात् ।
कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥
तद्भावाभावतः कार्यगतिर्याऽप्यनुवर्ण्यते ।
संकेतविषयाख्या सा सास्नादेर्गोगतिर्यथा ॥
भावे भाविनि तद्भावः भाव एवच भाविता ।
प्रसिद्धे हेतुफलते प्रत्यक्षानुपलम्भतः ॥
एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः ।
विकल्पा दर्शयन्त्यर्थान्मिथ्यार्थाः घटितानिव ॥
भिन्ने का घटनाऽभिन्ने कार्यकारणताऽपि का ।
भावे ह्यन्यस्य विश्लिष्टौ श्लिष्टौ स्यातां कथं च तौ ॥
4 संयोगिसमवाय्यादि सर्वमेतेन चिन्तितम् ।
अन्योन्यानुपकाराच्च न संबन्धी च तादृशः ॥
जनने चापि कार्यस्य केनचित्समवायिना ।
समवायि तदा नासौ न ततोऽतिप्रसङ्गतः ॥
तयोरनुपकारेऽपि समवाये परत्र वा ।
संबन्धो यदि विश्वं स्यात्समवायि परस्परम् ॥

संयोगजननेऽप्येतौ नहि संयोगिनौ मतौ ।
कर्मादेर्योगितापत्तौ स्थितिश्च प्रतिवर्णिता ॥
इत्यादिको विस्तरोऽसौ सर्वशून्यत्ववादिनाम् ।
ग्रन्थेषु तूपलभ्येत प्रायस्ते शिथिला इह ॥
5 एवमादीन् विवादांश्च समादधति केचन ।
तान् शून्याद्वैतसिद्धान्तशुद्धान्तस्तम्भलक्षणान् ॥
अनवस्था द्विधा त्वाद्या सिद्धा स्यात्कारणाश्रया ।
प्रमाणासिद्धा धारेयं न प्रसङ्गमिहार्हति ॥
कल्प्या द्वितीया सैवात्र संसर्गादौ प्रसञ्जिता ।
तत्र स्वपरानिर्वाहः नैरपेक्ष्यमिति द्वयी ॥
गतिरस्ति प्राथमिकया निर्वाहः प्रकृते भवेत् ।
ज्ञातेन ज्ञानजनने नैरपेक्ष्यात्मिका गतिः ॥
इन्द्रियाण्यथ संस्कारः कारणं हि स्वरूपसत् ।
क्वचित्स्वपरनिर्वाहः स्वस्वभावनिबन्धनः ॥
परश्शतपरिक्षोदात्परस्तादपि वादिभिः ।
उपलम्भबले स्थैर्यं तदादावेव गृह्यताम् ॥
अतः कृत्स्नैकदेशादिविकल्पानुपपत्तितः ।
संबन्धतत्त्वापलापः शून्यवादस्य चाङ्कुरः ॥
निरंशत्वादथैकत्वात् न विकल्पोऽत्र तादृशः ।
स च सावयवानेकपदार्थविषयो मतः ॥

समाप्यवृत्तिः व्यासज्यवृत्तिश्चेति द्विधा स्थितिः ।
केवलैकत्रवृत्तिर्या सा समाप्येति कीर्त्यते ॥
सापेक्षेषु त्वनेकेषु वृत्तिः व्यासज्यपूर्विका ।
प्रथमा जातिरूपादेस्संयोगादेरनन्तरा ॥

(53) संबन्धवादः.

1 अप्राप्तिपूर्विका प्राप्तिस्संयोग इति कीर्त्यते ।
समवायस्तु निष्पत्तिप्राप्त्योः स्यादैककालिकः ॥
प्रतीतिभेदाद्भेदोऽस्ति देशभेदस्तु नेष्यते ।
तेनात्र कल्प्यते वृत्तिः समवायस्स उच्यते ॥
ये चेह वृत्ती स्रक्सूत्रभूतकण्ठगुणादिषु ।
जात्यादीनामनंशत्वात् ताभ्यां वृत्तिर्विलक्षणा ॥
नैयायिकास्तं प्रत्यक्षमाहुर्यौगास्त्वतीन्द्रियम् ।
निर्विकल्पैकविषयं तं विदुर्भूषणानुगाः ॥
स निर्विकल्पानपेक्षसविकल्पकगोचरः ।
इति सिद्धान्तयन्त्यत्र त्वाचार्या इति च श्रुतम् ॥
कारणे समवायो हि कार्याणां जन्म कथ्यते ।
सत्तायास्समवायो वाऽथवाऽऽद्यक्षणयोगिता ॥
समवायस्य जन्मत्वे विशेषणविशेष्यताम् ।
जनयन् कारकस्तोमः नित्येऽपि सफलो मतः ॥

स च व्योमवदेवैकः नित्यस्सर्वगतोऽपि च ।
तस्यानेकत्वमिच्छन्ति चापरे नव्यतार्किकाः ॥
इति तार्किकासिद्धान्तः तत्र कौमारिलाशयः ।
समवायो हि संबन्धान्तराभावेऽपि योजयेत् ॥
स्वभावादेव तावेव यथा संबन्धिनौ तथा ।
विशिष्टव्यवहारं तमातन्वाते स्वभावतः ॥
द्रव्याद्द्रव्ये च तादात्म्यात्, समवायेन किं फलम् ।
त्रैकाल्यं यदि नित्यत्वं कालायोगिनि तत्कथम् ॥
यदि कारणशून्यत्वं यद्वा प्रध्वंसशून्यता ।
नित्यत्वं तत्प्रसज्येत प्रध्वंसप्रागभावयोः ॥
उभयान्तविहीनत्वं नित्यत्वं चेन्निरुच्यते ।
नित्ययोरिव सर्वेषां नित्यताऽत्र प्रसज्यते ॥
विशेषणविशेष्यात्मस्वभावान्नियमो यदि ।
अजागलस्तनसमस्समवायः प्रकल्पितः ॥
प्राभाकराः पुनस्तत्र काश्यपं मतमास्थिताः ।
तयोरेकत्वनित्यत्वाविवादोऽस्ति विशेषतः ॥
समवायाख्यसंबन्धानेकानित्यत्वहेतुतः ।
व्यक्त्यैकयं सितनीलादेः विभुत्वं चोपपाद्यते ॥
नीलो नष्टस्सितो जातः इत्याद्या अपि बुद्धयः ।
संबन्धमूलास्सिद्ध्यन्ति लाघवं च महत्ततः ॥

इदं सर्वाद्वैतवादप्राग्रूपमिति केचन ।
समवायैक्यपक्षेऽपि तथैवेत्यपरे विदुः ॥

2 अथ संयोगसंबन्धः सौगतैर्नाभ्युपेयते ।
प्रत्यासत्तिः प्रतीघातावसानेति हि तन्मतम् ॥
अर्थान्तरस्य हेतुत्वान्नासौ निह्नवमर्हति ।
शब्दरूपस्पर्शहेतुः कश्चिदागन्तुको ह्यसौ ॥
अमृते गरळे तूले चोपले ब्राह्मणे गवि ।
चण्डाले कपिकच्छ्वादौ स्पर्शभेदोऽनुभूयते ॥
संयोगेनान्यथासिद्धिमातिष्ठन्ते विपश्चितः ।
संयोगापह्नवे सर्वो व्यवहारो विरुध्यते ॥
निरन्तरस्थितिः काचित्संयोग इति केचन ।
स्थितिः तद्देशसंयोग एवेत्यन्यैः प्रतीयते ॥
संयोगदेशकालाद्यैः प्रसिद्धैश्च ह्युपाधिभिः ।
परिषद्राशिविपिनयूथसंघातपङ्क्तयः ॥
मण्डलव्यूहसंकीर्णचतुरश्रादिमूर्तयः ।
आबाधितव्यवहृतिविषया निरुपाधिकाः ॥
महत्त्वैकत्वयुक्तत्वप्रमुखा बहवो गुणाः ।
संयुक्तद्रव्यनिष्ठास्तत्संयोगोऽशक्यनिह्नवः ॥
साहृश्यवच्च संयोगः कैश्चिन्मीमांसकैः पुनः ।
अनुयोगिप्रतीयोगिभेदाद्भिन्न इतीष्यते ॥

विभूनां चेदसंयोगः सान्तरत्वं प्रसज्यते ।
अतएवाजसंयोगः शब्दश्रवणयोर्मतः ॥
सर्वाधारत्वसिद्ध्यर्थमीश्वरेऽपीष्यते बुधैः ।
गुणवादे च संयोगविस्तरश्चावधार्यताम् ॥

3 एकार्थसमवायादिस्समवायनिबन्धनः ।
तादात्म्यनामकः भाट्टैः भिन्नाभिन्नत्वलक्षणः ॥
समवायस्य च स्थाने संबन्धः पर्यभाष्यत ।
तादात्म्यलक्षणो भेदाभेदो ज्ञातश्चतुर्विधः ॥
जातिव्यक्त्योस्तु तादात्म्यं स्यात्सामान्यविशेषयोः ।
क्रियाक्रियावतोस्तावत् अवस्थातद्वतोर्मतम् ॥
अंशांशिभावस्तार्तीयः स मतो गुणतद्वतोः ।
कार्यकारणतादात्म्यं अवयव्यादिसंश्रितम् ॥
गोत्वं समुद्रो वृक्षश्च मृच्चोदाहरणं क्रमात् ।
व्यक्तिस्तरङ्गः शाखादिः कुम्भश्च प्रतियोगिनः ॥

4 अभावस्यापि वैशिष्ट्यं संबन्धान्तरमिष्यते ।
कौमारिलैस्तार्किकैस्तु गौरवात्सोऽपलप्यते ॥

5 कार्यकारणभावाख्यस्संबन्धोऽन्यत्र विस्तृतः ।
अन्यथा स्वप्रवृत्त्यादेश्शास्त्रादेरप्यनुत्थितिः ॥

6 वाच्यवाचकसंबन्धनिषेधे लोकबाधनम् ।
विरोधश्च स्ववाक्येषु किं कथं प्रतिपाद्यते ॥

औत्पत्तिकस्सामयिक इति वादोऽत्र भिद्यते ।
प्रथमो वैदिकः पक्षः द्वितीयो यौक्तिको मतः ॥

7 विषयत्वाख्यसंबन्धे बह्वयो विप्रतिपत्तयः ।
संक्षेपतो निदर्श्यन्ते बुधास्संग्रहबुद्धयः ॥

8 स्वच्छा स्वतो धीस्समनन्तरप्रत्ययलक्षणात् ।
साकारा वासनाभेदात् नियतैवोपजायते ॥
वासना साऽनादिभूता वैचित्र्यं तन्निबन्धनम् ।
ज्ञानार्थयोस्तत्तादात्म्यं संसर्गो ग्राह्यलक्षणः ॥
न संभव्यपरः, नोचेत्सर्वसर्वज्ञता भवेत् ।
इति शून्यख्यातिवादियोगाचारव्यवस्थितिः ॥

9 अत्र सौत्रान्तिकाः प्राहुः ज्ञानाकारार्पणक्षमम् ।
हेतुत्वं, केवलं हेतुः चक्षुराद्यपि विद्यते ॥

10 केचित् ज्ञानार्थयोस्तुल्यावाकारावनुजानते ।
समानाकारता तेषां संसर्गस्स्याद्यथोच्यते ॥
अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम् ।
तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपता ॥
तत्र दोषं विदुश्चेत्थं योगाचारमतानुगाः ।
एकदेशेन सारूप्ये सर्वस्स्यात्सर्ववेदकः ॥
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ।
नान्योऽनुभाव्यो बुद्धयाऽस्ति स्वयं सैव प्रकाशते ॥

11 केचित्त्वादर्शसंकाशे ज्ञाने नीलादिवस्तुनः ।
प्रतिबिम्बं तु संबन्धं विदुस्तद्ग्राह्यलक्षणम् ॥

12 ये त्वर्थमपि विज्ञानं निराकारं विदुस्तयोः ।
योगादाकारनिष्पत्तिं चूर्णहारिद्रयोगवत् ॥
एते हि संसर्गधर्माकारवादिन ईरिताः ।
संसृष्टयोश्चोभयोरप्याकारं तं प्रचक्षते ॥

13 केचिदर्थो निराकारस्सदा तद्योगभेदतः ।
ज्ञानं साकारमिति च प्राहुस्संसर्गवादिनः ॥

14 साधारणोऽसावाकारः स्यादर्थज्ञानयोर्यथा ।
लाक्षा द्विमणिमध्यस्था तथेत्येके विदुर्बुधाः ॥

15 पृथगेवाकारवन्तौ ज्ञानार्थावपरैर्बुधैः ।
सादृश्यादविवेकेन त्वाभासेते इतीष्यते ॥

16 व्यवहारानुगुण्यं तद्विषयत्वं विदुः परे ।
कर्तृकर्मक्रियादीनां साधारणमिदं हि तत् ॥

17 ज्ञानात्मकक्रियाजन्यफलभागित्वलक्षणम् ।
कर्मत्वं विषयत्वं तत् प्राकट्यं भाट्टसम्मतम् ॥
आत्मार्थयोः कर्तृकर्मज्ञातृज्ञेयस्वभावयोः ।
मानसप्रत्यक्षवेद्यः व्याप्यव्याप्तृत्वलक्षणः ॥
संबन्धः स्वस्य करणं कल्पयेत् ज्ञानलक्षणम् ।
ज्ञाततैवाथवाऽध्यक्षा कल्पयत्येव कारणम् ॥

अनागतमतीतं च विप्रकृष्टं तथेतरम् ।
विषयीकुरुते बुद्धिः प्राकट्येऽपि समो विधिः ॥
अतीतानागतत्वाभ्यां अद्यापि स्तो हि वस्तुनी ।
अतो ज्ञानस्य संम्बन्धानुपपत्तिर्न विद्यते ॥
असतोरपि सामान्याद्यात्मना वृत्तिसंभवात् ।
प्राकट्याश्रयता भाट्टैरगत्यैवोपपादिता ॥
स्वयंप्रकाशवादेऽपि संबन्धो बोध्यबोधयोः ।
मानसाध्यक्षवेद्यस्स्यात् अन्यथा स न सिद्ध्यति ॥
तत्र त्रितयभावेन सर्वसाधारणोऽपरः ।
विषयत्वात्मकः कश्चित्पदार्थस्सेद्धुमर्हति ॥
विषयत्वं व्यवहृतिभाक्त्वं त्विति गुरोर्मतम् ।
अतीतादौ दशत्वादिसंख्यावदुपपद्यते ॥
स्वरूपलक्षणः कश्चिदन्यैः विषयतात्मकः ।
नैयायिकैरुपगतः ह्युपलम्भानुरोधतः ॥
पदार्थान्तरमित्याहुः विषयत्वं तु केचन ।
नव्यनैयायिकाः तत्तु सर्वदोषप्रशान्तये ॥
18 ज्ञानार्थयोस्तु संयोगमाहुर्धीद्रव्यवादिनः ।
पर्यायवादिनो ये च ये वा विकृतिवादिनः ॥
एवं निरूपिताः प्रायः विषयत्वाभिधेऽधुना ।
संबन्धे ये विकल्पास्स्युः सर्वदर्शनभूमयः ॥

19 प्रकाश्यता विषयता ग्राह्यतेत्येवमादयः ।
सर्वैर्दार्शनिकैः प्रायः समानार्था इतीष्यते ॥
कौमारिलैः पुनस्तत्र विशेषः कल्प्यते यथा ।
अग्न्यादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ॥
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ।
ग्राह्यत्वं तु यदा तेषां तदाऽक्षं ग्राहकं मतम् ॥
अक्षग्रहणकाले तु ग्राहिका धीर्भविष्यति ।
इत्युक्तेर्ग्राह्यता भिन्ना प्रकाश्यत्वादिति स्थितम् ॥
ब्रह्माद्वैतविदस्तत्र विपरीतं विदुर्यथा ।
संविदः स्वप्रकाशत्वाद्यद्यपि स्यात्प्रकाश्यता ॥
विषयत्वात्मिका तत्र नेष्यते त्वनुभाव्यता ।
नोचेदननुभूतित्वमनुभूतेः प्रसज्यते ॥
इति प्राहुस्ततो ग्राह्यताया भिन्ना प्रकाश्यता ।
एवं स्वयंप्रकाशत्वं त्रातुं वेद्यत्वनिह्नवः ॥
प्रकाशनिह्नवो भाट्टैः जाड्यं तस्यैव रक्षितुम् ।
स्वप्रकाशास्वप्रकाशधीविवादफलं त्विदम् ॥

20 एवं कर्तृत्वकर्मत्वविरोधस्तन्निबन्धनः ।
कारकज्ञापकानैक्याविवेकात्सकलं त्विदम् ॥
कर्तृकर्मविरोधस्य रहस्यमिदमीरितम् ।
कर्ता स्वतन्त्रः कर्मादिरुपसर्जनमिष्यते ॥

स्वातन्त्र्यं पारतन्त्र्यं च युगपन्न च युज्यते ।
इत्येकमपरं चापि विद्वद्वर्यैर्निरूपितम् ॥
कर्ता सिद्धः कर्म साध्यं कालभेदस्तयोर्मतः ।
एककालत्वमुभयोः विरुद्धमिति निर्णयः ॥
एष कालविरोधः स्यात् पूर्वो भवति दैशिकः ।
क्रियैव कारकं येषां सौगतानामभीप्सितम् ॥
तेषां कालोऽथवा देशः नास्त्येवहि विरोधकृत् ।
तस्माद्विरोधाविरोधविवादो वासनानुगः ॥

21 समवायस्थले कश्चिदपृथक्सिद्धिलक्षणः ।
संबन्धः स्वीकृतः प्राज्ञैः तत्स्वरूपं निशम्यताम् ॥
सिद्धिर्नाम स्थितिः ज्ञप्तिः उत्पत्तिश्चापि कथ्यते ।
पृथक्स्थित्यादयो यस्य न सन्ति यदपेक्षया ॥
तयोस्स्यादपृथक्सिद्धिः संबन्ध इति गम्यते ।
कार्यादिकारणादीनां सा स्यादयुतसिद्धयोः ॥
अविष्वग्भावनाम्नाऽयं संबन्धः पुनरार्हतैः ।
स्वीकृतः सोऽपि देशानां भेदस्यैव निषेधकृत् ॥
कथंचित्तादात्म्यरूपमिति पातञ्जलादिभिः ।
स्वीकृतं वस्तुतस्तत्र फलभेदा न विद्यते ॥

22 अथापृथक्सिद्धिवादतात्पर्यस्येह संग्रहः ।
क्रियते बुद्धिशुद्ध्यर्थं यन्मूलं सर्वदर्शनम् ॥

यच्च वस्तुपरिच्छेदशून्यं ब्रह्माभिधीयते ।
तत्स्यादिदमिदं नेति निर्देशानर्हतात्मकम् ॥
तच्च स्वरूपाभेदात्स्यादपृथक्सिद्धितोऽपि वा ।
जडाजडविभागश्च प्रमाणपरिनिष्ठितः ॥
ततोऽपृथक्सिद्धसत्ताकत्वात्तत्स्यादिति स्थितम् ।
तच्च द्वेधैव घटते न प्रकारान्तरस्थितिः ॥
तत्र चैतत्सत्त्वभिन्नसत्त्वशून्यत्वतोऽथवा ।
यदधीना यस्य सत्ता तत्तदित्येव भण्यते ॥
इति स्मृत्यैतदायत्तसत्ताकत्वाद्भवेदपि ।
तत्राद्यं तु विशेष्याख्यसत्ताशून्यत्वतोऽथच ॥
व्यतिरिक्तत्वरूपस्य विशेषणदळस्य वा ।
अभावात्तत्राद्यपक्षः बाह्याद्वैताभ्युपागतः ॥
अनन्तरस्तु वेदान्ताद्वैताभ्युपगतो मतः ।
विशिष्टाद्वैतसिद्धान्ते तत्सत्तायत्तसत्तया ॥
अपृथक्सिद्धिरुररीकृता तत्र द्वयी गतिः ।
ब्रह्मसत्त्वेनैव सत्त्वं प्रपञ्चस्योपपद्यते ॥
अतिरिक्ता नास्ति सत्ता गुणजातिनयादिति ।
इयमेका रीतिरन्या त्ववधानेन बुध्यताम् ॥
प्रपञ्चे चापि सत्ताऽस्ति प्रमाणपरिनिष्ठिता ।
सा ब्रह्मसत्तायत्ता स्यादित्येकेषां विनिर्णयः ॥

द्विधाऽपि जगतो नास्ति मिथ्यात्वं तुच्छताऽपिवा।
एवं द्वैतादिसिद्धान्ते निर्णीता प्रायशो गतिः ॥

(54) अभाववादः.

1 अथचाभावतत्त्वस्य जिज्ञासाऽत्र प्रवर्तते ।
अभावतत्त्वव्यत्यासाद्विवादाना समुद्भवः ॥
अभावो निस्स्वभावस्स्यान्न कार्यं नापि कारणम्।
तस्मान्नोत्पद्यते नैवोच्छिद्यते नित्य एव सः ॥
नित्येन प्रागभावेन ध्वंसेनापिच तादृशा ।
ग्रस्तं विश्वं निस्स्वभावं तच्छून्यमिति सौगताः ॥
तत्रातिरिक्तमपरे त्वभावं नानुजानते ।
अनुजानन्तोऽपि परे तत्त्वं त्वितथमूचिरे ॥
2 नास्तीत्याद्यध्यक्षसिद्धो ह्यभावो भूतलादिषु ।
घटादेः, वस्तुभूतोऽसौ नहि निह्नवमर्हति ॥
अभावव्यवहारोऽपि निश्शङ्कगमनादिकः ।
तन्मात्रानुभवेनैव ख्यातो निष्कण्टकाध्वसु ॥
यदा यत्र च दृश्यत्वे सत्यप्यनुपलम्भनम् ।
तदभावव्यवहृतिस्तदानीं संप्रवर्तते ॥
ज्ञेयाभावस्य तु ज्ञानाभावरूपत्वकल्पने ।
अभावाख्यपदार्थोऽङ्गीकृत एव भवेन्ननु ॥

दर्शनादर्शनाभ्यां हि सदसत्त्वविनिर्णयः ।
दर्शनादर्शने एव सदसत्त्वे कथं पुनः ॥
अभावो बुद्ध्यभावश्चेत् बुद्धिस्स्यात्प्रतियोगिनी ।
व्यर्थस्त्वियान् प्रयासस्स्यात् जिता विज्ञानवादिनः
अभाववादिनो यत्स्यादभावज्ञानकारणम् ।
तदेव व्यवहारस्य हेतुस्स्यादिति यो वदेत् ॥
घटादिव्यवहाराणामपि तज्ज्ञानकारणात् ।
संसिद्धेस्सोऽपह्नुवीत ज्ञानमात्रं च चारुवाक् ॥
जगतो मिश्ररूपत्वं स्यादभावो नचेदिह ।
क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ॥
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ।
अप्सु गन्धो रसश्चाग्नौ वाय्वादावपि ते गुणाः ॥
प्रागभावादिभेदेन नाभावो भिद्यते यदि ।
नच स्याद्व्यवहारोऽयं कारणादिविभागतः ॥
नचावस्तुन एवैते भेदाः, तेनास्य वस्तुता ।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥
स चतुर्विध इत्युक्तः प्रागभावादिभेदतः ।
अपेक्षाभावसामर्थ्याभावाभ्यां षड्विदुः परे ॥
क्षीरे दध्यादि यन्नास्ति प्रागभावस्स उच्यते ।
गवि योऽश्वाद्यभावस्स्यात्सोऽन्योन्याभाव ईर्यते ॥

शिरसोऽवयवा निम्नाः वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥

3 अपेक्षाऽभाव एवासौ यस्स्यात्सामयिको मतः ।
उत्पन्नस्य विनाशो वा तदनुत्पाद एव वा ॥
अभावस्तत्त्वतोऽन्ये तु भेदास्त्वौपाधिका इति ।
प्राहुर्जयन्तभट्टाद्याः, नव्यनैयायिकाः पुनः ॥
संसर्गाभावतादात्म्याभावभेदाद्द्विधा विदुः ।
प्रागभावादिभेदेन प्रथमस्त्रिविधो मतः ॥
अजातो घटसंबन्धः प्रागभावस्सदोच्यते ।
उत्पद्य स विनष्टश्चेत्प्रध्वंसाभावशब्दितः ॥
शशस्य त्वविषाणित्वं विद्यते सार्वकालिकम् ।
सोऽत्यन्ताभाव इत्येवं आद्यस्यैव विधा त्रिधा ॥
अन्यसंबन्धिताऽन्यत्र त्रिष्वप्येषु निषिध्यते ।
संसर्गाभावशब्देन त्रितयं व्यपदिश्यते ॥
अन्यस्मिन्नन्यतादात्म्यनिषेधस्स्यादनन्तरः ।
स चेतरेतराभावस्तादात्म्याभावशब्दितः ॥
यद्यभावोऽधिकरणं धीर्वा कालोऽथवा भवेत् ।
एकस्यानन्तता रूपाद्यभावाग्रहणं तु वा ॥

4 स्थितो नव्यपरिष्कारः, कापिलानां मते पुनः ।
परिणामविशेषाख्यादन्यः कैवल्यलक्षणात् ॥

भूतलादेर्घटाभावो नाम कश्चन नेष्यते ।
परिणामस्वभावा हि भावास्सर्वे प्रतिक्षणम् ॥
द्रव्यात्मना तु सर्वस्य नित्यता बहुसम्मता ।
अतो विरोधप्रवादो ह्यत्यन्तप्रागभावयोः ॥
प्राक्प्रध्वंसाभिधाभावौ नात्यन्ताभावतः परौ ।
आधारेऽपि तयोस्सोऽपि वर्तते न विरुध्यते ॥
यद्वा निराश्रयौ स्यातां यदि भिन्नौ ततो मतौ ।
इति वादीन्द्रसिद्धान्तं तार्किका नानुमन्वते ॥
5 व्यतिरेकोऽतिरेकश्च कैश्चिद्भेदो द्विधेष्यते ।
अन्त्योऽसाधारणो धर्मः धर्मो धर्म्यपि वा परः ॥
जीवो न व्यतिरिक्तोऽपि त्वतिरिक्तो महेशितुः ।
इति सिद्धान्तभेदोऽसौ तत्रोदाहरणं मतम् ॥
भेदेतरेतराभावप्रभेदं केचिदास्थिताः ।
भेदो विशेषः व्यक्तिस्स्यात् अन्त्यः सामान्यमुच्यते॥
अपोह एव सामान्यं सौत्रान्तिकविनिश्चितम् ।
स्वलक्षणा विशेषास्स्युः जातिव्यक्ती इमे मते ॥
स्वरूपमेव वस्तूनां परस्परविलक्षणम् ।
नानात्वं तत्सुसंवेद्यं भेद इत्यभिधीयते ॥
पटरूपं घटे नास्ति घटरूपं पटे नहि ।
इति देशान्तराभावः अन्योन्याभाव उच्यते ॥

इति भास्करसिद्धान्तः प्रायस्सौत्रान्तिकानुगः ।
जातिर्भेदश्च संस्थानं त्रयमेतद्विलक्षणम् ॥
इति तार्किकनिष्कर्षोऽनर्थान्तरमिदं त्रयम् ।
इति रामानुजीयानां सिद्धान्तः प्रविविच्यते ॥
केचिद्विकुर्वते भेदं मानमेयाद्यसंभवात् ।
भेदो द्विधा स्यात् सादिश्चानादिश्चेत्यपि तन्मतः ॥
अनित्यमुभयं ध्वंसप्रतियोगीति कीर्त्यते ।
परे प्रतिब्रुवन्त्येतान् स्वप्रवृत्तिविरोधतः ॥
अपोहवादिनस्सर्वोऽप्यभावे पर्यवस्यति ।
भावान्तराभाववादे विपरीता ततो गतिः ॥
कैवल्याभाववादे तु पर्यायेण हि तुच्छता ।
अतिरिक्ताभाववादः कैश्चित्तस्मात्समाश्रितः ॥
कारणत्वमभावस्य भाट्टैः नाभ्युपगम्यते ।
भावो यथा तथाऽभावः कारणं कार्यवन्मतः ॥
प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः ।
इत्यभ्युपगमान्न्यायविद्भिश्शक्तिर्निरस्यते ॥
प्रभाकरगुरुः प्रायः न्यायसिद्धान्तवर्त्मगः ।
अभावतत्त्वमीमांसा विदुषामपि दुर्गमा ॥
6 अत्र रक्तपटाः प्राहुः प्रमेये सति चिन्तनम् ।
युक्तं नाम प्रमाणस्य तदेवत्वातिदुर्लभम् ॥

अभावो निस्स्वभावस्स्यात् तुच्छं चाळीकमुच्यते।
न कार्यं कारणं मेयः मानं वाच्यश्च नेष्यते ॥
जगतो मिश्ररूपत्वं स्यादभावो न चेदिह ।
इत्यादि यद्वार्तिकोक्तं तत्राहुरिदमुत्तरम् ॥
भावो भावादिवान्यस्मादभावाशोऽप्यसौ मिथः ।
असंकीर्णोऽभ्युपेतव्यः स कथं वा भविष्यति ॥
अन्योन्यमप्यभावानां यद्यसंकीर्णता स्वतः ।
भावैः किमपराद्धं वा परतश्चेत्कुतो नु सा ॥
भावेभ्यो यद्युपेयेत भवेदन्योन्यसंश्रयम् ।
अभावान्तरजन्या चेत् अनवस्था दुरुत्तरा ॥
नन्वभावप्रतिक्षेपे नञः किं वाच्यमुच्यते ।
नैव शब्दानुसारेण वाच्यस्थितिरुपेयते ॥
बौद्धाः खलु वयं लोके सर्वत्र ख्यातकीर्तयः ।
विकल्पमात्रशब्दार्थपरिकल्पनपण्डिताः ॥
ननुचानेन मार्गेण यद्यभावो निरस्यते ।
एकादशप्रकारैषाऽनुपलब्धिः क्व गच्छतु ॥
सत्यमेकादशविधाऽनुपलब्धिरिहेष्यते ।
सा त्वसद्व्यवहारस्य हेतुः नाभावसंविदः ॥
स्वभावहेतावन्तस्स्था एता अनुपलब्धयः ।
स चासद्व्यवहारः तद्योग्यताऽत्र विवक्षिता ॥

सैव ह्यनुपलब्धिस्स्यात् एकता हेतुसाध्ययोः ।
नन्वभावानभ्युपगमेऽनुपलब्धिश्च कीदृशी ॥
इयमेषा प्रतीषेधपर्युदस्तान्यझेमुषी ।
वस्त्वन्तरोपलब्धिश्च स्वसंवेद्येति वर्ण्यते ॥
नातोऽन्यानुपलब्धेश्चापेक्षयाऽप्यनवस्थितिः ।
विशेषणीया दृश्यत्वेनैषेत्यपि च कथ्यते ॥
नातोऽसद्व्यवहारस्स्यात् अदृष्टादाविति स्थितम् ।
घटादेः पूर्वदृष्टस्य दृश्यत्वपरिनिश्चयात् ॥
असत्त्वव्यवहारो हि सिद्ध्यत्यनुपलब्धितः ।
एकान्तानुपलब्धेषु विहायःकुसुमादिषु ॥
असत्त्वधीर्न दृश्यत्वयोग्यताऽनवधारणात् ।
न शक्योऽनुपलम्भेन कर्तुं नास्तित्वनिश्चयः ॥
तत्रापित्वपिशाचोऽयं चैत्र इत्येवमादिषु ।
तादात्म्यप्रतिषेधे च दृश्यत्वं नोपयुज्यते ॥
पिशाचेतररूपो हि चैत्रः प्रत्यक्षगोचरः ।
ताद्रूप्यनिश्चये तस्य किंफलं तद्विशेषणम् ॥
इत्यसद्व्यवहारस्य सिद्धेरनुपलब्धितः ।
न भाववदभावाख्यं प्रमेयमवकल्पते ॥
इति सौगतसिद्धान्तं प्रत्यवस्थातुमब्रुवन् ।
विलक्षणं प्रमाणं च प्रमेयं च कुमारिलाः ॥

7 अत्र नैयायिकाः प्राहुर्घटोऽस्तीहेतिबुद्धिवत् ।
इह नास्तीतिबुद्धेरप्यस्ति बोध्यं न वोभयम् ॥
सुखदुःखसमुत्पत्तिरभावे शत्रुमित्रयोः ।
कण्टकाभावमालम्ब्य पदं पथि निधीयते ॥
प्रागुत्पत्तेर्घटाभावं बुद्ध्वा तत्कारणादरः ।
व्याध्यभावपरिच्छेदाद्भैषज्यविनिवर्तनम् ॥
इहाभावप्रतिष्ठानव्यवहारपरंपराम् ।
पश्यन्नभावं को नाम निह्नुवीत सचेतनः ॥
तदुत्पादस्वभावे हि न किंचिन्मुद्गरादिना ।
अतदुत्पादकत्वेऽपि न किंचिन्मुद्गरादिना ॥
मुद्गरोपनिपाताच्च यदुत्पन्नं क्षणान्तरम् ।
घटक्षणस्य किं वृत्तं येन नाभाति पूर्ववत् ॥
नन्वस्याभवनं वृत्तं, स एवार्थोऽयमुच्यते ।
घञा किमपराद्धं वा किं वाऽप्युपकृतं ल्युटा ॥
तस्मादित्थमभावस्य प्रमेयत्वोपपादनात् ।
न ह्यसद्व्यवहाराय कल्पन्तेऽनुपलब्धयः ॥
न स्वभावानुमाने च तदन्तर्भावसम्भवः ।
मेयं पृथगभावाख्यममूषामुपपादितम् ॥
कारणानुपलब्ध्यादेर्बाढमस्त्वनुमानता ।
स्वभावानुपलब्धिस्तु प्रत्यक्षमिति साधितम् ॥

जरत्तार्किकसिद्धान्ते न पदार्थान्तरं त्वसौ ।
अभाव इति विद्वांसः केचिदत्रोल्लिखन्त्यपि ॥
मानं तु तत्र काणादसूत्रे नोददिशच्च तम् ।
द्रव्यादिसमवायान्ताः पदार्था एव कीर्तिताः ॥
8 यैस्तु मीमांसकैस्सद्भिरभावो नाभ्युपेयते ।
प्रमादेनामुना तेषां अनिष्टमिदमुद्भवेत् ॥
नचाप्रतीतिमात्रेण तदभावनिबन्धनाः ।
व्यवहाराः प्रकल्पन्ते मृदन्तरिततोयवत् ॥
खपुष्पस्य पिशाचस्य मृदन्तरितवारिणः ।
नखल्वनुपलभ्यत्वे विशेषः प्रतिभाति नः ॥
सर्वदाऽनुपलम्भो हि कुर्वन्नास्तित्वनिश्चयम् ।
विशेष्यते मृदन्तस्स्थसलिलानुपलब्धितः ॥
आगमाद्युक्तितश्चापि सत्त्वसंभावनां गतः ।
सर्वदाऽनुपलब्धोऽपि न पिशाचः खपुष्पवत् ॥
अनिष्यमाणे चाभावे भावानां प्रतियोगिनि ।
नित्यतैषां प्रसज्येत न ह्येते क्षणिकास्तव ॥
मुद्गरादेश्च किंकार्यं, कपालपटलीति चेत् ।
घटस्तर्ह्यविनष्टत्वात् स्वकार्यं न करोति किम् ॥
तदानीमेव दृष्टस्य स्थिरस्यामुष्य किंकृतम् ।
सर्वेन्द्रियादिसामग्रीसन्निधानेऽप्यदर्शनम् ॥

स्वप्रकाशा च नास्तीतिसंवित्तिर्भवतां मते ।
न निरालम्बना चेयमस्तीति प्रतिपत्तिवत् ॥
विकल्पविषयाश्शब्दा यथा शौद्धोदनेर्गृहे ।
गीयन्ते भवता नैवमिति नञ्वाच्यमुख्यताम् ॥
प्रसिद्धिश्च परित्यक्ता नचाभावः पराकृतः ।
उपेक्षितश्च भाष्यार्थः इत्यहो नयनैपुणम् ॥
अलंच बहुनोक्तेन विमर्दोऽत्र न शोभते ।
महात्मनां प्रमादोऽपि मर्षणीयो हि मादृशैः ॥
इति वार्तिककारीययुक्तिभिः न्यायमञ्जरी ।
तत्प्राभाकरसिद्धान्तपरिहासेन शोभते ॥

9 भावान्तराभाववादः कुमारिलपरिष्कृतः ।
इति प्रत्यक्षमेवैतत् श्रूयतां श्लोकवार्तिकम् ॥
प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि॥
स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते कैश्चिद्रूपं किंचित्कदाचन ॥
भावाभावात्मकं वस्तु तदेकमिति यद्यपि ।
रूपादिवत्स्वतोऽस्त्येव भेदः नात्यन्तमेकता ॥
तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनं ज्ञानं अभावालम्बनं च तत् ॥

भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।
भ्रान्तिश्चाभावधीश्चापिचेत्थं सालम्बना मता ॥
इत्यभावपरिच्छेदे निरालम्बननिह्नवे ।
भावान्तराभाववादः कुमारिलमुखोद्गतः ॥
इत्थं प्रमेयभागोऽयं प्रथमस्समगृह्यत ।
लक्ष्मीपुरंश्रीनिवासविपश्चिच्चक्रवर्तिना ॥

श्रीः.

प्रीयतां भगवान् वासुदेवः.

इति श्रीवत्सकुलकलशजलनिधिकौस्तुभायमानश्रीवेङ्कटार्यतनूभवस्य तातारम्बागर्भशुक्तिमुक्ताफलायमानस्य श्रीमत्कस्तूरीरङ्गनाथविद्वन्मणिकरुणाकटाक्षसमासादितसारस्वतसर्वस्वस्य श्रीमद्विरक्तराघवार्यचरणानुगृहीतसकलसम्प्रदायरहस्यस्य श्रीमद्राजाधिराजमहीशूरमहीधुर्यतुर्यश्रीकृष्णराजसार्वभौमपरिपोषितस्य महाविद्वत्पण्डितरत्नाद्यनेकबिरुदालङ्कृतस्य संस्कृतमहापाठशालानिगमान्तप्रधानोपाध्यायस्य श्रीमतो लक्ष्मीपुराभिजनस्य श्रीनिवासाचार्यस्य कृतिषु मानमेयरहस्यश्लोकवार्तिके प्रमेयकाण्डः प्रथमः समाप्तः.

## अथ द्वितीयः प्रमाणकाण्डः.

---

### (55) प्रमाणपरीक्षा.

1 अथ प्रमाणवादोऽयं संक्षेपेण निरूप्यते ।
तदधीनास्सर्वसिद्धीराहुस्सर्वेऽपि वादिनः ॥
मानं मेयं मितिर्मातेत्येतदर्थचतुष्टयम् ।
दुर्निरूपं ततश्शून्यमित्याहुर्मध्यमागमाः ॥
बुद्ध्या विविच्यमानायां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः ॥
पदार्थानां स्वतो रूपं न किंचिद्व्यवतिष्ठते ।
यथायथाऽर्थाश्चिन्त्यन्ते विशीर्यन्ते तथातथा ॥
इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।
यथायथाऽर्थाश्चिन्त्यन्ते भविष्यन्ति तथातथा ॥
कल्पनापोढमभ्रान्तं प्रमाणं निर्विकल्पकम् ।
विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः ॥
नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥
अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥

2 इत्येवमादीन् सिद्धान्तान् वदन्तीति पुरोदितम् ।
तत्र विप्रतिपन्नानां युक्तिर्नयविदामियम् ॥
सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।
माने विप्रतिपन्नानां वादमार्गो निरुध्यते ॥
न सर्वस्याप्रमाणत्वं स्वपक्षस्य स्वतः क्षतेः ।
न सर्वस्य प्रमाणत्वं स्वपक्षस्यान्यतः क्षतेः ॥
प्रमाणस्य प्रमाणेन बाधः स्वव्याहतेर्हतः ।
अप्रमाणेन तद्बाधे साधनं च ततो न किम् ॥
अहं सत्यं वदामीति स्वोक्तिः स्वपररक्षिणी ।
न कदाचिद्वदामीति वादस्तु स्वोक्तिबाधितः ॥
मानस्थापकमानस्य मानसंक्षोभकस्य च ।
गतिरेवमिति प्रेक्ष्य गहनां कुहनां त्यजेत् ॥
अथ वैतण्डिकस्यैषा सर्वसंक्षोभकस्य च ।
इष्टप्रसक्तिरितिचेदनिष्टं तेऽस्ति वा न वा ॥
नास्तिचेन्नैव दूष्योऽन्योऽप्यस्तिचेत्तत्प्रसज्यते ।
इष्टानिष्टाविवेकस्तु तिरश्चामपि दुर्वचः ॥
3 लोके प्रमेयव्यत्यासः प्रमाणव्यत्ययागतः ।
अतः तत्त्वप्रबोधाय प्रवृत्ता मानचिन्तना ॥
प्रत्यक्षितसमस्तार्थैर्योगीन्द्रैरपि लङ्घ्यते ।
प्रमाणप्लवमालम्ब्य तत्त्वविप्लवसागरः ॥

अवकाशोपरोधाय तत्त्वोपप्लवमिच्छताम् ।
अविपर्याससंसिद्ध्यै शोध्यते मानपद्धतिः ॥
सर्वोपजीव्यमध्यक्षं मानं प्रथममिष्यते ।
तन्मूलमनुमानं स्यात् आगमस्तूभयाश्रितः ॥
उपमानादिकं मानं ततस्त्रितयमूलकम् ।
सर्वं त्वनन्यथासिद्धमूलमाश्रित्य वर्तते ॥
मानाधीना मेयसिद्धिः मानं मेयमपीष्यते ।
उपधेयस्य सांकर्येऽप्युपाधेर्न हि संकरः ॥
आत्माश्रयादिदोषस्तु व्यक्तिभेदादपोद्यते ।
इन्द्रियाणां च लिङ्गानां प्रभेदस्सर्वसम्मतः ॥
स्वत एवहि मानानां सिद्धिर्वेष्टा मनीषिभिः ।
धीरस्तीति मतौ शब्दशब्दे लक्षणलक्षणे ॥
इष्टः स्वपरनिर्वाहस्सर्वमित्यादिधीष्वपि ।
पूर्वपूर्वोपदिष्टाद्वा मानसिद्धिर्हि लक्षणात् ॥
ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः ।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ॥
4 व्यापकोऽसाधारणो वा धर्मो लक्षणमुच्यते ।
तदुपस्थापनेनाप्तवाक्यं ह्यपिच लक्षणम् ॥
व्यवहारव्यवस्थैव लक्षणस्य प्रयोजनम् ।
असाधारणधर्मो हि भवेद्व्यावृत्तिलक्षणः ॥

लक्षणादधिके भेदे क्ववाऽतीतत्वसंभवः ।
तस्यैव तत्त्वे किं केन किमर्थं साधनं भवेत् ॥
व्यावृत्तेश्च फलत्वे तु तदेवमवगम्यताम् ।
शरीरं पार्थिवं गन्धवत्त्वात् घटपटादिवत् ॥
शरीरमाप्यं न भवेत् गन्धादित्येवमादिषु ।
शरीरादेः पार्थिवत्वसंशयादेर्विशोधनम् ॥
एवं तदात्मना शङ्काविषयेष्वपि वस्तुषु ।
तल्लक्षणस्य राहित्यात्तदन्यत्वं हि सिद्ध्यति ॥
तस्यापि तेभ्यो वस्तुभ्यो व्यतिरेकः प्रसिद्ध्यति ।
लक्षणादेव तत्सिद्धेः व्यावृत्तिः फलमुच्यते ॥
तस्माद्धर्मः प्रमेयात्मा धर्मिनिष्कर्षमाचरन् ।
लक्षणं, न प्रमाणात्मेत्येष लक्षणनिर्णयः ॥
अतो न मानताऽन्येषां केवलव्यतिरेकिणः ।
ह्यंशोऽवरोपितो भारः तेषां हैतुकभञ्जने ॥
इति न्यायपरीशुद्धिकृतां लक्षणनिर्णयः ।
भावान्तराभाववविदां सर्वेषामेष सम्मतः ॥

## (56) प्रमाणस्वरूपम्.

1 प्रमाणशब्दव्युत्पत्तिः स्याद्भावे करणेऽपि च ।
प्रमा प्रमाणमित्येके विदुस्तत्करणं परे ॥

तदन्यतरदित्यन्ये यथासंभवमिष्यते ।
करणस्य प्रमाणत्वे प्रमायाः फलता मता ॥
प्रमायास्तु प्रमाणत्वे व्यवहारस्य सेष्यते ।
व्यवहारो ह्युपादानोपेक्षाहानधियो मताः ॥
प्रमाकरणमेवात्र प्रमाणं बहवो विदुः ।
प्रमाविकल्पतश्चैतत्करणं च विकल्प्यते ॥

2 वैभाषिकैः पुनस्त्वर्थाधिगतिः फलमिष्यते ।
प्रमाणमर्थसारूप्यं प्रमागतमिदं यथा ॥
अर्थेन घटयत्येनां नहि मुक्त्वाऽर्थरूपताम् ।
तस्मात्प्रमेयाधिगतेः प्रमाणं मेयरूपता ॥
यथोत्पत्तावपि ज्ञानस्यास्ति प्रागकलक्षणः ।
व्यापारोऽवश्यवक्तव्यः पुमान्येन प्रवर्तितः ॥
अर्थोऽपि स्यात्प्रापितश्च सैषाऽर्थाधिगतिर्मता ।
अर्थसारूप्यात्मकस्य प्रमाणस्य फलं हि सा ॥

3 स्वसंवित्तिफलत्वं तु वदतां मतमुच्यते ।
प्राभाकरास्तु विषयसंवित्तिफलवादिनः ॥
विषयाकार एवास्य प्रमाणं तेन मीयते ।
स्वसंवित्तिः फलं चास्य तद्रूपे ह्यर्थनिश्चयः ॥
इति सौत्रान्तिकमतं योगाचारमतं पुनः ।
यदाभासं प्रमेयं तत् प्रमाणफलते पुनः ॥

4 ग्राहकाकारसंवित्त्योः त्रयं नातः पृथक्कृतम् ।
मतद्वयनिरासांशो वार्तिके त्वित्थमुच्यते ॥
विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोः भेदः लौकिकः तेन बाधितः ॥
स्वाकारश्च स्वसंवित्तिं मुक्त्वा नान्यः प्रतीयते ।
प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥
स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते ।
प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः ॥
अविसंवादनमिति केचित् बौद्धाः प्रचक्षते ।
इत्यतो विस्तरस्तत्र द्रष्टव्यस्सूक्ष्मदर्शिभिः ॥
5 बौद्धाः प्रमाणफलयोरत्यन्ताभेदवादिनः ।
यौगाः प्रमाणफलयोरत्यन्तं भेदवादिनः ॥
आर्हताद्याः पुनर्भेदाभेदवादिन ईरिताः ।
आत्मनः परिणामोऽयं ज्ञानमित्यभिधीयते ॥
विशेषस्सहजो ह्येष गुण इत्यार्हतं मतम् ।
प्रमाणत्वेन परिणाम्यात्मा फलतयाऽपिच ॥
स्यादन्यथा स्वपरयोः प्रमाणफलविप्लवः ।
विज्ञानं स्वपराभासि प्रमाणं बाधवर्जितम् ॥
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ।
इति स्याद्वादिसिद्धान्तः शिष्टमन्यत्र विस्तृतम् ॥

6 नैयायिकानां सिद्धान्ते प्रमाणमपि चेश्वरः ।
तत्साधनादाश्रयाच्चाव्यतिरिक्तत्वमिश्रितम् ॥
प्रमाव्याप्तं प्रमाणं स्यात् साधनं त्विन्द्रियादिकम् ।
आश्रयस्त्वात्मवस्तु स्यात् तयोः प्रामाण्यनिर्णयः ॥
मितिस्सम्यक्परिच्छित्तिः तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥

7 अथ शाबरसिद्धान्ते प्रमाणमिदमुच्यते ।
या बुद्धिर्जायते पुंसः प्रमाणं सैव कथ्यते ॥
बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरात्माऽयं प्रमातेति न युज्यते ॥
इति शाक्यविकल्पस्य भङ्गार्थमिदमुच्यते ।
पुमान् विक्रियते चैवेतीष्यते बुद्धिजन्मना ॥
न तद्विकारमात्रेण वस्तुनो नाशसंभवः ।
कुण्डलादिविकारेऽपि सुवर्णादिपदार्थवत् ॥
उपादानदशाभेदः वस्तुनो जननक्रिया ।
यस्य चानन्तरं सत्ता कार्यस्येत्यवगम्यते ॥
कारणे समवायस्तु कार्यस्यौलूक्यसम्मतः ।
स नित्योऽतीन्द्रियश्चाक्षानधीन इति दूषणम् ॥
व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥

बुद्धेर्जन्मैव विषये व्यापार इति कीर्त्यते ।
तदेवच प्रमारूपं तद्वती करणं च धीः ॥
ततश्च जायमाना सा प्रमाणं बुद्धिरिष्यते ।
अतश्च बुद्धिजन्मेति सूत्रयामास जैमिनिः ॥

8 सिद्धान्तस्यास्य विवृतिः कुमारिलमता यथा ।
ज्ञानं नाम क्रिया काचित्पुंसो व्यापारलक्षणा ॥
चितिशक्तेः कार्यभूता विकारः सूक्ष्म इष्यते ।
फलानुमेया तस्याश्च फलं स्यादर्थदृष्टता ॥
तामावरणभङ्गोक्त्योपचरन्ति बुधाः परे ।
धात्वर्थफलशालित्वं कर्मत्वमिति शिक्षिताः ॥
कारकाणां मिथो योगः स्यात्क्रियागर्भ एवहि ।
स्थाल्यादीनि हि सिद्धानि साध्यं धात्वर्थलक्षणम् ॥
पाकमेकं पुरस्कृत्य संसृज्यन्ते यथा मिथः ।
आत्मेन्द्रियमनोवस्तुसन्निकर्षादयस्तथा ॥
कुर्वन्ति कंचिद्व्यापारं सुसूक्ष्मं ज्ञानलक्षणम् ।
इति कौमारिलमते ज्ञानतत्त्वं सुनिश्चितम् ॥
शब्दाधिकरणे चैतच्छ्रूयते श्लोकवार्तिकम् ।
बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य नः ॥
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः ।
व्याख्यात्रा विषयार्थोऽत्र सूक्ष्मः व्यापार ईरितः ॥

9 प्राभाकरमते चापि क्रियैव ज्ञानलक्षणा ।
तस्याः विषयसंवित्तिः फलमभ्युपगम्यते ॥
संवित्तौ फलरूपायां प्रकाशात्मस्वभावतः ।
स्वरूपं भासते ग्राह्यरूपत्वेन घटादिकम् ॥
आत्मा तु ग्राहकत्वेन घटं जानाम्यहं त्विति ।
आकारस्संविदो ज्ञेय एष तन्मतसंग्रहः ॥

10 अथ सांख्यादिसिद्धान्ते प्रमाणपरिशोधनम् ।
अर्थोपलब्धिकरणं प्रमाणमिति तन्मतम् ॥
लक्षणं तद्विवरणं किंचिदत्र प्रदर्श्यते ।
विषयाकारिणी बुद्धिवृत्तिर्ज्ञानामतीर्यते ॥
बुद्धेस्सत्त्वसमुद्रेकोऽध्यवसायस्तु स स्मृतः ।
इदं तावत्प्रमाणं स्यात् प्रबोधोऽनुग्रहः फलम् ॥
अनुग्रहश्च चिच्छक्तेः छायाऽऽपत्त्याऽर्थयोगिता ।
अतः पदार्था भिद्यन्ते बुद्धिज्ञानोपलब्धयः ॥

11 एतन्मतनिराकृत्यै गौतमेन हि सूत्रितम् ।
बुद्ध्यादित्रितयं चैतदनर्थान्तरमित्यपि ॥
अन्तःकरणवृत्तीनां बहिःकरणवृत्तिवत् ।
न ज्ञानताऽन्यथा भूतचैतन्यं स्याद्दुरुद्धरम् ॥
आत्मनो हि गुणः ज्ञानं न क्रियेति हि तन्मतम् ।
आगमश्चाप्यपायश्च स्यातां तस्य निरन्वयौ ॥

12 वैशेषिकमतेऽप्येवमथौपनिषदे मते ।
निर्विशेषविदः प्राहुः सच्चिदानन्दलक्षणा ॥
अनुभूतिः स्वप्रकाशा ब्रह्मात्मा ज्ञानमुच्यते ।
संविदेषा प्रकाशैकस्वरूपा सिद्ध्यति स्वतः ॥
प्रकाशरूपस्सविता स्वप्रकाशो यथोच्यते ।
निवृत्तगतिरप्यद्रिस्तिष्ठतीति यथोच्यते ॥
तथा स्वयंप्रकाशाऽसावित्युक्तिस्त्वौपचारिकी ।
प्रायेणापोहवादेन साध्यते निर्विशेषता ॥
परागर्थप्रमेयेषु या फलत्वेन सम्मता ।
संवित्सैव हि सिद्धान्तः वेदान्तोक्तिप्रमाणतः ॥
इति वार्तिककारोक्तिस्सिद्धित्रय उदाहृता ।
वृत्तिज्ञानं तु सांख्यादिसिद्धान्तवदपीष्यते ॥
स्वरूपभिन्नं ज्ञानाख्यं द्रव्यमात्माश्रितं सदा ।
प्रभावतः प्रभेवेति विशिष्टाद्वैतिनो विदुः ॥
धर्मभूतं च तत् ज्ञानं परिणामीत्युपेयते ।
यथा सांख्यमते चित्तं, तत्सर्वं धर्मधीर्मता ॥
द्वैतिभिस्तु स्वरूपस्य साक्षित्वात् ज्ञानतेष्यते ।
प्रसाददैन्यप्रमुखावस्था अप्यात्मनो मताः ॥
तथाऽपि तन्नित्यतायाः विरोधो नैव कश्चन ।
यथाऽऽत्मा शाबरो नित्यः प्रायस्सर्वैस्तथेष्यते ॥

तथैव वृत्तिधीवादः सांख्यानामिव सम्मतः ।
सांख्यशाबरसिद्धान्तसमवाय इति स्थितम् ॥
यथार्थत्वं प्रमाणस्य लक्षणं परिकीर्तितम् ।
असतोऽपि भ्रमे भानोपगमान्न यथार्थता ॥

(57) प्रमाणविभागः.

1 प्रत्यक्षमेकं चार्वाकाः प्रमाणं प्रतिपेदिरे ।
अतीन्द्रियपदार्था ये न विद्यन्ते हि तन्मते ॥
तेष्वेवैकेऽनुमानस्याप्यत्रान्तर्भाववादिनः ।
अनुमानप्रमाणादेरप्रामाण्यं परे विदुः ॥
प्रत्यक्षमनुमानं च काणादास्सौगता अपि ।
आगमः पौरुषेयत्वान्न ताभ्यामतिरिच्यते ॥
तत्र पूर्वेऽनुमाने हि शब्दान्तर्भावमूचिरे ।
अप्रामाण्यं परे केचिदन्तर्भावं तु केचन ॥
ते चागमं च सांख्याद्या अपि भूषणयायिनः ।
पूर्वेऽनादिं वेदमाहुः परे त्वीश्वरनिर्मितम् ॥
तानि स्मृतिं च काणादाः केचित् केचिच्च वैदिकाः ।
सोपमानानि तान्याहुः स्मृतिहीनानि गौतमाः ॥
आगमः पौरुषेयोऽपि स्वतन्त्रः समयान्मतः ।
संकेतग्राहकत्वेनोपमानमपि तन्मतम् ॥

तानि सार्थापत्तिकानि प्राहुः प्राभाकराः पुनः ।
अर्थापत्त्याऽतीन्द्रियार्थास्सिद्ध्यन्तीति हि तन्मतम् ॥
सादृश्यस्यातिरिक्तत्वादुपमानं पृथङ्मतम् ।
अभावानभ्युपगमात् षष्ठं मानं न चादृतम् ॥
तान्येवाभावषष्ठानि विदुः कौमारिलाः पुनः ।
मेयानुसारान्मानस्य भिन्नता तैर्विचिन्तिता ॥
संभवैतिह्ययुक्तानि तानि पौराणिका विदुः ।
ऐतिह्येन ह्यनेकेऽर्थाः पौराणिकमते मताः ॥
लिपिः लोकप्रसिद्धिश्च चेष्टा प्रातिभमेवच ।
अन्यैश्चान्यैः स्वतन्त्रैर्हि मानान्तरमितीष्यते ॥
स्वयंसिद्धं च दिव्यं च प्रत्यक्षमनुमाऽऽगमः ।
इति पञ्चविधं केचित्प्रमाणं प्रविविञ्चते ॥
स्पष्टास्पष्टविभेदेन प्रमाणद्वयवादिनः ।
जैनास्त एव प्रत्यक्षपरोक्षद्वयवादिनः ॥
स्मरणप्रत्यभिज्ञानुमानतर्कागमैः परम् ।
पञ्चप्रकारमित्याहुः पूर्वं त्विन्द्रियभेदतः ॥
प्रत्यक्षं च परोक्षं चापरोक्षमिति भेदतः ।
आत्माऽपरोक्षसंसिद्ध इत्यौपनिषदा विदुः ॥
केवलं चानुप्रमाणं चेति द्वेधा विभज्यते ।
प्रमाणमिति सिद्धान्तः जयतीर्थबुधेरितः ॥

प्रमाणप्रक्रियेदानीमियमेषोपलभ्यते ।
पूर्वापरे ह्यनन्तेऽस्मिन् काले कोऽङ्गीकरोति किम्॥
निराकरोति वा कः किं देवो जानाति सर्ववित् ।
2 विभागान्तरसारांशः प्राज्ञैस्त्वित्थं विशोधितः ॥
बहुष्वेकैकमुद्धृत्य तदन्येष्वैकराश्यतः ।
द्वैधक्लृप्तौ घटादावप्येवमेव प्रसज्यते ॥
अनुमाऽननुमानत्वशब्दाशब्दाविभागतः ।
प्रत्यक्षत्वापरोक्षत्ववादिनां किं न रोचते ॥
स्पष्टमस्पष्टमिति च जैना यद्वैधमूचिरे ।
तत्प्रत्यक्षपरोक्षत्वविभागान्न विशिष्यते ॥
अतो न तावति द्वैधे विवादोऽस्ति हि साधिते ।
परोक्षस्यैकमानत्वं दुर्वचं भेददर्शनात् ॥
3 नन्वध्यक्षेऽपि भेदोऽस्ति बाह्यान्तरविभागतः ।
दिव्यादिव्यतया चक्षुःश्रोत्रादिभिदयाऽपिच ॥
अत्रेन्द्रियानपेक्षं यत् ज्ञानमर्थावभासकम् ।
दिव्यं प्रमाणमित्येतत् प्रमाणज्ञाः प्रचक्षते ॥
परमेश्वरविज्ञानं मुक्तानां च धियस्तथा ।
सञ्जयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत् ॥
तद्वत्परोक्षस्यैकस्य प्रमाणस्य विभागतः ।
अनुमानागमाद्याख्याः न भवेयुः कुतो भिदाः ॥

अत्रोच्यते श्रुतं दृष्टमेतच्चानुमितं त्विति ।
लोकोक्त्या चोपलम्भेन त्रित्वादि प्रतिपेदिरे ॥
अतस्स्मृत्यनुभूत्याख्याविभागादपि नोचिता ।
प्रमाणद्वित्वमित्युक्तिः भूयसां दृष्टिरिष्यते ॥
4 प्रामाण्यमविसंवाद इति सौगतपद्धतिः ।
प्रमेयाव्यभिचारित्वं प्रामाण्यमिति चार्हताः ॥
प्रामाण्यमर्थताथार्थ्यं विपरीतं विपर्ययः ।
तदर्थस्थमपि ज्ञानसंबद्धमिति वैदिकाः ॥
अर्थनिश्चायकत्वं स्यात्प्रामाण्यमिति तार्किकाः ।
यथार्थविषयत्वं तत्स्यादित्यन्ये विदुर्बुधाः ॥
तद्वद्विशेष्यकत्वेनावच्छिन्ना तत्प्रकारिता ।
इति नव्यविनिष्कर्षः विशेष्यांशः स्वतो मतः ॥
प्रामाण्यमर्थजन्यत्वमप्रामाण्यमनर्थजम् ।
इत्यपि व्यवहारोऽस्ति जयन्तादिमानीषिणाम् ॥
अर्थक्रियाकारिता तन्मतमित्यपरे विदुः ।
प्रवृत्तेर्वा निवृत्तेर्वा स्यात्प्रयोजकता तु तत् ॥
इत्याहुरपरे प्राज्ञाः ते चाधिगतिवादिनः ।
सर्वप्रमाणप्रामाण्यमेतादृगिति केचन ॥
शब्दप्रमाणप्रामाण्यमेतादृक्षमितीतरे ।
एवं विकल्पबीजं तु पुरस्तादवधार्यते ॥

## (58) स्वतस्त्वादिविचारः

1 प्रमाणत्वाप्रमाणत्वे स्वतः सांख्यास्समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥
प्रथमं परतः प्राहुर्वेदवादरताः पुनः ।
प्रामाण्यं स्वत एवाहुः परतश्चाप्रमाणताम् ॥
सामान्येन विभागोऽयं क्रमेणाथोपपादनम् ।
द्वयोस्स्वतस्त्वं वक्तॄणां सांख्यानामाशयस्त्वयम् ॥
सर्वं सवृत्तिकं चित्तं विदितं साक्षिणा सदा ।
गृहीते एव ते स्यातामेकत्वाद्धर्मधर्मिणोः ॥
अप्रामाण्ये गृहीतेऽपि प्रवृत्तिर्योपलभ्यते ।
मुग्धप्रवृत्तिवत्तत्र सैषा स्याद्वासनावशात् ॥
स्वतोऽसतामसाध्यत्वात् तत्स्वाभाविकमुच्यते ।
ज्ञप्त्युत्पत्त्यविवेकोऽपि सिद्धान्तस्यास्य साधनम् ॥
कार्यकारणभावस्य मीमांसायामयं स्फुटः ।
अथ सौगतसिद्धान्तसारांशोऽत्रोपपाद्यते ॥

2 अप्रामाण्यमवस्तुत्वान्न स्यात्कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजायते ॥
इत्युत्पत्तौ प्रसिद्धं हि परतस्त्वं विपश्चिताम् ।
अथ ज्ञप्तौ सत्त्वमर्थक्रियाकारित्वलक्षणम् ॥
व्याप्तं हि सत्त्वं भावानां क्रमतो यौगपद्यतः ।
नित्येषु तु पदार्थेषु व्यापकानुपलम्भनात् ॥

तद्व्याप्तमपि सत्त्वं हि बलात्तेभ्यो निवर्तते ।
क्षणिकत्वेन तान् भावान् सत्त्वं समवलम्बते ॥
ज्ञानोत्पत्त्यैव तद्धेतोरसामर्थ्यमपोद्यते ।
असमर्थात्समुत्पादो दृश्यते न हि कस्यचित् ॥
समर्थकारणज्ञानादयं प्रामाण्यनिश्चयः ।
इत्यतः परतस्त्वं तत्प्रामाण्यस्येति निर्णयः ॥
द्वितीयज्ञानसंवादादाद्यविज्ञानसंस्थितम् ।
प्रामाण्यं गृह्यत इति विदुः केचन सौगताः ॥
अप्रामाण्यस्य संवादः प्रायशो नैव दृश्यते ।
अप्रामाण्यं स्वत इति सिद्धान्तः तदभीप्सितः ॥
अर्थक्रिया वा संवादः गुणो वा परशब्दितः ।
3 अथ वैदिकसिद्धान्तः संग्रहेण विलिख्यते ॥
घटोऽस्तीत्यत्र विज्ञाने सन् घटो हि प्रतीयते ।
प्रामाण्यमर्थसद्भावः स तु स्वेनैव गृह्यते ॥
प्रज्ञायतेऽतः प्रामाण्यं स्वत इत्युच्यते बुधैः ।
अर्थक्रियाहेतुगुणसंवादैः क्रियते स्थिरम् ॥
अर्थान्यथात्वं नास्तित्वं अप्रामाण्यं तदिष्यते ।
न तत्प्रतीयते भ्रान्तौ बाधज्ञाने प्रतीयते ॥
अप्रामाण्यं परत इत्यतएवाभिधीयते ।
अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ॥

वस्तुत्वाद्द्विविधस्यात्र संभवो दुष्टकारणात् ।
अविज्ञाने तु दोषाणां व्यापारो नैव कल्प्यते ॥
कारणाभावतस्त्वेव तत्सिद्धं सौगतोक्तिवत् ।
स्वतः परत इत्यस्य तत्त्वमित्थं बुधा विदुः ॥
तस्मात्सर्वप्रमाणानां प्रामाण्यं स्वत इष्यते ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥
अपिचेतरसंवादात्पूर्वपूर्वप्रमाणताम् ।
वदन्तो नाधिगच्छेयुः अन्तं युगशतैरपि ॥
सुदूरमपि गत्वा तु प्रामाण्यं यदि कस्यचित् ।
स्वतएवाभिधीयेत को द्वेषः प्रथमं प्रति ॥
अर्थक्रियाचेत्संवादः स्वप्ने सीमन्तिनीं विना ।
नस्याद्धातुविसर्गोऽपि व्यभिचारो महानयम् ॥
अथवाऽऽप्तफलत्वेन किं तत्प्रामाण्यचिन्तया ।
कृतक्षौरस्य नक्षत्रपरीक्षावद्वृथा भवेत् ॥
तत्रापि नाप्रवृत्तस्य प्रामाण्यपरिनिश्चयः ।
एवमेव प्रवृत्तौ तु निश्चितेनापि तेन किम् ॥
तन्निश्चयात्प्रवृत्तौ वा पुनरन्योन्यसंश्रयः ।
तन्निश्चयात्प्रवृत्तिस्स्यात्प्रवृत्तेस्तद्विनिश्चयः ॥
उत्सर्गः ज्ञानसम्यक्त्वं भूयोविषयलक्षणम् ।
अपवादो वैपरीत्यं विषयाल्पत्वलक्षणम् ॥

यत्तत्त्वपक्षपातोऽस्ति स्वभावो हि धियामयम् ।
अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः ॥
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ।
इत्याहुरपि बाह्याश्च स्यात्प्रमाणं ततः स्वतः ॥
दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।
गुणज्ञानानवस्थावत् न दोषेषु प्रसज्यते ॥
साक्षाद्विपर्ययज्ञानाल्लब्धेव त्वप्रमाणता ।
पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिद्ध्यति ॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते ॥

4 अख्यातिपक्षे सर्वत्र सम्यगग्रहणं भ्रमः ।
न मिथ्याप्रत्ययः कश्चिदस्ति शङ्कानिबन्धनम् ॥
अजातमिथ्याशङ्कश्च न संवादमपेक्षते ।
तस्मान्न कश्चित्परतः प्रामाण्यमधिगच्छति ॥
एवं स्वतः प्रमाणत्वे सिद्धे वेदेऽपि सा गतिः ।
नेदं रजतमित्यत्र बाधार्थस्त्ववगम्यताम् ॥
यदेवेदं तदेवात्र रजतं त्विति नापितु ।
विविक्तं स्यादिदमिदं रजतं रजतं त्विति ॥

5 अत्र नैयायिकाः प्राहुः परतो ह्ययवादिनः ।
प्रमाणत्वपरिच्छित्तौ विसंवदति तत्कथम् ॥

अप्रामाण्यगृहीतौ वा तस्मिन् कस्मात्प्रवर्तते ।
अतो ह्ययं स्वत इति पक्षोऽस्मभ्यं न रोचते ॥
प्रयोजनस्य सिद्धत्वात्तत्परीक्षानपेक्षणात् ।
नान्योन्यसंश्रयो नानवस्था वाऽत्र प्रसज्यते ॥
कौमारिलमतेऽप्येवमनवस्था दुरुद्धरा ।
प्रामाण्यं ज्ञाततालिङ्गजन्यज्ञानेन गृह्यते ॥
तत्प्रामाण्यं तादृशेनेत्यनवस्था न किं नु सा ।
स्वयंभानज्ञानवादिप्रभाकरगुरोर्मते ॥
प्रामाण्यस्य स्वतस्त्वं यत्तन्मानान्तरगोचरः ।
तत्प्रामाण्यस्वतस्त्वं चाप्येवं सैषाऽनवस्थितिः ॥
तादृग्ज्ञानानपेक्षायामस्माकं सैव पद्धतिः ।
रागोद्वेगात्पित्तधातुविकाराद्वा विसर्ज्यते ॥
स्वप्ने तु चरमो धातुः न दोषोऽतः प्रसज्यते ।
स्वतःपरत इत्यस्य विवादस्य फलं त्विदम् ॥
वेदस्यापौरुषेयत्वपौरुषेयत्वनिर्णयः ।
6 अत्र वेदान्तसिद्धान्ते विशेषांशोऽवधार्यताम् ॥
कथं पुनरनभ्यासदशायां तस्य संशयः ।
इत्याशङ्का विपश्चिद्भिरेवमत्र समाहिता ॥
विशेषतो गृह्यमाणेष्वपि संशयदर्शनम् ।
अभीक्ष्णं शुक्तिकामोहादन्धीकृतधियां मतम् ॥

यथोपलभ्यमानेऽपि कलधौतेऽस्ति संशयः ।
यथेदं रजतं वाऽथ पूर्ववच्छुक्तिरेव वा ॥
तथाऽत्र गृह्यमाणेऽपि प्रामाण्ये किमियं प्रमा ।
उत पूर्वभ्रमवदप्रमा वेति हि संशयः ॥
अथात्र संदेहसहस्वतोग्रहणतः फलम् ।
किंवा स्यान्निश्चयस्त्वन्याधीन एवेति चेच्छृणु ॥
शक्यं नियन्तुं ग्रहणमिह नास्मदपेक्षया ।
सिद्ध एवानुसर्तव्यः तत्प्रकारः परीक्षकैः ॥
7 सोऽपि स्वतः कथं सिद्ध इति चेदवधार्यताम् ।
अस्ति स्वालम्बनं ज्ञानं प्रकाशयदिति स्फुटम् ॥
ज्ञानान्तरानपेक्षं तत्स्वयमेव प्रकाशते ।
इतितावत्स्वप्रकाशवादिवेदान्तिसम्मतम् ॥
अस्वप्रकाशवादेऽपि व्यवसायो हि गृह्यते ।
प्रागनुव्यवसायेनासंशयात्मैव केवलम् ॥
स्मृत्यप्रामाण्यवादेऽपि स चापूर्वार्थगोचरः ।
अबाधितोऽविपर्यस्तः मतः स्मृतिविलक्षणः ॥
ततो यद्विषयत्वेन व्यवसायः प्रकाशते ।
परस्परपरिक्षोदात्पश्चादपि तथैव सः ॥
यत्तद्विषयतारूपं प्रामाण्यं व्यवतिष्ठते ।
आदावेव गृहीतं तत्स्वतः प्रामाण्यमुच्यते ॥

नन्वेवं संशयत्वाद्यमप्रामाण्यमपि स्वतः ।
शक्यं ग्रहीतुं स्वेनानुव्यवसायेन वेति चेत् ॥
विपर्ययस्वरूपं यत्त्वप्रामाण्यं न तत्तथा ।
यद्गृह्यमाणवैरूप्यं स्वेन स्वग्राहिणाऽथवा ॥
तस्यादौ ग्रहणायोगे न विवादोऽत्र वादिनाम् ।
इममंशमुपादाय स्वतःप्रामाण्यसंभ्रमः ॥

(59) प्रमाविचारः.

1 एवमस्य स्वतस्त्वस्य विशेषांशो विचारितः ।
अथ प्रमापदार्थस्य विकल्पोऽयं विमृश्यताम् ॥
ज्ञानं प्रमेति सिद्धान्तस्स्यान्निरालम्बवादिनाम् ।
आत्मख्यातिं विदुः स्वप्ने भ्रमे चापि भिदा ततः॥
अविसंवादिविज्ञानं प्रमेत्याहुरथापरे ।
वैभाषिकादयः, भ्रान्तिर्निरधिष्ठानधीर्मता ॥

2 अन्यथाख्यातिमिच्छन्तस्त्वनिच्छन्तस्स्मृतिं प्रमाम्
नैयायिकादयस्सम्यगनुभूतिं प्रमां विदुः ॥
केचित्तूभयमिच्छन्तः यथार्थां तु धियं प्रमाम् ।
व्यवहारस्यानुगुणं ज्ञानमन्ये प्रमां विदुः ॥
तथाऽऽर्हताः पुनरभिमतानभिमतार्थयोः ।
परिग्रहपरित्यागक्षमं ज्ञानं प्रमां विदुः ॥

यथा बुद्बुदपक्ष्यादौ विसंवादस्त्वपक्रमात् ।
तथा मणिप्रभास्थाने संवादोऽन्यनिबन्धनः ॥
विषयाकारतापन्नेन्द्रियवृत्त्यनुपातिनी ।
पुरुषेणोपरक्ता च बुद्धिवृत्तिः प्रमा मता ॥
पातञ्जलैः कापिलैश्च चेतनाशक्त्यनुग्रहः ।
पौरुषेयो बोध इति चिच्छायेत्यपि कीर्त्यते ॥
3 अबाधितानधिगतवस्तुज्ञानं प्रमां विदुः ।
विपरीतख्यातिवादिकौमारिलमतानुगाः ॥
अनिच्छन्तोऽन्यथाख्यातिमनिच्छन्तः स्मृतिं प्रमाम् ।
अनुभूतिं प्रमामाहुः गुरवोऽख्यातिवादिनः ॥
4 स्वयं प्रकाशते ज्ञानं त्रिपुटीज्ञानवादिनाम् ।
मानसप्रत्यक्षवादः तार्किकैरुररीकृतः ॥
ज्ञानातीन्द्रियवादं तु कौमारिलमतं विदुः ।
अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति ॥
सहोपलम्भनियमादभेदो नीलतद्धियोः ।
इति वादो निराकारि ज्ञानातीन्द्रियवादिभिः ॥
क्षणान्तरविलम्बेन मानसाध्यक्षवादिभिः ।
स्वानुभूतिविरोधेन स्वप्रकाशत्ववादिभिः ॥
विज्ञानवादो निर्धूत इति वेदान्तपद्धतिः ।
तस्मात्सौगतशिक्षार्थं मतिजाड्यमिति स्थितम् ॥

एवं प्रमाप्रमाणानां प्रायः तत्त्वं विचारितम् ।
विशिष्य विस्तरः तत्तत्तैर्थिकैः प्रकटीकृतः ॥

(60) भ्रमविचारः.

1 अथ भ्रान्तिज्ञानतत्त्वं किंचिदत्रावधार्यताम् ।
आत्मख्यातिरसत्ख्यातिः अन्यथाख्यातिरित्यपि ॥
अख्यातिस्सदसद्भिन्नख्यातिस्सत्ख्यातिरित्यपि ।
शून्यख्यातिश्च निरधिष्ठानख्यातिरिहाष्टमी ॥
अर्थसंसर्गजाकारख्यातिश्च नवमी मता ।
बाह्याकारार्पिताकारख्यातिस्तु दशमी स्थिता ॥
भ्रान्तिस्थले पक्षभेदाः विद्वद्भिरुररीकृताः ।
तेषां विभागवचनमेतदत्र प्रवर्तते ॥
तत्रार्थशून्यं विज्ञानं योगाचारास्समाश्रिताः ।
आत्मख्यातिं विदुः स्वप्ने ह्यसत्ख्यातिं च जाग्रति ॥
2 कल्पिताकारिणी ख्यातिरसत्ख्यातिरितीतरे ।
तत्तु वैभाषिकमतं कल्पनावादिनो हि ते ॥
असतोऽपि भ्रमे भानं केचिद्वेदान्तिनो विदुः ।
विलक्षणाऽन्यथाख्यातिरेषोक्ताऽसत्प्रकारिणी ॥
शून्यख्यातिं विदुस्तत्र मध्यमागमवादिनः ।
योगाचारैः पुनस्तत्र न्याय एष प्रयुज्यते ॥

स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथाहि यः ।
प्रत्ययस्स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥
तत्र प्रत्यक्षबाधोक्तौ शून्यख्यातिं समाश्रिताः ।
तां चाकारयुतां केचित्केचित्स्वच्छां विजानते ॥
3 विकल्पाख्यां वृत्तिमिह शब्दज्ञानानुपातिनीम् ।
वस्तुशून्यां विदुः प्राज्ञाः पातञ्जलमतस्थिताः ॥
एते निर्विषयख्यातिवादिनः बौद्धसोदराः ।
असत्ख्यातिप्रसङ्गश्च ख्यात्यपह्नव इत्यपि ॥
अस्मिन्निर्विषयख्यातिवादे दोषो न कश्चन ।
अख्यातौ वाऽन्यथाख्यातौ विश्रमस्सर्ववादिनाम् ॥
असावन्यासक्तदृष्टिन्यायादिति तदाशयः ।
अन्यासङ्गे दृष्टिरेव नोत्पद्यत इतीतरे ॥
4 एवं निरालम्बवादं शून्यवादं च तादृशम् ।
असत्कर्तुं हि सुधियो भ्रान्तिशिक्षां प्रचक्रिरे ॥
न तत् ज्ञानं नाम किंचित् यत्स्याद्विषयमन्तरा ।
तस्माद्भ्रमेऽपि विषयं शोधयन्ति विपश्चितः ॥
बाह्यार्थवादिनः केचित्सौगताः निरधिष्ठितिम् ।
ख्यातिमिच्छन्ति केशोण्डूटिट्टिभादिमतिर्यथा ॥
इदं रजतमित्यत्र पुरोवर्तिनि वस्तुनि ।
नाध्यस्यते च रजतं किंतु संस्कारलेशतः ॥

रजतं दोषवशतः भाति स्वयमिदंतया ।
ख्यातिस्सा निरधिष्ठाना स्याद्वैभाषिकसम्मता ॥
5 अन्ये त्वाहुर्निराकारौ बुद्धिश्चार्थश्च वस्तुतः ।
तथापि सितरक्तादिराकारो जायते ततः ॥
यथा च रजनीचूर्णसंयोगाद्रागसंभवः ।
स एव बाह्य आकारः गृह्यते बुद्धिशक्तितः ॥
अर्थसंसर्गजाकारख्यातिवादोऽयमीरितः ।
बाह्याकारार्पिताकारख्यातिवादः पुनर्यथा ॥
6 स्वप्रकाशाध्यक्षसिद्धं विज्ञानं क्षणिकं यतः ।
पूर्वापरक्षणस्पर्शितया तत्तु न भासते ॥
नच बाह्यार्थमिथ्यात्वं व्यवहाराव्यवस्थितेः ।
नीलादिसंततौ पीताद्यनुत्पत्तिप्रसङ्गतः ॥
न प्रत्यक्षस्स बाह्योर्थः संप्रयोगनिरोधतः ।
भिन्नकालं कथं ग्राह्यमितिचेद्ग्राह्यतां विदुः ॥
हेतुत्वमेव युक्तिज्ञाः ज्ञानाकारार्पणक्षमम् ।
अतो हेतुत्वमेवात्र ग्राह्यत्वेनोपचर्यते ॥
ज्ञानार्थयोस्समुत्पादे तुल्यसामग्र्यधीनयोः ।
ज्ञानजन्मनि च ज्ञानमुपादानमितीष्यते ॥
अर्थश्च सहकारी स्यात् अर्थोत्पत्तौ विपर्ययः ।
अतो हेत्वर्पिताकारः स्वात्मा प्रत्यक्षगोचरः ॥

तेनानुमीयते बाह्यस्सर्वोऽर्थ इति निर्णयः ।
एतत्सौत्रान्तिकमतं उभयं किंचिदन्तरम् ॥

7 अन्यथाख्यातिवादेऽपि नासद्विषयकल्पना ।
इत्यत्र पद्ययुगळं ज्ञेयं सर्वार्थसिद्धिगम् ॥
इह त्वारोप्यसंसर्गिसंसर्गासत्त्ववर्णनम् ।
नासद्ग्रहणक्लृप्तौ स्यात् प्रमाविषयसाम्यतः ॥
अदुष्टबुद्धौ तत्रैव संसर्गस्सन् विशेषकः ।
अन्यत्रसिद्ध एवासौ दुष्टायां दोषवैभवात् ॥
अन्यथाख्यातिवादेऽत्र विशेषांशोऽवधार्यताम् ।
कैश्चिदालम्बनं भ्रान्तावुक्तं सूर्यमरीचयः ॥
निगूहितनिजाकारास्सलिलाकारधारिणः ।
अन्ये त्वालम्बनं प्राहुः पुरोऽवस्थितधर्मिणः ॥
सादृश्यदर्शनोद्भूतस्मृत्युपस्थापितं पयः ।
अन्यदालम्बनं चान्यत्प्रतिभातीति केचन ॥
आलम्बनं दीधितयः तोयं च प्रतिभासते ।
कर्तुः करणतो भिन्नं विज्ञानजनकं तु यत् ॥
तदालम्बनमित्युक्तं अन्यथाख्यातिवित्तमैः ।
कथंचिदपि विज्ञाने निरालम्बनता हता ॥

8 अख्यातिपक्षे दोषाद्यैः शुक्तेः केवलधर्मिणः ।
धर्मसारूप्यमात्रेण रजतं स्मर्यते तदा ॥

दोषादेषाऽपिच तदा स्मृतित्वेन न गृह्यते ।
रजतं च स्मरामीति तदानीमप्रतीतितः ॥
तस्मात्प्रमुषितामेनां स्मृतिमिच्छन्ति तार्किकाः ।
रजतस्मरणं शुक्तिग्रहणं चास्ति धीद्वयम् ॥
ग्रहणस्मरणे एते विविक्ते अपि तत्तया ।
न गृह्येते इति विवेकाग्रहोऽख्यातिरुच्यते ॥
विवेकेन न गृह्येते स्मरणानुभवौ क्वचित् ।
स्वप्ने तु स्मृतिरेवैका तथात्वेन न गृह्यते ॥
द्विधाकृता क्वचिद्वृत्तिः नेत्रस्य तिमिरादिना ।
नहि ग्रहीतुमैक्येन शक्नोति शिशिरत्विषम् ॥
क्वचिद्रसनसंपृक्ते पित्ते तिक्तत्ववेदनात् ।
परिच्छेत्तुं न शक्नोति माधुर्यं शर्करागतम् ॥
गृह्णाति यत्तु तिक्तत्वं वस्तुतः पित्तवर्ति तत् ।
तथातु न विजानाति निगिरन्नेव शर्कराम् ॥
अख्यातिरेषा सर्वत्र कथंचित्कस्यचिन्मता ।
तदेवंसति सर्वत्र सम्यगग्रहणं भ्रमः ॥
एषोऽग्रहस्त्वभावो वा ख्यात्यन्तरमथापिवा ।
नाद्योऽभावानुपगमान्नान्त्यस्स्यात्ख्यातिरन्यथा ॥
तस्मात्सामान्यधर्मस्य ख्यातिस्सत्ख्यातिरेव सा ।
अख्यातिवादस्सत्ख्यातिवादश्चार्थान्तरं मतः ॥

यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।
प्रभाकरगुरोर्भावः नयवीथ्यां प्रकाशितः ॥
आहार्यलक्षणस्तर्कोऽप्येवमेवान्यथाकृतः ।
संशयोऽपि विरुद्धार्थनानाज्ञानमिहेष्यते ॥
डोलासंयोगवत्, वेगो दृढश्चेन्निश्चयो मतः ।
ऊहानध्यवसायौ च परोक्तौ संशयात्मकौ ॥
तदन्यत्वेऽपि निर्वाहस्समानन्यायतो मतः ।
आत्मनः प्रतिसंधिर्यः प्रत्यभिज्ञैव सा मता ॥
तत्रैकमेव विज्ञानं न द्वयं सौगतादिवत् ।
बुद्धिबाधोक्तिरेषा स्यात् अयोग्यं वाक्यमिति, अतः॥
बुद्धिबाधनिषेधोक्त्या नान्यथाख्यातिसंभवः ।
9 विपरीतख्यातिवादिकुमारिलमतं त्विदम् ॥
स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ।
सर्वत्रालम्बनं ग्राह्यं देशकालान्यथात्मकम् ॥
जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपिवा ।
तद्देशो वाऽन्यदेशो वा स्वप्नज्ञानस्य गोचरः ॥
तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनं ज्ञानमभावालम्बनं तु तत् ॥
धर्मान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।
विज्ञायते वस्तु सर्वं सदसद्रूपभेदतः ॥

सत्स्यात्स्वरूपेण पुनरसत्स्यादन्यरूपतः ।
भ्रान्तिरन्यस्य सद्रूपेणान्यद्धि प्रतिपद्यते ॥
अभावधीरप्यन्यस्यासद्रूपेणान्यगोचरा ।
तेनोभयं ज्ञानमित्थमन्यथासन्तमन्यथा ॥
प्रतिपद्यत इत्युक्तिरेवंरीत्योपपद्यते ।
10 सत्ख्यातिवादिनः प्राज्ञः भास्करा इति विश्रुतम् ॥
तात्कालिकं सदेवेदं जायते रजतादिकम् ।
भासते बाधकाले तु स्वसामग्र्या विनश्यति ॥
इत्याहुरेष वादस्स्यात्प्रातिभासिकसोदरः ।
11 सत्ख्यातिपक्षे सामान्यधर्मग्रहणलक्षणे ॥
अप्यंशत्रयमस्तीति नावकाशो विवादिनाम् ।
यथार्थं सर्वविज्ञानमिति वेदविदां मतम् ॥
श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः ।
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ॥
सोमावयवसद्भावादिति न्यायविदो विदुः ।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥
तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ।
शुक्त्यदौ रजतादेश्च भावः श्रुत्यैव बोधितः ॥
रूप्यशुक्त्यादिनिर्देशभेदः भूयस्त्वहेतुकः ।
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥

अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ॥
रजतांशो गृहीतोऽतः रजतार्थी प्रवर्तते ।
दोषहानौ तु शुक्त्यंशे गृहीते न प्रवर्तते ॥
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥
शुक्तिभूयस्त्वसाकल्यवैकल्यग्रहरूपतः ।
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥
एवं स्वाप्नादिविज्ञानं तत्तत्पुंकर्ममूलकम् ।
स हि कर्ता सृजति च तादृशार्थानिति श्रुतम् ॥
पीतशङ्खालातचक्रद्विचन्द्रमृगतृष्णिकाः ।
लोहितस्फटिकादर्शप्रतिबिम्बादयोऽपिच ॥
यथार्था इति सिद्धान्तः युक्तिभिः प्रकटीकृतः ।
इति सत्ख्यातिसिद्धान्तसंग्रहोऽयं निरूपितः ॥

### (61) अनिर्वचनीयवादः.

1 अनिर्वाच्यख्यातिपक्षे सदसद्भिन्नलक्षणात् ।
तात्कालिकात्तु विषयान्निरालम्बननिह्नवः ॥
सत्त्वे न भ्रान्तिबाधौ स्तः नासत्त्वे ख्यातिबाधने ।
सदसद्भ्यामनिर्वाच्याऽविद्या विद्यैस्सह भ्रमः ॥

2 प्रातिभासिकवस्तूनामेवमुत्पत्तिरुच्यते ।
दुष्टेन्द्रियस्येदमर्थाकाराऽऽदौ वृत्तिरुद्भवेत् ॥
तस्यां वृत्ताविदमवच्छिन्ना चित्प्रतिबिम्बते ।
ततः प्रमात्रभिन्नेऽस्मिन्विषये शुक्तिकात्मनि ॥
याऽविद्या सा हि रजतसंस्कारसचिवा सती ।
काचादिदोषसहिता रजतार्थात्मना तथा ॥
रजताभासात्मना च युगपत्परिणामिनी ।
अविद्यापरिणामोऽयं रजतं प्रातिभासिकम् ॥
चैतन्यापेक्षया तच्च विवर्त इति चोच्यते ।
साक्षिण्यध्यस्तं च ततः वेद्यं केवलसाक्षिणः ॥
चिन्निष्ठमप्यवच्छेदाद्भासते हीदमात्मना ।
यथा ज्ञानमवच्छेदाच्छरीरे भासते तथा ॥
तथा स्वाप्नादयोऽप्यर्थाः तत्तत्कालावसायिनः ।
अनिर्वाच्या इति भ्रान्तिर्न हि निर्विषया क्वचित् ॥

3 अनिर्वाच्यख्यातिपक्षाक्षेपोऽयमवधार्यताम् ।
प्रपञ्चसत्यसिद्धान्तवादिभिः प्रकटीकृतः ॥
अनिर्वाच्यानिर्वचत्वे भवेत्सर्वं निरुक्तिमत् ।
अथाखिलेऽप्यनिर्वाच्ये तत्त्वं स्याद्ब्रह्मतुच्छयोः ॥
अस्तु तत्प्रस्तुतस्यात्र न बाध इति चेत्तदा ।
तुर्यसौगतसिद्धान्तगतान्तःपतनं ध्रुवम् ॥

जाते च सदसद्वाह्ये सदसद्धीः क्रमात्सती ।
स्वच्छायामिव दुर्लङ्घ्यामन्यथाख्यातिमावहेत् ॥
अन्यथाख्यातिरस्तीति परबुद्धिं निषेधता ।
दृष्टा तदन्यथाख्यातिः अन्यथा किं निषिध्यते ॥
असच्चेन्न प्रतीयेतेत्येतल्लोकविसंमतम् ।
प्रतीयमानमेवैतन्मृगतोयमसन्मतम् ॥
प्रपञ्चो यदि बाध्येत सोऽसन्नेव भवेत्सदा ।
बाधायां नहि वैजात्यं कल्प्यं लोकविलक्षणम् ॥
सर्वदैवाप्रतीतं यदसदित्युच्यते यदि ।
कथं भवान् तत्प्रत्येति प्रत्याययति नः कथम् ॥
शून्यं तुच्छमसच्चेति सदेवास्माभिरुच्यते ।
खरे शृङ्गं नरे गोत्वमित्यादेस्तादृशत्वतः ॥
4 असत्यात्सत्यनिष्पत्तिप्रतिपत्ती मते यदि ।
असत्यादप्यधिष्ठानादध्यासः किं न कल्प्यते ॥
अत्र कौमारिलं श्लोकवार्तिकं श्रूयतां पुनः ।
सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते ॥
न दृष्टा शशशृङ्गादेः सम्यज्ज्ञानादिहेतुता ।
बाष्पादिनाऽप्यधूमेन मिथ्यावह्न्यादिबोधनम् ॥
तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।
साऽप्यसत्या न सत्यं हि सत्याभासेन गम्यते ॥

येऽपि रेखादयो दृष्टा वर्णानां प्रतिपादकाः ।
न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ॥
वर्णात्मना न सत्याश्चेत् सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किंचिदिष्यते ॥
मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥
काव्यप्रकाशसंकेते धर्मकीर्तिवचस्त्विदम् ।
उदाहृतं हि तत्रापि मणेरंशो मणिप्रभा ॥
अंशेन चांशिनो लाभे नासत्यात्प्रतिपत्सती ।
असत्यात्सत्यनिष्पत्तिवादोऽप्यन्यत्र विस्तृतः ॥
5 उपायानां स्वरूपं हि संवृत्यात्मकमेव चेत् ।
संवृत्या यत्स्वरूपं स्यात्तद्वाङ्मात्रनिबन्धनम् ॥
इतोऽपि विस्तरस्तत्र द्रष्टव्यस्सूक्ष्मदर्शिभिः ।
संवृतेरपि यत्तत्त्वं तत्पुरस्ताद्विविच्यते ॥
मर्यादास्थापनार्थं च मानतर्कौ समुत्थितौ ।
सिंहारण्यवदन्योन्यं गुप्तौ तौ स्वान्यसाधकौ ॥
परमर्यादया ब्रूमः परव्याहतिमित्यसत् ।
स्वव्याघातादिभङ्गानां परानङ्गीकृतेरिति ॥
सदसद्व्यतिरेकोऽपि विरुद्धो यदि गृह्यते ।
सदसद्रूपता किं नु प्रतीता तु न गृह्यते ॥

अनुष्णाशीतवत्तुच्छाद्ब्रह्मणश्चातिरेकिता ।
साध्येत ख्यातिबाधादेर्यदि, सिद्धं तदत्र नः ॥
स्वशास्त्रनिर्णये सत्ये सत्यास्स्युर्लोकनिर्णयाः ।
स्वशास्त्रनिर्णयेऽसत्ये सत्यास्स्युर्लोकनिर्णयाः ॥
नच विश्वस्य बाधोऽपि स्वरसादुपजायते ।
अप्रतिष्ठितयुक्त्या तु बाधः सर्वं हि संस्पृशेत् ॥
मिथ्यात्वेन च दृश्यत्वं स्वतस्संबन्धि साधयन् ।
अप्रामाण्यस्वतस्सिद्धिमुद्रित्यनया दिशा ॥
अविद्यां विश्वजननीमर्धपञ्चमरूपिणीम् ।
निवृत्तिपञ्चमाकारां कल्पयन्तोऽप्यधःकृताः ॥
एवमाद्यैः वचोभेदैः प्रायः खण्डनखण्डनैः ।
अनिर्वाच्यख्यातिपक्षे प्रतिपक्षान् प्रचक्षते ॥
6 दुर्घटत्वमविद्यायाः भूषणं न तु दूषणम् ।
इत्येकमेव ब्रह्मास्त्रं परैः प्रतिनिधीयते ॥
अविद्यावागुरा सैषा यथा विज्ञानवागुरा ।
वासनावागुरा सर्वं पुरुषो वासनामयः ॥
7 सर्वसत्यत्वसिद्धान्ते भगवान् सर्वशक्तिमान् ।
क्षेत्रज्ञकर्मानुगुणजगन्निर्माणदीक्षितः ॥
तदसाधारणानर्थान् कांश्चित्साधारणानपि ।
सृष्ट्वाऽनुभावयत्येतानिति श्रीभाष्यनिर्णयः ॥

अविद्याशक्तिरेकत्र विष्णुशक्तिः परत्र तु ।
उभयत्रोपपत्तिस्तु समेति विबुधा विदुः ॥
ईश्वरस्य तु माहात्म्यं ज्ञायते चरमे मते ।
व्यवहारदृशाऽन्यैरप्येतदभ्युपगम्यते ॥
उभयोरप्यनुष्ठाने न विशेषोऽस्ति कश्चन ।
न लोकसंकरो नापि व्यवहारस्य संकरः ॥
अभिप्रायप्रभेदस्तु विचित्रः प्रतिपूरुषम् ।

(62) संवृतिवादः.

1 संवृतिर्नाम या तत्त्वं संवृणोति स्वभावतः ।
तिरस्करोति दोषात्मा सा संवृतिपदाभिधा ॥
द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥
इति बौद्धवचोऽनूद्य प्रवृत्तं श्लोकवार्तिकम् ।
अत्रावधेयं यन्मूलमनिर्वाच्यवचोऽपिच ॥
2 संवृतेर्नतु सत्यत्वं सत्यभेदः कुतो न्वयम् ।
सत्यं चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥
सत्यत्वं नच सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥
तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थ उपन्यासः लालावक्त्रासवादिवत् ॥

नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।
कल्पनाऽपि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥
तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥
स्वप्नादिभोगवच्चापि योपभोगस्य कल्पना ।
तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते ॥
3 इत्यस्य विवृतिः काचित् एषा सर्वार्थसिद्धितः ।
संगृह्य लिखिता ज्ञेया धीमतां तत्र विस्तरः ॥
अथ संवृतिसत्यत्वं संवृतेस्सत्यतेष्यते ।
यद्वा संवृतिसंबन्धात्सत्यतेत्यभिधीयते ॥
सत्यत्वेन त्वसत्यं वा किं संवृत्याऽवभासते ।
संवृत्यां भ्रमरूपायां तथा वा भानमुच्यते ॥
यद्वा तैमिरिके केशस्तवकभ्रान्तिरीतितः ।
संवृत्याख्ये दोषभेदे किमध्यस्तामितीर्यते ॥
संवृतेस्सत्यतापक्षः वार्तिकेन विशोधितः ।
द्वितीयादिविकल्पानां समाधिरभिधीयते ॥
अथ संवृतिसंबन्धात् स्वभावादन्यजातिमत् ।
अन्यजातीयतां यायादिति दृष्टं नहि क्वचित् ॥
अन्यथाख्यातिरेवेयं स्यात्तृतीयतुरीययोः ।
पञ्चमे संवृतिर्दोष इति नैव प्रसिद्ध्यति ॥

दूरासन्नत्वसादृश्यकाचादिषु हि दोषता ।
व्यावहारिकसत्यत्वमित्यत्राप्येवमूह्यताम् ॥

4 सत्त्वासत्त्वविकल्पोऽपि प्रसङ्गादिह कीर्त्यते ।
व्यक्तीभविष्यति प्रायः निदानं सर्वदर्शने ॥

सत्त्वं प्रमाणसंबन्धः कालसंबन्ध इत्यपि ।
अर्थक्रियाकारिता वा निर्विकारत्वमेव वा ॥

सत्ताश्रयत्वं द्रव्यत्वं महासामान्यमित्यपि ।
व्यवहारार्हता वा स्याद्यद्वा नानास्वभावता ॥

वस्तुत्वं वाऽथ भावत्वं ध्रुवोत्पादविनाशिता ।
एवमादिप्रभेदेन बुधैस्तैस्तैर्निरुच्यते ॥

असत्त्वमपिचैवेत्थं विपश्चिद्भिर्विकल्प्यते ।
असत्तुच्छं निःस्वभावमळीकं शून्यमित्यपि ॥

आरोपितमनिर्वाच्यमध्यस्तं कल्पितं तथा ।
निरुपाख्यं च निष्प्रख्यं विचारासहताऽपिवा ॥

विवर्तं संवृतं मिथ्याऽभावो व्यावृत्तमित्यपि ।
निषिद्धं चेत्येवमाद्यान् शब्दानत्र प्रयुञ्जते ॥

प्रायस्तेषामर्थभेदः कल्प्यते पारिभाषिकः ।
केचित्क्वचित्त्वैकयदृच्छया कुर्युः खण्डनमण्डने ॥

कैश्चिच्च देशकालादिनियतं चोभयं मतम् ।
अतो विधिर्निषेधश्च नास्त्येव निरुपाधिकः ॥

इत्येतेषामभिप्रायः, अतएव परे बुधाः ।
नैरात्म्यं वाऽथ सार्वात्म्यमर्थानामिति जानते ॥
पूर्वां कोटिं माध्यमिकाः पार्श्वमामार्हताश्श्रिताः ।
अन्तरा सर्वसिद्धान्ता इति तत्त्वविदो विदुः ॥

(63) प्रत्यभिज्ञावादः.

1 अथ सोऽयं घट इति ज्ञानमेकमुत द्वयम् ।
ग्रहणं स्मरणं चेदं निरन्तरसमुद्भवात् ॥
प्रत्यभिज्ञां विदुः ज्ञानद्वयमित्येव सौगताः ।
तार्किकाः पुनरन्येऽपि प्राहुस्तां ग्रहणात्मिकाम् ॥
परे सांकर्यसोढारस्तामिच्छन्त्युभयात्मिकाम् ।
दर्शनादर्शनाभ्यां च व्यवस्थोपाधिनीतितः ॥

2 सर्वथा प्रत्यभिज्ञानं प्रमाणं सविकल्पकम् ।
करणाकरणादीनां कालभेदाद्युपाधितः ॥
अविरोधान्न बीजादौ शक्यते भेदकल्पना ।
दीपादिदोष्विव सर्वत्र बाधकादेरसंभवः ॥
अन्यथा देशभेदेन करणाकरणादिभिः ।
एकं जगति नैव स्यात् इति स्यात्सर्वशून्यता ॥

3 तस्माद्विरुद्धसंसृष्टविषयप्रत्यभिज्ञया ।
स्थिरत्वं सर्ववस्तूनां सर्वेषामपि चात्मनाम् ॥

4 संवादो नाम विज्ञानं जात्यन्तरमितीतरे ।
गृहीतविषयं शब्दहेतुकं तद्विदुः परे ॥
शाब्दप्रभेद इत्यन्ये प्राहुरेवं धियामिह ।
विवादा बहवस्सूक्ष्माः विद्वद्भिरुपदर्शिताः ॥
स्मृतिः गृहीतविषया मतिः तात्कालिकी मता ।
प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ॥
अनन्तो बुद्धिभेदोऽयमलंकारादिशास्त्रतः ।
विज्ञेयो ननु बुद्ध्यैव बाह्यान्तरविकल्पना ॥

(64) स्वयंप्रकाशवादः

1 एवं सौगतसिद्धान्तः तत्तत्सिद्धान्तनिष्ठितैः ।
निरस्यते रीतिभेदैः अन्योन्यपरिपन्थिभिः ॥
प्रतिभावादिनो ये स्युः वार्ताक्षौदुम्बरायणाः ।
प्रतिभागोचरश्शब्दः तदर्थश्चेति तन्मतम् ॥
2 अत्र कश्चित्स्वतन्त्रोऽस्ति सिद्धान्तस्सोऽवधार्यताम्
ज्ञानं नाम पदार्थो यस्य नास्त्यवेति तन्मतम् ॥
ज्ञानस्योत्पादिका याऽस्ति सामग्री सर्वसम्मता ।
तयैव सर्वनिर्वाहात्किमन्तर्गडुनाऽमुना ॥
स एव भूतचैतन्यवादिनः परमाशयः ।
अन्यथा तस्य चैतन्यं तस्यापीत्यनवस्थितिः ॥

अतीन्द्रियजडज्ञानवादिनो ये कुमारिलाः ।
दुरुद्धरा वागुरेयं तेषामिति परे विदुः ॥

3 नचोपलभते कश्चिदज्ञातेऽर्थे धियं क्वचित् ।
ज्ञातेऽनुमानाज्जानीत इत्याह शबरस्स्वयम् ॥

4 इदं संवेद्म्यहमिति कर्मकर्तृकरम्बितम् ।
उपलम्भं समाश्रित्य धीराः तस्य स्वभासताम् ॥
अज्ञ्यकार्युस्सौगताद्या अपि नातोऽनवस्थितिः ।
सर्वं ज्ञानाधीनसिद्धि व्यवहाराय कल्पते ॥
ज्ञानं चापश्यतां सर्वशून्यत्वाद्बिभ्यतां सताम् ।
गतिः स्वयंप्रकाशत्वादृते नान्योपलभ्यते ॥

5 ज्ञानाज्ञानेऽपि विषयव्यवहारं विदुः परे ।
घटोऽयमिति विज्ञाने घटमात्रं हि भासते ॥
अङ्गुल्यग्रं यथाऽऽत्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥
इत्याहुरथचात्रैव केचित्स्वायम्भुवादयः ।
नतु चित्तं स्वप्रकाशं न चित्तान्तरसिद्ध्यपि ॥
सर्वं सवृत्तिकं चित्तं साक्षिवेद्यं सदा स्थितम् ।
सर्वोपपत्तिरेतस्मिन् सिद्धान्त इति मन्वते ॥
तमेव पक्षं प्रायेण तथौपनिषदा अपि ।
आश्रित्य निर्वहन्त्यत्र व्यवहारं हि साक्षिणा ॥

व्यवहारो हि जगति भवत्यालम्बने क्वचित् ।
न तत्सामान्यतो नास्ति कथंता तु परीक्ष्यते ॥
सामान्यतो निश्चिते हि विशेषः स्याद्बुभुत्सितः ।
कृतकक्षणिकानेकं ज्ञानमात्मेति केचन ॥
नित्यस्थिरैकविज्ञानमात्मानमपरे विदुः ।
विधाभेदे विवादोऽयं धर्मी तूभयसम्मतः ॥
धर्मधर्म्यैक्यवादे तु विवादोऽनवकाशभाक् ।
तदर्थमेव तादात्म्यं केचिदिच्छन्ति सूरयः ॥
प्रकाशं विषयत्वं च विभिन्नं ये विदुर्बुधाः ।
संविदः स्वप्रकाशेऽपि वेद्यतां तां न मन्वते ॥
विषयत्वं प्रकाशं च ये त्वनर्थान्तरं विदुः ।
संविदन्तरसंवेद्यामप्याहुस्संविदं तु ताम् ॥
अन्यथा गुरुशिष्यादेः सर्वलौकिकसम्मतः ।
व्यवहारो विलुप्येत प्राज्ञाज्ञाद्यविनिश्चयात् ॥
स्वसत्तयैव प्रकाशमानत्वमनुभूतिता ।
इति संवित्स्वप्रकाशवादिज्ञानत्वनिर्णयः ॥
वर्तमानदशायां स्वसत्तयैवाश्रयं प्रति ।
प्रकाशमानत्वमनुभूतित्वमिति केचन ॥
सत्तयैव स्वविषयसाधनत्वमितीतरे ।
परप्रकाशविज्ञानवादिनैयायिकादयः ॥

6 आत्मनोऽनुभवो नाम स्वरूपं निर्विशेषिणाम् ।
स्वेनैव स्वस्य विषयीकरणे विकृतिर्भवेत् ॥
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिः निराकृतम् ।
ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते ॥
या चावरणभङ्गावच्छिन्ना वृत्तिः फलं हि सा ।
तद्व्यव्याप्यताऽप्यन्यैराचार्यैर्नोपगम्यते ॥
व्यवहारोपपत्तिर्हि सर्वथा निर्विशेषिणाम् ।
अपेक्षिता ततस्सूक्ष्मचिन्ता विज्ञानचातुरी ॥

7 सविशेषविदां तत्त्वं प्रसङ्गात्किंचिदुच्यते ।
आत्मनोऽनुभवो नाम तस्य स्फुरणमुच्यते ॥
स्फुरतः स्फुरणं धर्मः सैव स्याद्भासमानता ।
व्यवहारानुगुण्यं वा वह्नेरौज्ज्वल्यवत्तु तत् ॥
स नित्य आत्मनो धर्मः न तेन स्याद्विकारिता ।
तथैव चेश्वरात्माऽपि स्वानुभाव्य इतीष्यते ॥
धर्मभूतं ज्ञानमपि सर्वेषामात्मनां सदा ।
विषयव्यक्तिवेलायां स्वयमेवावभासते ॥
नित्यमुक्तेश्वराणां तु सर्वदैव विकासि तत् ।
अनुग्रहेच्छासंकल्पप्रमुखाकारभागपि ॥
न तावता स्वभावस्य विकारश्शङ्क्यते क्वचित् ।
स्वभावोपाधिभेदेन गुणदोषव्यवस्थितिः ॥

अनित्यमपि विज्ञानमीश्वरेऽस्तीति केचन ।
तद्विकारोऽनुग्रहेच्छासंकल्पास्त्विति चाभ्यधुः ॥
औपाधिकागन्तुकेनाकारेणैव विकारिता ।
स्वाभाविको य आकारः धर्मिणो भूषणं तु तत् ॥
तथैव द्वैतसिद्धान्ते धर्मभूतधियः स्थले ।
स्वरूपमेवाभिषिच्य सर्वमित्थं निरूह्यते ॥

(65) स्मृतिः.

1 अथ स्मृतिविचारोऽसौ क्रियते विदुषां मुदे ।
स्मृतिरेवहि संस्कारो वासनेत्यपि कीर्त्यते ॥
स्मृतिशक्तौ स्थितस्सर्वः प्रपञ्च इति सुस्थितम् ।
वासनामात्रनिघ्नं चेज्जगत्स्याच्छून्यलक्षणम् ॥
इति हार्दं सौगतानां स्मृत्यप्रामाण्यवादिनाम् ।
2 लोके स्मृत्यैव हि कृताकृतयोः पर्यवेक्षणम् ॥
स्मृत्यैव कवयन्त्यत्र काव्यानि कवयः पुनः ।
स्मृत्यैव किल शब्दादिप्रमाणानां प्रवृत्तयः ॥
स्मृत्यैव हि परब्रह्मसाक्षात्कारादिरिष्यते ।
व्यवहारस्य सर्वस्य स्मृत्यप्रामाण्यवादिनः ॥
अव्यवस्थाप्रसङ्गेन भवन्त्येवाव्यवस्थिताः ।
स्मृतिशक्तिविहीनांस्तु चोन्मत्तानिति जानते ॥

स्मृतिमात्राप्रमाणत्वं न युक्तमिति वीक्ष्यताम् ।
अबाधितस्मृतेर्लोके प्रमाणत्वपरिग्रहात् ॥
बुद्धागमादित्यागे च न हेतुः स्मृतिमूलता ।
विशुद्धस्मृतिमूलेऽपि मानवादौ प्रसङ्गतः ॥
भ्रान्तिं प्रमातो भिन्दन्तः नचाहुः स्मृतिमानताम् ।
स्मृतित्वमेव हि व्यक्तमप्रामाण्यं तु तन्मते ॥
पीतशङ्खभ्रमादौ च न ह्येतदुपपद्यते ।
चक्षुषैव हि शङ्खादेः पीतिमादेश्च तत्र धीः ॥
ततश्च प्रतिपत्तौ वा व्यवहारोदयेऽपिवा ।
तथाभावान्यथात्वाभ्यां प्रमाभ्रान्तिव्यवस्थितिः ॥
तस्मात् स्मृतिर्नाप्रमाणं बाधानर्हार्थदर्शनात् ।
प्रतिभास्मृतिशक्त्यादिशालिनस्स्युः परीक्षकाः ॥
अनुमाने हि गुरवो गृहीतग्राहितां विदुः ।
धारावाहिनि चाध्यक्षे तार्किकास्तां विजानते ॥
सर्वज्ञवादिनां तादृक् द्वितीयं योगजं मतम् ।
अनित्यमीश्वरज्ञानं तादृशं हीशवादिनाम् ॥
अप्रामाण्यं वदन्तोऽपि स्मृतेर्वैशेषिकादयः ।
स्वके शास्त्रे हि याथात्म्याद्विद्याकोटौ पठन्ति ताम् ॥
तदेकदेशिभिरपि प्रामाण्यं स्वीकृतं ततः ।
ऐन्द्रपाणिनिदृष्टानां प्रामाण्यं सर्वसम्मतम् ॥

वागीश्वरादिभिः प्राच्यैरुक्तं मानमनोहरे ।
प्रामाण्यमिति हि न्यायपरिशुद्धावुदीरितम् ॥
3 इति स्मृतीनां प्रामाण्यं विदां वेदविदां मतम् ।
अप्रामाण्यं वदन्तो ये तेषां भावोऽयमुच्यते ॥
स्मृतिर्न बाह्यविषया नष्टेऽर्थे स्मृतिदर्शनात् ।
तस्मान्न प्रत्यभिज्ञाऽपि प्रामाण्यं लब्धुमर्हति ॥
ततः क्षणिकसिद्धान्तः निर्निरोध इतीतरे ।
परे विदुः प्रत्यभिज्ञात्यागिनां लोकबाह्यताम् ॥
शाक्यनिर्ग्रन्थसंसारमोचकानां स्मृतेः पुनः ।
अप्रामाण्यप्रतिष्ठार्थे स्मृतिमन्ये समत्यजन् ॥
पूर्वमीमांसका एते, तद्वत्मैवानुवर्त्यते ।
नैयायिकादिभिरपि गतानुगतिकं जगत् ॥
4 अगृहीतार्थगन्तृत्वं प्रोक्तं प्रामाण्यलक्षणे ।
स्मृतिव्यावृत्तये पूर्वैः दूषितं तत्तु तार्किकैः ॥
न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम् ।
अपित्वनर्थजन्यत्वमित्याहुः किल तार्किकाः ॥
शब्दस्यानुपलब्धेऽर्थे प्रामाण्यं प्राह जैमिनिः ।
सर्वप्रमाणविषयं तदित्याहुः कुमारिलाः ॥
संप्लवन्ते प्रमाणानि प्रमेयमिह भूरिशः ।
व्यवतिष्ठन्तेऽपि तथा क्वचित्त्विति बुधा विदुः ॥

तस्मात्स्मृतिर्मूलशुद्ध्या प्रमाणमिति निश्चितम् ।
मूलान्तर्भावदृष्ट्या तु पृथक्प्रामाण्यनिह्नवः ॥

(66) प्रतिभावादः

1 जन्मौषधितपोयोगजनितास्सिद्धयस्तथा ।
प्रातिभाद्वा सर्वमिति सिद्धीराह पतञ्जलिः ॥
प्रतिभैव प्रसंख्यानं विवेकख्यातिरुच्यते ।
तदर्थं संयमस्यानुष्ठाने तत्सिद्धिसूचकम् ॥
उदेति प्रातिभं सूर्योदयात्प्रागरुणो यथा ।
तेन तारकसंज्ञेन योगी सर्वं हि पश्यति ॥
योगोत्थशुक्लधर्मानुगृहीताच्चित्तमात्रतः ।
दिव्यान् भोगान्विजानाति योगीति मुनयो विदुः॥
2 एतच्छ्रुत्वैव कतिचिदायासालसबुद्धयः ।
प्रमाणान्तरमिच्छन्ति प्रतिभां तन्निशम्यताम् ॥
ननुच प्रतिभा काचित् यथार्था मानमिष्यताम् ।
बाह्यार्थनैरपेक्ष्येण बाह्यज्ञानक्षमाऽस्तु सा ॥
विशिष्टकालपुरुषाद्यपेक्षोत्कर्षसंभवा ।
इति चेदत्र कथितमभियुक्तैरिदं तु तत् ॥
3 सत्यं कालादिभेदस्तु दुर्विवेचोऽस्मदादिभिः ।
सन्नप्यसौ व्यवहृतौ नोपयोगीत्युपेक्ष्यते ॥

प्रतिभायाः फलं दृष्टं यदा प्रामाण्यनिश्चयः ।
तदाऽन्यतः कृतार्थत्वात् प्रेक्ष्यते न परीक्षकैः ॥
पुण्येषु पुरुषेष्वेषा भूयिष्ठं सत्यदर्शिनी ।
तस्मात्पतञ्जलिः प्राह प्रतिभा चेति तां प्रमाम् ॥
साऽपि प्रागुक्तयोगीन्द्रप्रत्यक्षेऽन्तर्भवत्यसौ ।
इति तस्मान्न प्रमाणमतिरिक्तं तदिष्यते ॥

## (67) सर्वज्ञवाद

1 अथ बुद्धागमादीनां धर्मप्रामाण्यशङ्कया ।
सर्वसर्वज्ञविद्वेषि मीमांसकमतं त्विदम् ॥
शाक्यार्हतार्षभेदेन सर्वज्ञास्त्रिविधाश्श्रुताः ।
स्वसार्वज्ञ्याय ते सर्वे निरस्ताः श्लोकवार्तिके ॥
सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।
नच पुंवचनं सर्वं सत्यत्वेनावगम्यते ॥
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ।
यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकल्पने ॥
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ।
उपलम्भानुसारेण व्यवस्थासिद्धिरीदृशी ॥
यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥

यत्राप्यतिशयो दृष्टः स स्वार्थानातिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रौत्रवृत्तिता ॥
येऽपिचातिशया दृष्टाः प्रज्ञामेधाबलैर्नृणाम् ।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥
एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छकया नचासीदिति कल्पना ॥
नचागमेन सर्वज्ञः, तदीयेऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥
अनादेरागमस्यार्थो नच सर्वज्ञ आदिमान् ।
कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते ॥
सर्वज्ञसदृशं कंचिद्यदि पश्येम संप्रति ।
उपमानेन सर्वज्ञं जानीमो हि ततः परम् ॥
नचापि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते ।
विगानाच्छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् ॥
सर्वज्ञोऽसाविति ह्येव तत्काले तु बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥
कल्पनीयाश्च सर्वज्ञाः भवेयुर्बहवस्तदा ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यते ॥

सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥
रागादिरहिते बुद्धे निर्व्यापारे व्यवस्थिते ।
देशनाऽन्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥
सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥
एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।
कुड्यादिनिस्सृतत्वाच्च नाश्वासो देशनासु नः ॥
किंनु बुद्धप्रणीतास्स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥
एवमेवार्हतैः ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥
नर्ते तदागमात्सिद्ध्येत् नच तेनागमो विना ।
दृष्टान्तोऽपि न तस्यान्यः नृषु कश्चित्प्रवर्तते ॥
किंच नादृष्टपूर्वेऽर्थे क्वचिद्भवति भावना ।
आगमात्तु परिच्छिन्ने धर्मे भावनयाऽपि किम् ॥
अतश्च संप्रदायेऽस्मिन् नैकः पुरुष इष्यते ।
बहवः परतन्त्रास्स्युः सर्वेऽप्यद्यत्ववन्नराः ॥
यथाच लङ्घनाभ्यासोऽवधिं नात्येति कुत्रचित् ।
एवंच भावनाभ्यासः सावधिस्स्यात्स्वभावतः ॥

2 अत्र सर्वज्ञसिद्धान्तवादिनैयायिकादिभिः ।
प्रत्युक्तं विस्तरेणात्र सारांशस्त्वयमुच्यते ॥
परश्शतपरिक्षोदात्परस्तादपि वादिभिः ।
उपलम्भबले स्थेयं तदादावेव गृह्यताम् ॥
वैशेषिकादिभिस्त्वार्षं सिद्धदर्शनमित्यपि ।
अलौकिकं च विज्ञानं किंचिदङ्गीकृतं यथा ॥
विद्याऽविद्याविभेदेन ज्ञानं द्विविधमिष्यते ।
प्रात्यक्षिकी लैङ्गिकी च स्मृतिश्चाप्यार्षलक्षणा ॥
एवं चतुर्विधा विद्या तथाऽविद्या चतुर्विधा ।
विपर्ययस्संशयश्च यश्चाप्यालोचनात्मकः ॥
स्यादनध्यवसायस्सः चतुर्थस्स्वप्नलक्षणः ।
एवं ये ऋषयस्सिद्धाः ते वै सर्वज्ञलक्षणाः ॥
मनःकरणकं ज्ञानं भावनाभ्याससंभवम् ।
भवति ध्यायतां धर्मे कान्तादाविव कामिनाम् ॥
यथाऽनुवाकग्रहणे संस्थाऽभ्यसनकल्पितः ।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम् ॥
तथैव भावनाभ्यासात् योगिनामपि मानसम् ।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षमं भवेत् ॥
अस्मदादेश्च रागादिमलावरणधूसरम् ।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम् ॥

प्रत्यहं भावनाभ्याससक्षपिताशेषकल्मषम् ।
योगिनां तु मनश्शुद्धं कमिवार्थं न पश्यति ॥
तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम् ।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम् ॥
अपिचानागतज्ञानं अस्मदादेरपि क्वचित् ।
प्रमाणं प्रातिभं श्वो मे भ्राताऽऽगन्तेति दृश्यते ॥
नानर्थजं न संदिग्धं न बाधविधुरीकृतम् ।
न दुष्टकारणं चेति प्रमाणमिदमिष्यताम् ॥
क्वचिद्बाधकयोगश्चेत् अस्तु तस्याप्रमाणता ।
यत्रापरेद्युरभ्येति भ्राता तत्र किमुच्यताम् ॥
काकतालीयमिति चेत् न प्रमाणं प्रदर्शितम् ।
नवैतत्काकतालीयमिति चाशाङ्कितुं क्षमम् ॥
स्वप्नज्ञाने हि संवादोऽदृष्टेन क्वचिदिष्यते ।
एवं प्रकृष्टादृष्टेन किमसाध्यं भविष्यति ॥
न त्वं वेत्सि मदध्यक्षं त्वदध्यक्षं न वेद्म्यहम् ।
अन्याध्यक्षं पुनश्चावां नैव जानीवहे उभौ ॥
योगीन्द्रियागोचरत्वं धर्मे वेत्ति कथं भवान् ।
उभयस्यापरोक्षत्वान्निषेद्धुं न हि शक्यते ॥
त्वया तु यदि सर्वेषां प्रत्यक्षं ज्ञातमीदृशम् ।
तर्हि त्वमेव योगीति योगिनो द्वेक्षि किं वृथा ॥

य एव स्यादसर्वज्ञस्स सर्वज्ञं न बुद्ध्यते ।
इति तद्बोधबोधार्थी तन्निषेधेऽपि न क्षमः ॥
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यते ।
इति ब्रुवाणास्सार्वज्ञ्यं लभन्तां तन्निषेधतः ॥
3 इदं च पद्ययुगळं ज्ञेयं सर्वार्थसिद्धिगम् ।
फलाफलविचारोऽथ क्रियते संग्रहादिह ॥
जायमाने भावनयाऽप्यनया धर्मदर्शने ।
चोदनैवेत्येवकारः शिथिलस्त्विति तार्किकाः ॥
मीमांसकास्तु तां दृष्टिं स्मृतिरित्येव जानते ।
पातञ्जलाः पुनर्योगदृष्टिमन्यां प्रचक्षते ॥
साक्षात्कुर्वन्ति मन्वाद्याः न हि धर्मं स्वरूपतः ।
किंतु वेदैकवेद्यत्वाकारेणेति विनिर्णयात् ॥
न चोदनालक्षणत्वशास्त्रयोनित्वयोरपि ।
विरोधो योगिदृष्ट्येति वेदान्ताचार्यनिर्णयः ॥
किमर्थं तर्हि वेदानां वेदान्तानां च यत्नतः ।
अप्राप्तविषयत्वं यद्भवदीयैस्समर्थ्यते ॥
उच्यतेऽत्रातथाप्राप्तौ साक्षादेवाप्रमाणता ।
तथाप्राप्तौ पुनः प्रेक्षावद्भिरालस्यशालिभिः ॥
मानान्तरमपेक्ष्येत वेदस्य त्याज्यताऽऽपतेत् ।
फलतोऽप्रामाण्यमेतत् इति सिद्धान्तसंग्रहः ॥

4 यदि प्रामाणिको योगी पुराणं च श्रुतिः स्मृतिः ।
तत्र मानं, नानुमानं वर्ततेऽतिप्रसङ्गतः ॥
धर्मादिविषयत्वं तु मनसो यद्विशिष्यते ।
चक्षुरादेस्तथाभावः नेष्यते केन हेतुना ॥
यथौपनिषदस्त्वीशः नानुमानेन सिद्ध्यति ।
तथा योगी च शास्त्रेण केवलेन प्रसिद्ध्यतु ॥
कैश्चित्तु चक्षुषाऽनेन ब्रह्मदर्शनमिष्यते ।
योगजेनाचिन्त्यशक्तिधर्मेण सहकारिणा ॥
दिव्येन चक्षुषा कैश्चिद्ब्रह्मदर्शनमिष्यते ।
शब्दादप्यपरोक्षस्य संभवः कैश्चिदुच्यते ॥
अतीतेऽनागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥
वैशद्यातिशयात्कैश्चित् स्मृतेर्दर्शनरूपता ।
भावनाया महिम्नेष्टा समानाकारता तु सा ॥
जैमिनीयाश्शाबराश्च भाट्टाः प्राभाकरा अपि ।
सर्वज्ञप्रतिषेद्धारः, सौगता आर्हताः तथा ॥
कापिलाद्या दार्शनिकाः सादिसर्वज्ञवादिनः ।
यौगास्तार्किकमुख्याश्चानादिसर्वज्ञवादिनः ॥
स्यातामागमसर्वज्ञावनादी च प्रवाहतः ।
बीजाङ्कुरवदित्युक्तं सादिसर्वज्ञवादिभिः ॥

ज्ञानमेव हि सर्वेषां सिद्धान्तानां समाश्रयः ।
तत्रापिच विवादश्चेन्नियन्ता जन्तुरत्र कः ॥
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥

(68) विज्ञानवादः.

1 अथ विज्ञानवादस्य सारोपन्यासपूर्वकम् ।
संगृह्यते प्रतिक्षेपसारो नयविदां मतः ॥
योगस्य लक्षणं त्वेतत् शमधा च विपश्यना ।
समाधिश्शमधेत्युक्तः सम्यज्ज्ञानं विपश्यना ॥
ताभ्यां द्वाभ्यां बलीवर्दसदृशाभ्यां य ऊह्यते ।
स मार्गो योग इत्युक्तः तेनाचरति यः पुनः ॥
स योगाचार इत्युक्त इति भास्करभाषितम् ।
शमधादिपदं प्रायः पालीभाषेति गम्यते ॥
अविभागोऽपि बित्त्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥
इति योगाचारमतं प्रायः सर्वत्र विश्रुतम् ।
वैशेषिकमतं चापि यौगमित्येव कीर्त्यते ॥
योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रमिति प्राशस्तभाषितम् ॥

तथाच योगाचाराख्याः केचिद्वैशेषिका अपि ।
प्रथिता इति गम्यन्ते युक्तिमानादिसाम्यतः ॥

2 तद्योगाचारसिद्धान्तयुक्तयः क्रमशोऽधुना ।
निरूप्यन्तेऽत्र संगृह्य विप्रकीर्णाः क्वचित्क्वचित् ॥

नीलपीतादिवस्तूनां ज्ञानाकारत्वकल्पना ।
लघ्व्यर्थाकारपक्षे तु न स्वतो भासते जडः ॥

तद्ग्राहकाकारता च कल्पनीयेति गौरवम् ।
बाह्यान्तरकृतो भेदः परमार्थो न हीष्यते ॥

ग्राहकाद्विच्छिन्नता हि मता ग्राह्यस्य बाह्यता ।
न शरीरापेक्षयाऽतः विच्छेदोऽसिद्ध एव सः ॥

बहिर्वदवभासोऽपि भेदवासनया कृतः ।
परिच्छेदान्तराद्योऽयं भावो बहिरिव स्थितः ॥

ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः ।
सहोपलम्भनियमादभेदो नीलतद्धियोः ॥

ज्ञानमेवैवमाकारमात्मना प्रथते यतः ।
नाप्रत्यक्षस्य तस्यास्ति प्रमाणान्तरतो गतिः ॥

संवेद्यत्वाच्च नीलादेर्ज्ञानाकारत्वनिश्चयः ।
अर्थान्तरस्य च ग्राह्यलक्षणं न हि युज्यते ॥

ज्ञानं प्रकाशकं लोके ह्यप्रकारस्य वस्तुनः ।
तस्मात् ज्ञानं ग्रहीतव्यं प्रागर्थादिति निश्चितम् ॥

प्रकाशकोऽप्यविदितो दीपादिर्न प्रकाशकः ।
अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति ॥
अविशेषोऽन्यथा स्वीयपरकीयोपलम्भयोः ।
निराकारं च विज्ञानं ग्रहीतुं नैव शक्यते ॥
प्रतिकर्मव्यवस्थाऽपि साकारत्वे प्रकल्पते ।
आकारसहितैवैषा धीः कारकसमुद्भवा ॥
नैवान्यथा स्याद्विषयनियमस्यावधारणा ।
नार्थैरेव विशेषस्तु निराकारधियां भवेत् ॥
तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः ।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते ॥
अर्थेन रज्यमानं हि निराकारं निसर्गतः ।
ज्ञानं न खलु पश्यामः लाक्षया स्फाटिकं यथा ॥
इत्थं सत्यपि बाह्येऽर्थे ज्ञानस्याकारकल्पना ।
भवेदेवेति तत्रैव संतोषेण स्थितिः वरम् ॥
अर्थाकारो गृहीतश्चेत् ज्ञानेन स्वगतः पुनः ।
ज्ञानान्तरेण ग्राह्यस्स्यात् तदाऽऽकारद्वयग्रहः ॥
एवमेवाभ्युपगमे भवेदेवानवस्थितिः ।
तद्ग्रहस्यानपेक्षायामाद्यस्यैवाग्रहो वरम् ॥
3 अन्योन्यसंसर्गधर्मो नाकार इति साम्प्रतम् ।
अनर्थजस्मृतिस्वप्नबुद्धिष्वाकारदर्शनात् ॥

ज्ञानं स्वच्छं हि चिन्मात्ररूपं चाप्यविलक्षणम् ।
तस्य नीलादिभेदस्तु वासनैकनिबन्धनः ॥
अत एव तुरीये तद्वासनोच्छेदसंभवे ।
सच्चिन्मात्रैकरूपेण विज्ञानमवभासते ॥

4 वासना नाम ताद्रूप्यं बीजपूरसुमादिवत् ।
पूर्वमात्मसरूपेण चोत्तरं जनयेत्सदा ॥
उत्तरं वास्यत इति पूर्वं वासयतीत्यपि ।
व्यवहारः परं सर्वं सर्वात्मकमिति स्थितम् ॥
अपि सर्वं च विज्ञानं सर्वाकारं तथाऽपि च ।
कदाचित्कुत्रचित्काचित् वासनाऽर्थक्रियां क्रियात्॥
यथा परेषां संस्कारः कश्चित्कांचित् स्मृतिं क्रियात्
यथा च शब्दः सर्वार्थः बोधकोऽर्थस्य कस्य चित् ॥
न संवित्तेस्सत्तयैव युक्ता विषयवेदना ।
तस्यास्सर्वत्राविशेषादविशेषप्रसङ्गतः ॥
ग्राह्यलक्षणतादात्म्यात्तत्सरूपयितुं क्षमम् ।
ततश्च ज्ञानवैचित्र्यं समनन्तरसात्कृतम् ॥

5 ग्राह्यलक्षणयोगाच्च ग्राहकान्न विभिद्यते ।
विधान्तरासंभवेन तादात्म्यं ग्राह्यलक्षणम् ॥
ग्राह्यत्वं यदि हेतुत्वं ग्राह्यं स्याच्चक्षुराद्यपि ।
आकारार्पणयोग्यत्वं नीलादौ न हि निश्चितम् ॥

नार्थाकारस्य चारोपः नैव च प्रतिबिम्बनम् ।
नचापि तस्य निष्पत्तिः नापि संसर्गरूपता ॥
नानन्तरप्रत्ययाख्यवासनायोग एववा ।
न मध्यवस्त्वाकारश्च नैवं वादान्तराण्यपि ॥
ग्राह्यत्वं नापि सारूप्यं नापि सान्निध्यलक्षणम् ।
एकदेशेन सारूप्ये सर्वस्स्यात्सर्ववेदकः ॥
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ।
तादात्म्यमेव ग्राह्यत्वं परिशेषाद्व्यवस्थितम् ॥
6 नीलं संवेदनादेव स्वात्मनो न विभिद्यते ।
संवेद्यते न ह्यनात्मा नीलवित्तौ च पीतवत् ॥
यद्वेद्यते यया बुद्ध्या तत्तया न विभिद्यते ।
यथाऽऽत्मा वेद्यते बुद्ध्या तया नीलादयस्तथा ॥
संयोगात्समवायाद्वाऽप्येकार्थसमवायतः ।
कार्यकारणभावाद्वा व्याप्तिरव्याप्तिदूषिता ॥
परिशेषात्तु तादात्म्यमास्थेयं सर्ववादिभिः ।
तस्माद्विज्ञानमेवार्थः कामदोग्ध्री हि वासना ॥

(69) विज्ञानवादनिरासः.

1 अत्रोच्यते न्यायविदां प्रत्युक्तीनां च संग्रहः ।
न ह्यर्थः कल्प्यते किंतु सन्नेव प्रतिभासते ॥

लघ्वी युक्तिः कल्पनायां न हि क्लृप्ते प्रसर्पति ।
आकारोऽनतिरिक्तश्चेत्समूहालम्बने धियः ॥
ऐक्यं स्यान्नीलपीतादेरतिरिक्तो न संमतः ।
अपोहरूपं नैल्याद्यमितिचेन्नीलपीतते ॥
समाविशेतां नैकत्र विरोधो वा विलीयते ।
ग्राहकाद्विच्छिन्न एव ग्राह्याकारोऽवभासते ॥
इदं नीलमिति ह्येव न त्वहं नीलमित्यपि ।
तदैक्येनावभासोऽस्ति नापि धीः स्वप्रकाशिनी ॥
यदि ज्ञानं स्वप्रकाशं अहं नीलमिति प्रजाः ।
सर्वा अप्यनुसंदध्युः नच मुह्यति कश्चन ॥
उपेयनिह्नवश्शक्यः नोपायेनेह कुत्रचित् ।
रूपप्रकाशकं चक्षुः चक्षुरेव प्रकाशताम् ॥
इत्युक्त्वा न क्वचिद्रूपमपह्नोतुं हि साम्प्रतम् ।
मूर्तो द्रवश्च कठिनः महान् बाह्योऽवगम्यते ॥
स्वच्छं तद्विपरीतं च ज्ञानं भासकमिष्यते ।
अतस्तदैक्यवादोऽसौ नाविवादो विदां मतः ॥
2 उपलम्भोऽर्थदृष्टिः स्यात् न तु तद्दृष्टिरिष्यते ।
अगृहीतं ज्ञानमेव भवेदर्थप्रकाशकम् ॥
किंच प्रदीपवद्धूमवद्वा स्याद्यदि धूमवत् ।
भवेदर्थानुमेयत्वं तदिदं त्वदसंमतम् ॥

आकारद्वयसंवित्तिविरहान्न च दीपवत् ।
घटं दीपं च पश्यामीत्यस्ति द्वितयवेदनम् ॥
न तु ज्ञानेन विज्ञेयं जानामीति द्वयग्रहः ।
उट्टङ्कितोऽसौ दीपादिदृष्टान्तश्चक्षुरादिना ॥
त्रयः प्रकाशकाः दीपधीशब्दाः स्वप्रकाशकाः ।
इत्ययुक्तं तत्र शब्दः समयग्रहपूर्वकम् ॥
अर्थं प्रकाशयत्यात्मग्रहे श्रोत्रमपेक्षते ।
दीपोऽपि चक्षुषा ग्राह्यः ग्राहयत्यर्थमञ्जसा ॥
इयान् विशेषः कुम्भादौ चक्षुरालोकमिच्छति ।
आलोकग्रहणे तेन निरपेक्षमिति स्थितम् ॥
एतावतैव दीपस्य न भवेत्स्वप्रकाशता ।
स्यादन्यथा घटस्यापि बैडालाक्ष्याद्यपेक्षया ॥
तस्मात् ज्ञानं नाम वस्तु परस्यैव प्रकाशकम् ।
दृश्यते न स्वप्रकाशमिति न्यायविदां मतम् ॥
3 या चोपजनिता यस्मात्कर्मकारकतो मतिः ।
तादृग्विषयनैयत्यवती सा व्यवतिष्ठते ॥
अयं च नियमो वस्तुस्वभावैकनिबन्धनः ।
समः पर्यनुयोगोऽयं ज्ञानाकारमतेऽपि ते ॥
अन्वयव्यतिरेकाभ्यामर्थः स्याज्जनको धियाम् ।
अपि प्रवृत्तिर्व्याख्याता ततो नियतगोचरा ॥

नीलपीतादिविषयाः सर्वसाधारणा मताः ।
तेषां विज्ञानरूपत्वेऽसाधारण्यं प्रसज्यते ॥
नर्तकीभ्रूलताक्षेपः न ह्येकः पारमार्थिकः ।
परमाणुसमूहत्वादेकत्वं तस्य कल्पितम् ॥
साधारण्यस्योपपत्तिरित्थं या चोपवर्णिता ।
न्यायवार्तिकतात्पर्यटीकायां सा प्रतीरिता ॥

4 अभेदपक्षे सुदृढसहार्थानुपपत्तितः ।
सहोपलम्भनियमोऽसिद्धः हेतुस्त्वदीरितः ॥
सहधीरेकसामग्रीवेद्यत्वेनेष्यते क्वचित् ।
तावन्मात्रेण चैकत्वे व्यवहारो विरुध्यते ॥
नीलग्रहणवेलायां ग्राहको नैव गम्यते ।
ग्राह्यमात्रावभासोऽयमिदं नीलमिति ग्रहः ॥
न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति हि ।
ग्राह्याकारानुपश्लिष्टः ग्राहकोऽप्यवमृश्यते ॥
ग्राह्यग्रहणतादात्म्यं शशशृङ्गाद्यसद्गृहे ।
अस्तिचेद्व्याहतिः नो चेत् व्यभिचारस्सुदुस्तरः ॥
किंच सर्वज्ञसंवित्तौ सर्वाकारानुबन्धतः ।
सर्वस्वभावता वा स्यान्निस्स्वभावत्वमेव वा ॥
इत्थं विभक्तज्ञानार्थाकारसंवेदनात्कथम् ।
एकोपलम्भनियमादभेदोक्तिर्न साहसम् ॥

5 ननु चैकत्र नक्षत्रं तारका तिष्य इत्यपि ।
विरुद्धलिङ्गसंसर्गः कथं तस्मादुपप्लवः ॥
परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ।
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥
एकस्यां लिङ्गवचने दाराः इति कथं स्मृते ।
एकता स्त्रीलिङ्गता च कथं षण्णगरीत्यपि ॥
कथंवा ह्रस्वदीर्घादिव्यवहारो मिथो भवेत् ।
तस्माद्विज्ञानभेदेन वासनाभेदहेतुना ॥
विरोधस्सुपरीहार्यः न स्वतन्त्रार्थकल्पना ।
अत्रोच्यते शब्दशास्त्रान्नार्थतत्त्वस्य निह्नवः ॥
लिङ्गसंख्याविपर्यासः शब्दसाधुत्वमूलकः ।
नार्थं भिनत्ति साधुत्वं समयैकनिबन्धनम् ॥
नार्थासंस्पर्शिता चास्य तावता व्यवतिष्ठते ।
यथा संकेतितो लोके तथा शक्नोति भाषितुम् ॥
अपिवा वस्तुताद्रूप्यसदसत्त्वानपेक्षया ।
शब्दप्रयोगसाधुत्वमन्वाख्यायेत केवलम् ॥
संस्त्यानप्रसवस्थानैः यथा पातञ्जले मते ।
लिङ्गत्रयस्य सद्भावः स्यात्सत्त्वादिगुणात्मनः ॥
6 परिव्राट्प्रभृतीनां तु कुणपादिप्रतीतयः ।
अर्थस्यानेकशक्तित्वान्नावहन्त्यर्थशून्यताम् ॥

किं न भक्षयितुं शक्या नारी कौलेयकेन सा ।
किंवा न शमयत्येषा कामिनो मदनज्वरम् ॥
कुणपात्मकेन रूपेण योगिनः सा विशिष्यते ।
धीत्रयं तु न सर्वेषामभावात्सहकारिणः ॥
या प्रतिप्राणि नियता विविधा सहकारिणी ।
वासना तदपेक्षः स्यात् आत्मलाभो धियां पुनः॥
स्वप्रत्ययानुकारोऽपि बह्वाकारेषु वस्तुषु ।
निर्धारणे भवेद्धेतुः नापूर्वाकारकल्पने ॥
तथैव तदुपेतव्यं यद्यथैवोपलभ्यते ।
न चार्थरूपात् भेदेन धियामस्ति निरूपणम् ॥
तस्माद्देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन् उद्भवाभिभवात्मकाः ॥
हेतुश्चेद्वासनाभेदः विविधप्रतिभोद्भवे ।
तेनैव सर्वनिर्वाहे किमर्थः परिकल्प्यते ॥
न ह्यर्थः कल्प्यते किं तु क्लृप्त एवावभासते ।
बहुरूपस्य चार्थस्य त्वेकरूपत्वभासने ॥
कल्प्यते कारणं किंचिन्नियतं वासनादिकम् ।
भवन्मते वासनायाः ज्ञानरूपत्वमिष्यते ॥
न हि स्वच्छे च विज्ञाने किंचित्कालुष्यकारणम् ।
अतिरेके तु पर्यायात्सोर्थ एव विनिश्चितः ॥

पदार्थसमसंख्याकाः स्वीकार्या एव वासनाः ।
नहि गोवासनाभेदादुदेतुं हस्तिधीरलम् ॥
निरन्वयविनाशाच्च न तदंशोऽनुवर्तते ।
यतः कथंचिद्वास्येत पूर्वेण ज्ञानमुत्तरम् ॥
तस्मात्प्रतीतिशरणा पदार्थानां व्यवस्थितिः ।
प्रतीतिनिह्नवे सर्वनिह्नवात्स्वार्थनिह्नवः ॥
7 विषयाणां मिथो भेदो यदि स्याद्बुद्धिभेदतः ।
बुद्धिभेदोऽपि विषयभेदादिति कथं भवेत् ॥
बुद्धयो विषयाश्चैव स्वतएव परस्परम् ।
भिन्नाः किन्त्वर्थभेदोऽयं बुद्धिभिः ज्ञायते स्वयम् ॥
अतः प्रत्यक्षबुद्धेस्सः कारणं विषयात्मना ।
इति स्वीकुर्वते प्राज्ञाः तस्मान्नान्योन्यसंश्रयः ॥
अर्थस्य बुद्धिहेतुत्वमन्वयव्यतिरेकतः ।
सिद्ध्यतीत्यत्र विज्ञेया प्रसिद्धोदाहृतिः पुनः ॥
यदाहि देवदत्तार्थी कश्चिद्गच्छाति तद्गृहम् ।
तत्रासन्निहितं चैनं गत्वाऽपि स न पश्यति ॥
क्षणान्तरे स आयान्तं देवदत्तं निरीक्षते ।
तत्र तत्सदसत्त्वेन तथात्वमवगम्यते ॥
8 क्षणभेदश्च सन्तानभेदो ज्ञानान्तरेण चेत् ।
गृहीतश्चागृहीतश्चानिष्टो विज्ञानवादिनः ॥

ज्ञानान्तरेण ज्ञानेषु गृह्यमाणेष्वसंभवि ।
तादात्म्यं तत्र यः पन्थाः सर्वत्रापि स एव नः ॥
यदि त्वनागतातीतज्ञानग्राहिषु चैकता ।
अनागतमतीतं वा स्वयं स्यात्किं ग्रहीष्यति ॥
तर्ह्येकक्षणशेषो वा नित्यैका संविदेव वा ।
स्वीक्रियेत स्वसिद्धान्तोऽप्यर्थायोगान्न सिद्ध्यति ॥
अथ बोधेन तादात्म्ये नृशृङ्गाद्यपि सद्भवेत् ।
किंच बोध्येन तादात्म्ये कुशली मध्यमागमः ॥
मिथोविरुद्धैः युगपत् ज्ञातैः बुद्धेस्तदात्मता ।
कथं स्यात् बोध्यतादात्म्यानुपपत्तिपराहता ॥
अथ बोध्यस्य मिथ्यात्वात्तादात्म्यमुपचर्यते ।
तदा सहोपलम्भादिहेतवः नहि साधकाः ॥
वेदान्ताद्वैतसिद्धान्तेऽप्यभेदो नहि साध्यते ।
भेदो ऽथासिद्ध्यत इति भाष्यभामत्युदीरितम् ॥
भेदमात्रापह्नवस्तु त्रय्यन्ताद्वैतवादिनाम् ।
भिद्यमानापह्नवस्तु स्याद्बाह्याद्वैतवादिनाम् ॥
किंचासद्विषया सर्वा बुद्धिर्यद्युपगम्यते ।
ज्ञानमेकं सत्यमिति बुद्धबुद्धिरपीदृशी ॥
तदप्यस्त्वितिचेत्सर्वा धीर्मृषेत्यापि धीर्मृषा ।
तस्मान्निषेधासिद्धान्तः स्वयमेव विहन्यते ॥

9 चिन्तनीयमिदं चात्र परीक्षकविशोधितम् ।
विज्ञानवादसर्वस्वं केवलं सूक्ष्मया दृशा ॥
ज्ञानाकारात्मके लोके बाह्याकारविकल्पना ।
अपरस्सोऽपि विज्ञानाकार एवेति निर्णयः ॥
पञ्चभूतात्मके लोके यद्यद्वस्तूपजायते ।
तावद्भूतात्मकं सर्वं नच किंचिदभौतिकम् ॥
सौवर्णमेरुसंभूतं नादुर्वर्णं कथं भवेत् ।
ज्ञानात्मके प्रपञ्चेऽस्मिन् दुर्लङ्घा ज्ञानवागुरा ॥
इति विज्ञानवादस्य मूलं विज्ञानवासना ।
वासना चेत् ज्ञानशक्तिः ज्ञानमेवावशिष्यते ॥
वासना बाह्यशक्तिश्चेत् बाह्यमेवावशिष्यते ।
यदि चोभयशक्तिस्स्यादुभयं चैव सिद्ध्यति ॥
आन्तरं बाह्यमित्येवं व्यवहारो हि वासना ।
यथैव वासितो जन्तुः तथैव प्रतिपद्यते ॥
विद्या च पूर्वप्रज्ञा च श्रद्धा संस्कारकर्मणी ।
आत्मनो रूपमेतत्स्यात्तथा काममयः पुमान् ॥

## 70 क्षणभङ्गवादनिरासः.

1 त्यज्यतां दीर्घसंसारकारणं स्थिरताग्रहः ।
गृह्यतां क्षणभङ्गित्वं परवैराग्यकारणम् ॥

प्रत्यभिज्ञाप्रमाणेन वस्तूनां स्थैर्यमिष्यते ।
प्रत्यभिज्ञा नाम केयमिति स्पष्टं निरूप्यताम् ॥
स एवायं घट इति ज्ञानमेकमुत द्वयम् ।
संस्कारमात्रजन्यं यद्विज्ञानं स्मरणं तु तत् ॥
इन्द्रियादिप्रमाणोत्थं ज्ञानं त्वनुभवो मतः ।
प्रत्यभिज्ञा त्विन्द्रियेण जन्यं संस्कारसाह्यतः ॥
अयमेकत्वसिद्धान्तः द्वित्वसिद्धान्त उच्यते ।
ज्ञानद्वयं प्रत्यभिज्ञा स्मरणानुभवात्मकम् ॥
वक्तव्यं कारणं तत्र यद्येकत्वमुपेयते ।
स्मृतौ हेतुर्हि संस्कारोऽनुभवे हेतुरिन्द्रियम् ॥
उभाभ्यां च न सम्भूय तज्ज्ञानमुपजन्यते ।
पृथक्पृथक् स्वकार्ये हि निर्ज्ञातं कौशलं तयोः ॥
स्मृतिः स्मर्तव्यविषया ग्रहणं ग्राह्यगोचरम् ।
न तदैक्यपरामर्शि दृश्यते प्रत्ययान्तरम् ॥
यथा निरन्तरोत्पन्ने घटज्ञानपटस्मृती ।
न तुल्यविषये तद्वदेते अपि भविष्यतः ॥
यद्वा भवतु नामेदं एकमेव हि वेदनम् ।
तथापि कीदृशं वस्तु स्पृशतीति परीक्ष्यताम् ॥
अतीतकालयुक्तं चेत् स्मरणान्न विशिष्यते ।
अनागतविशिष्टं चेत् संकल्पप्रायमेव तत् ॥

वर्तमानैकनिष्ठं चेत् स्थिरत्वं तर्हि सुस्थिरम् ।
कालत्रयपरीतं चेत् विरोधात्तत्तु दुर्लभम् ॥
परस्परपरित्यागव्यवस्थितनिजात्मनाम् ।
एकत्र न समावेशः कथंचिदुपपद्यते ॥
स्मरणप्रत्यभिज्ञानस्वकर्मफलभोक्तृता ।
क्षणिकत्वेऽपि कथिता कार्यकारणभावतः ॥
2 क्षणभङ्गानुमानं च क्षणवादे निरूपितम् ।
तन्निरासांशसारोऽत्र संक्षिप्य प्रतिपाद्यते ॥
अर्थक्रियासमर्थत्वं सत्त्वं यत्तावदुच्यते ।
तदसत्कूटहेमादौ व्यभिचारावधारणात् ॥
किंत्वबाधितसद्बुद्धिगम्यता सत्त्वमिष्यते ।
क्वचिच्च कालदेशादिनिबन्धनमपीष्यते ॥
अर्थक्रियासमर्थस्य तदुत्थं सत्त्वमस्तु वा ।
तदपि व्याप्तिशून्यत्वात् न हेतुर्गन्धवत्त्ववत् ॥
क्षणिकस्यापि भावस्य सत्त्वं नास्त्येव सोऽपिहि ।
क्रमेण युगपद्वापि न कार्यकरणे क्षमः ॥
क्षणिकस्य क्रमः कीदृक् युगपत्करणे पुनः ।
एकवस्त्वात्मकस्यापि रूपभेदः प्रसज्यते ॥
कार्याण्येकेन रूपेण भिन्नानि जनयेत्कथम् ।
रूपभेदविरोधात्तु वस्तुनो नास्तिता भवेत् ॥

देशकालविकल्पेऽपि क्षणस्य क्षुण्णता भवेत् ।
स्थिते हि वस्तुसद्भावे क्षणिकत्वं परीक्ष्यते ॥

3 क्षणिकत्वे पदार्थानां कारणत्वं च दुर्ग्रहम् ।
सर्वथा परनिष्पत्तौ निर्व्यापारो न कारणम् ॥
पूर्वक्षणविनाशे च कल्प्यमाने निरन्वये ।
उत्तरस्यानिमित्तत्वात् उत्पत्तिर्नोपपद्यते ॥
अत्यन्तासन्नसौ तस्मिन् न तावद्व्यापृतिक्षमः ।
स्वयं चाभावदष्टत्वात् कस्मिन् काले करिष्यति ॥
नाशोत्पादसमत्वेऽपि नैरपेक्ष्यात्परस्परम् ।
न कार्यकारणत्वे स्तः तद्व्यापाराननुग्रहात् ॥
न ह्यलब्धात्मकं वस्तु पराङ्गत्वाय कल्पते ।
तस्मात्प्राक्कार्यनिष्पत्तेः व्यापारो यत्र दृश्यते ॥
तदेव कारणं तस्य न त्वानन्तर्यमात्रकम् ।
सव्यापारस्य कर्तृत्वे क्षणिकत्वं तु दुर्घटम् ॥

4 सत्त्वादक्षणिकत्वस्य सिद्धेर्हेतुर्विरुध्यते ।
एवं च सत्त्वं व्यावृत्तं क्षणिकेभ्यो विशेषतः ॥
अत एव च कार्याणां युगपन्न समुद्भवः ।
न चापि कृत्वा करणं सामग्री हि न सर्वदा ॥
प्राणिकर्मविपाकोऽपि सामग्र्यन्तर्गतो मतः ।
सर्वत्र सुखदुःखादिहेतोस्समुपपादनात् ॥

समर्थत्वासमर्थत्वविकल्पेऽतिप्रसङ्गतः ।
सामग्र्या एव सामर्थ्यं ततः कार्यस्य दर्शनात् ॥
विनश्वरस्वभावेति यदुक्तं तत्र चिन्त्यताम् ।
जायमानस्वभावत्वे कृतं जननहेतुभिः ॥
नाजायमानभावेऽपि कर्तुं शक्यो नृशृङ्गवत् ।
तस्मात्स्वभावयोगेऽपि व्यवस्था सहकारिभिः ॥
5 स एवायमिति ज्ञानं प्रत्यभिज्ञेति कीर्त्यते ।
यः पूर्वमासीत्कुम्भादिः सोऽस्तीदानीमपीति हि ॥
अतीतकालवानर्थः तद्बुद्धाववभासते ।
भूतः कालो भूततया विषयीक्रियते तया ॥
अतीतस्येन्द्रियज्ञाने कथं विषयतेति चेत् ।
शतमात्रान् बभक्षेति कथमत्र प्रतीयते ॥
अतीतैकोनशतकरसालफलगोचरा ।
यथा तथाऽतीतकालयोगोऽपि प्रतिभासताम् ॥
प्रतिभाससमारूढः प्रत्यभिज्ञायते यदा ।
तदेन्द्रियार्थसंसर्गाच्चैका धीरुपजायताम् ॥
अथवा प्रत्यभिज्ञानं गन्धवत्कुन्दबुद्धिवत् ।
तच्चैकं मानसं ज्ञानं पूर्वज्ञानविशेषिते ॥
अथ सन्तानमाश्रित्य क्रियते तत्समर्थनम् ।
न, तस्य भिन्नाभिन्नत्वविकल्पानुपपत्तितः ॥

6 सद्यो जातस्य हि शिशोः मुखोल्लासादिहेतुभिः ।
हर्षशोकादियोगश्च भवतीत्यनुमीयते ॥
तस्मान्मुखविकासादेः हर्षादिः तस्य हि स्मृतिः ।
स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः ॥
तस्मात् स्मृतिप्रत्यभिज्ञाप्रामाण्यात् जगतः स्थितिः
न तत्प्रामाण्यसंत्यागी लौकिको नाप्यलौकिकः ॥
सहकारिविशेषस्य सन्निधेरप्यसान्निधेः ।
करणाकरणे स्यातां तौ च कालविभेदतः ॥
कालद्वयविरोधस्तु स्वव्यपेक्षानिबन्धनः ।
अन्यापेक्षौ च तौ पूर्वापरौ संभवतस्सदा ॥
अतत्तामनिदंतां च तत्त्वेदंत्वे निरस्यतः ।
अन्योन्यप्रतिषेधस्तु न ततस्सेद्धुमर्हति ॥
एकस्य भिन्नकालाभ्यां वैशिष्ट्यं विहतं यदि ।
तथा स्याद्भिन्नदेशाभ्यां पुञ्जसिद्धिर्विरुध्यते ॥
पूर्वापरबहुव्यक्तिव्याप्तिग्रहणसंभवा ।
न काचिदपि युक्तिस्स्यात् सर्वक्षणिकवादिनः ॥
न वैजात्यं विना तत्स्यात् न तस्मिन्ननुमा भवेत् ।
विना तेन न तत्सिद्धं नाध्यक्षं निश्चयं विना ॥
7 अत्र केचित् क्षणविदः सत्त्वाख्यं साधनं पुनः ।
नित्यतत्त्वोपदेशेन भवेदागमबाधितम् ॥

तच्च शून्यं तत्त्वमिति मत्वा हेत्वन्तरं विदुः ।
तदेतद्ध्रुवभावित्वं ध्वंसस्य प्राङ्निरूपितम् ॥
ततश्च सर्वभावानां क्षणिकत्वं व्यवस्थितम् ।
तद्देतद्ध्रुवभावित्वं विकल्पासहमित्यपि ॥
न्यायसिद्धाञ्जनग्रन्थे विस्तरेण निरूपितम् ।
इति ज्ञानप्रसङ्गेन क्षणभङ्गो निरूपितः ॥
अनिर्वाच्यमनित्यं च क्षणिकं चेति भेदतः ।
विदुः प्रपञ्चं विबुधाः तथाऽन्येऽप्यन्यथा विदुः ॥
सर्वे ते प्रतिषेद्धारः स्थिरतां रागकारिणीम् ।
व्यतिरेकदृशां सर्वमेकस्मिन् पर्यवस्यति ॥
8 बुद्ध्या विविच्यमानायां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः ॥
इति पद्यं गौतमेन न्यायसूत्रे निराकृतम् ।
प्रमाणतोऽर्थोपलब्धेरिति, तद्भाष्यसंग्रहः ॥
बुद्ध्या विवेचनादेव भावयाथात्म्यनिर्णयः ।
यदस्ति च यथा चेति यन्नास्ति च यथा चवा ॥
सर्वं प्रमाणबलतः उपलब्ध्यैव सिद्ध्यति ।
प्रमाणतो योपलब्धिः सा स्याद्बुद्ध्या विवेचनम् ॥
तेनैव सर्वशास्त्राणि सर्वकर्माणि देहिनाम् ।
सर्वे च व्यवहारास्स्युर्व्याप्तास्तत्सर्वसाक्षिकम् ॥

परीक्षमाणो भावांस्तु विद्वान् बुद्ध्याऽध्यवस्यति ।
इदमस्ति तथा चेदं नास्तीति निरुपद्रवम् ॥
सर्वभावास्सस्वभावास्स्वभिलप्या इति स्थितम् ।
एवं क्रमेण प्रायेण सौगताः प्रत्यवस्थिताः ॥

## (71) प्रत्यक्षवादः

1 अथ प्रमाणभेदानां विचारोऽत्र प्रवर्तते ।
प्रत्यक्षस्य च तत्रादौ विकल्पः प्रविभज्यते ॥
अक्षं प्रतिगतं यत्र सा धीः प्रत्यक्षमुच्यते ।
तां हि चक्षुः जनकतासंबन्धेनानुगच्छति ॥
विषयेऽपि प्रतिगतमक्षं तेनेत्थमुच्यते ।
प्रत्यक्षः पुरुषः योषा प्रत्यक्षेति बुधैरिह ॥
इन्द्रिये संनिकर्षे वा तत्संबन्धात्प्रयुज्यते ।
न च युक्तोऽव्ययीभाव इत्याह न्यायमञ्जरी ॥

2 प्रत्यक्षमेवानुभव इति लौकायतं मतम् ।
परोक्षमनुमित्यादिज्ञानं स्मृतिसमुच्चयः ॥
अनुमानं स्मृतिः प्रत्युत्पन्नकारणसंभवा ।
इति प्राभाकराः प्राहुरित्यपि ज्ञायते क्वचित् ॥
परोक्षमेव विज्ञानं तद्धि स्यादानुमानिकम् ।
प्रत्यक्षमेव नास्तीति सौत्रान्तिकमुखा विदुः ॥

प्रत्यक्षं च परोक्षं चानुभवद्वितयं परे ।
वैभाषिकं मतं त्वेतद्वैशेषिकमपि स्मृतम् ॥
प्रत्यक्षं च परोक्षं चापरोक्षमिति च त्रिधा ।
मानं विभज्य स्वात्मानमपरोक्षं विदुः परे ॥
कल्पनापोढमभ्रान्तं प्रत्यक्षं तच्चतुर्विधम् ।
आद्यमिन्द्रियजं तादृङ्मनोजातं द्वितीयकम् ॥
इन्द्रियोत्थं निर्विकल्पं मन इत्युच्यते हि तैः ।
अनन्तरप्रत्ययोऽपि संपूर्वस्स हि कथ्यते ॥
आत्मसंवेदनं चित्तचैत्तानां स्यात्तृतीयकम् ।
भावनाबलजं योगिज्ञानं तुर्यं प्रकीर्तितम् ॥
इति वैभाषिकैकान्तः न्यायबिन्द्वादिषु स्थितः ।
बाह्यमाभ्यन्तरं चेति द्विधा तदिति तार्किकाः ॥
लौकिकं चालौकिकमित्युभयं द्विविधं मतम् ।
लौकिकं षड्विधं ज्ञेयं त्रिविधं स्यादलौकिकम् ॥
3 तत्प्रत्यक्षं निर्विकल्पं सविकल्पमिति द्विधा ।
अलौकिकं स्मृतिर्वाऽनुमानं वा वेदविन्मतम् ॥
मनसा युज्यते ह्यात्माऽर्थेन्द्रियेण मनस्तथा ।
अर्थेन चेन्द्रियं तस्मात्प्रत्यक्षं न्यायविन्मतम् ॥
सामान्यं वा विशेषो वा किंस्यात्प्रत्यक्षगोचरः ।
इत्यत्रापि विकल्पोऽस्ति प्रसङ्गात्किंचिदुच्यते ॥

विशेषमात्रविषयं निर्विकल्पकमेव तत् ।
प्रत्यक्षमिति ते प्राहुः ये वैभाषिकसौगताः ॥
सामान्यविषयं यत्स्यात् तत्परोक्षमितीर्यते ।
अतः प्रमाणद्वितयं प्रमेयमपि च द्विधा ॥
स विशेषो निर्विकल्पविषयः यत्स्वलक्षणम् ।
स्वतः स्वभिन्नात्सर्वस्माद्व्यावृत्तं हि स्वलक्षणम् ॥
एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागस्स्यात् यः प्रमाणैः परीक्ष्यते
यद्यप्यपोहनिर्मुक्ते न वृत्तिश्शब्दलिङ्गयोः ।
युक्ता तथाऽपि बुद्धिस्तु ज्ञातुः वस्त्ववलम्बते ॥
अनादिवासनादोषात् व्यवहारव्यवस्थितिः ।
परीक्षकपरीक्षायामपोहे पर्यवस्यति ॥
सामान्यमात्रविषयं प्राहुस्सन्मात्रवादिनः ।
महासामान्यमेतत्तु द्रव्यं ब्रह्मेति कीर्त्यते ॥
सविकल्पकमेवैकं प्रत्यक्षं न द्विधा मतम् ।
शब्दानुवेधात्सर्वत्र तादृशं हीति शाब्दिकाः ॥
न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गृह्यते ॥
4 अथ तार्किकसिद्धान्ते तत्स्वरूपपरिष्कृतिः ।
विशेष्यत्वप्रकारत्वसंसर्गत्वाभिधैः त्रिभिः ॥

विषयत्वैर्निरूप्यं यत्तदेव सविकल्पकम् ।
विशिष्टविषयं ज्ञानं सविकल्पकमुच्यते ॥
विशेषणं विकल्पश्च प्रकारश्च समार्थकाः ।
निर्विकल्पकशब्दोऽतो निर्विशेषार्थवाचकः ॥
तुरीया या विषयता तस्या यत्स्यान्निरूपकम् ।
तन्निर्विकल्पकं ह्युक्तं अविशिष्टार्थगोचरम् ॥
व्यवसायात्मकाध्यक्षवादिनो न्यायवेदिनः ।
यः कल्पनाध्यक्षवादः स तु सौगतसम्मतः ॥
तस्माद्य एव वस्त्वात्मा सविकल्पस्य गोचरः ।
स एव निर्विकल्पस्य शब्दोल्लेखविवर्जितः ॥
क्वचिज्जातिः क्वचिद्द्रव्यं क्वचित्कर्म क्वचिद्गुणः ।
यदेव सविकल्पेन निर्विकल्पेन तत्पुरा ॥
गृह्यते नियमेनैवं क्वचिद्दोषाद्भ्रमोदयः ।
तिमिराशुभ्रमणनौयानक्षोभादिसंभवम् ॥
द्विमृगाङ्कालातचक्रचलद्वृक्षादिदर्शनम् ।
जात्यखण्डोपाधिभिन्नं किंचिद्रूपेण भासते ॥
स्वरूपतश्च जात्यादिः प्रकारत्वेन भासते ।
जातिः द्रव्यत्वादिरूपाऽभावत्वादिरनन्तरः ॥
अतीन्द्रियं निर्विकल्पमनुमानेन गृह्यते ।
विशेषणज्ञानपूर्वा प्रसिद्धा हि विशिष्टधीः ॥

न प्रमा न भ्रमश्चेदमित्यप्यस्ति विनिर्णयः ।
प्रकारतादिशून्यं तत् संबन्धानवगाहि च ॥
संबद्धं वर्तमानं च गृह्यते चक्षुरादिना ।
चक्षुराद्यत्कविषयं परतन्त्रं बहिर्मनः ॥
इति मण्डनमिश्रीयं वाक्यं विधिविवेकगम् ।
अत्कशब्दोऽन्तिकपरः संप्रयोगस्सतस्ततः ॥
अत्के चेन्मधु विन्देत किमर्थं यत्नमाचरेत् ।
इति शाबरवाक्येऽपि तच्छब्दः तादृशार्थकः ॥
5 अथ कौमारिलादीनामेष तादात्म्यवादिनाम् ।
सांख्यादीनां च सिद्धान्ते विभागोऽत्र निरूप्यते ॥
अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
संमुग्धं वस्तुमात्रं तु प्राग्गृह्णन्त्यविकल्पितम् ।
तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः ॥
सामान्यं च विशेषश्च स्वरूपेणावगम्यते ।
नच व्यावृत्त्यनुगतिरूपेणेति विनिर्णयः ॥
ततःपरं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन संमता ॥
जातिव्यक्त्योरभेदेन ग्रहः प्राथमिके ग्रहे ।
भेदाभेदस्ततास्सिद्धः स च तादात्म्यलक्षणः ॥

तस्माद्यतोयतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥

(72) विकल्पवादः.

1 निर्विकल्पकमेवैकं प्रत्यक्षं, सविकल्पकम् ।
यत्तु तत् स्मृतिरित्याहुः वैभाषिकमुखा बुधाः ॥
सविकल्पकमप्येतत् प्रत्यक्षमिति वैदिकाः ।
प्रत्यक्षवार्तिकश्लोकान् विलिखामि विविक्तये ॥
2 तेनेन्द्रियार्थसंबन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तु प्रत्यक्षवान्नरः ॥
नहि प्रविष्टमात्राणामुष्णाद्गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥
यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात्तत्रावबुध्यन्ते तथा जात्यादिधर्मतः ॥
यदि त्वालोच्य संमील्य नेत्रे कश्चिद्विकल्पयेत् ।
न स्यात्प्रत्यक्षता तस्य संबन्धाननुसारतः ॥
वृद्धप्रयोगगम्याश्च शब्दार्थास्सर्व एव नः ।
तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥
सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥

संबद्धं वर्तमानं च गृह्यते चक्षुरादिना ।
सामान्यं वा विशेषो वा ग्राह्यं नात्र विवक्ष्यते ॥
न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।
प्राक्शब्दाद्याद्दृशी बुद्धिः शब्दादपि हि तादृशी ॥
जात्याद्यर्थान्तरं तस्मात्तद्रूपेष्वेव वस्तुषु ।
विकल्प्य जायते बुद्धिरित्याद्यत्रैव विस्तरः ॥
न सोऽस्ति प्रत्ययो लोके यः कालानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं कालेन जायते ॥
न सोऽस्ति प्रत्ययो लोके यो देशानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं देशेन जायते ॥
न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन जायते ॥
न सोऽस्ति प्रत्ययो लोके यस्सत्त्वानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं सत्त्वेन गृह्यते ॥
चतुर्षु चैषु न्यायेषु द्वयं मीमांसकैर्मतम् ।
अतः कालश्च देशश्च सकलेन्द्रियगोचरः ॥
तृतीयस्तु पुनः प्रायो वैयाकरणसम्मतः ।
निर्विकल्पकविज्ञानस्थापनाय स खण्ड्यते ॥
तुरीयस्तु सदद्वैतवादिसिद्धान्तसंमतः ।
निर्विशेषपरब्रह्मापरोक्षत्वाय संश्रितः ॥

3 प्रभाकरगुरूणां तु विशेषोऽत्रावधार्यताम् ।
पूर्वानुभूतसंस्कारसचिवं सविकल्पकम् ॥
केवलेन्द्रियसंसर्गजनितं निर्विकल्पकम् ।
यदैकमेव वस्तु स्यात् प्रत्यभिज्ञेति सोच्यते ॥
सजातीयं यदा तत्स्यात्सविकल्पकमुच्यते ।
तन्निर्विकल्पं प्रथमपिण्डग्रहणमुच्यते ॥
सविकल्पं द्वितीयादिग्रहणं त्विति निर्णयः ।
अनुवृत्तिर्नाम जातेर्नानाव्यक्तिसमन्वयः ॥
तदतद्गोचरत्वाभ्यां विकल्पेऽस्तित्वनास्तिते ।
निरीहादिस्वन इव निर्विकल्पस्वनो मतः ॥
योगेऽपि निर्विकल्पाख्यसमाधिर्योऽनुशिष्यते ।
अर्थमात्रविनिर्भासं स्वरूपविकलं यथा ॥
तत्रापि निर्विशेषार्थग्रहणं नोपदिश्यते ।
किंतु गीर्णस्वस्वरूपा विशिष्टार्थैव सा मतिः ॥
4 परोक्षाणां प्रमाणानां संसर्गांशे प्रमाणता ।
प्रत्यक्षस्य प्रमाणस्य त्रिष्वप्यस्ति प्रमाणता ॥
कालदेशपरिच्छिन्नं प्रत्यक्षमितरत्पुनः ।
सार्वदेशं सार्वकालं तत् त्रिकालादिगोचरम् ॥
शब्दसंसर्गयोग्यार्थप्रतिभासाः विकल्पनाः ।
स्मृतिव्यवहिताः तस्मादनर्थजनिता मताः ॥

इत्येवं कल्पनावादिविशेषैकार्थवादिनः ।
विबुधाः प्रत्यवस्थातुं नानावादान्वितन्वते ॥
शब्दासंस्पर्शवादापनोदायैव हि शाब्दिकाः ।
शब्दस्य ज्ञानमात्रे तु भानमिच्छन्त्यनेकधा ॥
यथा विषयभेदेन प्रतीतिर्भिद्यते तथा ।
उपायभेदात्तद्भेदः सर्वानुभवसाक्षिकः ॥
समवायो हि नाध्यक्षः वैषेषिकमते स्थितः ।
तथापि तन्तुष्वेवायं पट इत्यादिबुद्धिकृत् ॥
तथैव च चिरक्षिप्रदूरासन्नादिबुद्धिकृत् ।
कालदेशविशेषः स्यात् सहकारिनियन्त्रितः ॥
निर्विकल्पकमध्यक्षं सविकल्पकमेव तत् ।
उभयात्मकमित्येतत् विलक्षणमितीतरे ॥
सौगतः प्रथमः पक्षः शाब्दिकस्तदनन्तरः ।
मैमांसकः तृतीयः स्यात् तुर्यो नैयायिकस्स्मृतः ।
सामग्र्यास्तु प्रमाणत्वे प्रमा फलमितीष्यते ।
प्रमायास्तु प्रमाणत्वे फलं हानादिबुद्धयः ॥
प्रमाणसामान्यवादे विस्तरोऽस्य कृतोऽधुना ।
विशेषांशा हि सूच्यन्ते विस्तरः तैर्थिकैः कृतः ॥
5 न कदाचित्क्वचिद्दृष्टं निर्व्यापारं तु कारकम् ।
इन्द्रियाणां कारकत्वात्सन्निकर्षपरिग्रहः ॥

तत्र षोढा सान्निकर्षः लौकिकः परिकीर्तितः ।
ज्ञानसामान्ययोगोत्थभेदेनालौकिकस्त्रिधा ॥
तत्प्रत्यक्षं द्वित्रिचतुस्सन्निकर्षात्प्रवर्तते ।
तत्रात्मसुखरूपादिविषयास्स्युर्यथाक्रमम् ॥
आत्माचित्तेन्द्रियार्थाः स्युः सान्निकर्षस्य चाश्रयाः ।
इति नैयायिकाः प्राहुः अत्र मीमांसकाः पुनः ॥
चतुर्विधः संप्रयोगः द्रव्ये संयोगलक्षणः ।
गुणे संयुक्ततादात्म्यं गुणत्वे तद्वदात्मता ॥
गुणत्वगतसत्तायां तद्वत्तादात्म्यलक्षणः ।
श्रोत्रेण शब्दग्रहणमजसंयोगजं विदुः ॥
त्रिविधस्संनिकर्षः स्यादिति प्राभाकरा विदुः ।
संयोगस्संयुक्तसमवायश्च तदनन्तरः ॥
समवायस्तृतीयस्स्यात् तर्हि स्यात्सर्वसंग्रहः ।
अलौकिकः सन्निकर्षः न मीमांसकसम्मतः ॥
यच्चालौकिकविज्ञानं स्मरणं वाऽथ लैङ्गिकम् ।
योगस्यानुपगन्तृत्वात् योगी नैवास्ति तन्मते ॥
सर्वज्ञानामभावेन धर्मो वेदैकलक्षणः ।
आभिमुख्यं सन्निकर्ष इति संयोगदूषकाः ॥
यथाकथंचित्संबन्धं विदुस्सर्वेऽपि वादिनः ।
निर्विकल्पस्य विषयविकल्पस्याथ संग्रहः ॥

6 निर्विकल्पस्य विषयं बौद्धाः प्राहुस्स्वलक्षणम् ।
महासामान्यमस्येति सदद्वैतविदो विदुः ॥
वाग्रूपमपरे तत्त्वं प्रमेयं शाब्दिका विदुः ।
केचिद्गुणादिशबलं मन्यन्ते कपिलादयः ॥
केचिच्छकलितं वस्तु विदुः नैयायिकादयः ।
विशिष्टमेव विषयं प्राहुः प्राभाकरादयः ॥
प्रत्यक्षविषयेऽप्येताः चित्रा विप्रतिपत्तयः ।
परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति ॥
प्रत्यक्षे हि समुत्पन्ना विमतिः केन वार्यते ।
इदं भाति न भातीति संविद्विप्रतिपत्तिषु ॥
परप्रत्यायने पुंसां शरणं शपथोक्तयः ।
प्रत्यक्षलक्षणं चापि तादृशार्थानुगुण्यतः ॥
7 विकल्प्य कथितं तत्तु संग्रहादिह कथ्यते ।
कल्पनापोढमभ्रान्तं प्रत्यक्षमिति सौगताः ॥
सत्संप्रयोगे पुरुषस्येति जैमिनिलक्षणम् ।
सन्निकृष्टार्थविज्ञानमिति वृत्तिकृतां मतम् ॥
यत्त्विन्द्रियार्थसंबन्धोत्पन्नमव्यभिचारि च ।
तत्प्रत्यक्षमिति प्रोक्तमक्षपादेन लक्षणम् ॥
साक्षात्प्रतीतिः प्रत्यक्षमिति प्राभाकरा विदुः ।
अर्थाकृत्या परिणतेन्द्रियवृत्त्यनुपातिनी ॥

बुद्धिवृत्तिः चितिच्छायामापन्नाऽध्यक्षमिष्यते ।
पातञ्जलैः कापिलैश्च तथा तन्मार्गगामिभिः ॥
प्रत्यक्षलक्षणं प्राहुः स्पष्टतां पुनरार्हताः ।
अस्पष्टमनुमानादि सद्विशेषाप्रकाशनात् ॥
चार्वाकोऽशक्यकरणं मेने मानस्य लक्षणम् ।
तथैव संख्यानियमं तत्रोदाहरणं त्विदम् ॥
वक्राङ्गुलिः प्रविरलाङ्गुलिरेष करस्त्विति ।
जानाति मीलिताक्षोऽपि तमस्यपि पुमानयम् ॥
निशि दीपशिखा दूराद्दृष्टा कुर्यात्प्रभामतिम् ।
अनुवातं दूरगते गन्धे बुद्धिः प्रजायते ॥
शब्दादिविषया बुद्धिः विचित्रा सर्वसम्मता ।
तस्मादनुगमोऽशक्यकरणः हृदयंगमः ॥
सर्वेष्वपि च सिद्धान्तेष्विन्द्रियं क्रियते पुरः ।
ततस्त्वर्थानुगुण्येन परिष्कारो विजृम्भते ॥
8 अथात्र सांख्यप्रत्यक्षे विशेषः श्लोकवार्तिके ।
शब्दनित्यत्वाधिकृतावाक्षिप्तस्सोऽभिधीयते ॥
विषयः प्रथमं स्वीयेन्द्रिये ह्यालोचनात्मकम् ।
स्वाकारं वृत्तिपर्यायं विकारं कुरुते स्वयम् ॥
सा च वृत्तिस्समागत्य देशं तं विषयस्य च ।
प्रकाशं विषयाकारं आधत्ते महदात्मनि ॥

बुद्धावध्यवसायाख्यमेतस्मिन्नाहिते सति ।
तस्यां बुद्धौ च चैतन्यं यदाऽभिव्यज्यते तदा ॥
प्रत्यक्षमिति सिद्धान्तः स च नैवोपपद्यते ।
कथं विकाराधानं स्यात् असंबद्धेन चेन्द्रिये ॥
प्राप्तिस्सर्वगतत्वाच्चेत् तुल्या दूरगतेष्वपि ।
विक्रियाऽविक्रिये तत्र सर्वैस्स्यातां न भेदतः ॥
तदौपनिषदाः प्रायस्सर्वे नैयायिकाध्वगाः ।
तत्रापि सन्निकर्षादिः स्वसामग्रीनिबन्धनः ॥
अदृष्टान्नियमादृष्टनियमे लाघवं मतम् ।
मनोवैभवसिद्धान्ते विपरीतं बलाबलम् ॥
9 अथ चाद्वैतसिद्धान्ते प्रायस्सांख्यमतानुगे ।
प्रत्यक्षविषये किंचिद्विशेषांशोऽत्र सूच्यते ॥
चैतन्यमेव प्रत्यक्षप्रमेति श्रुतिसम्मतम् ।
तदनाद्यपि हृद्वृत्तिविशिष्टं चादिमन्मतम् ॥
संसर्गानवगाह्येतज्ज्ञानं स्यान्निर्विकल्पकम् ।
सोऽयं घटः तत्त्वमसीत्यादिवाक्यादपीष्यते ॥
संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् ।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥
वृत्त्यवच्छिन्नचैतन्येऽर्थावच्छिन्नचिदेकता ।
ज्ञानस्याध्यक्षत्वमिति नव्यानामिह निर्णयः ॥

चैतन्याभिव्यञ्जकत्वं विषयस्यापरोक्षता ।
अन्तःकरणसंबन्धादस्वच्छे स्वच्छता भवेत् ॥
प्रमात्रभिन्नत्वमिति परेषां तत्र निर्णयः ।
प्रमातृसत्तातिरिक्तसत्ताशून्यत्वलक्षणम् ॥
अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

(73) प्रतिबिम्बवादः.

1 प्रतिबिम्बविचारोऽस्ति यः पुनश्श्लोकवार्तिके ।
प्रसङ्गात्तस्य सारांशे तज्जिज्ञासुकृते यते ॥
बिम्बान्न प्रतिबिम्बानां भेदः नापि परस्परम् ।
अबाधितप्रत्यभिज्ञा प्रमाणं सार्वलौकिकी ॥
अत्र केन निमित्तेन प्रतिपात्रं पृथक्पृथक् ।
भिन्नानि प्रतिबिम्बानि ज्ञायन्ते युगपत् नरैः ॥
अत्रोच्यते यदा चक्षुः प्रातिस्रोतः प्रवर्तितम् ।
स्वदेश एव गृह्णाति सवितारमनेकधा ॥
ईषन्निमीलितेऽङ्गुल्या यथा चक्षुषि दृश्यते ।
पृथगेकोऽपि भिन्नत्वात् चक्षुर्वृत्तेः तथैव नः ॥
2 ये त्वत्र प्रतिबिम्बानामुत्पत्तिं प्राहुरार्हताः ।
तेषामभिप्राय एषः स्थूलदृष्टिपरिष्कृतः ॥

स एव चेत्प्रतीयेत कस्मान्नोपरि दृश्यते ।
कूपादिषु कुतोऽधस्तात् प्रतिबिम्बेक्षणं भवेत् ॥
प्राङ्मुखो दर्पणं पश्यन् स्याच्चेत्प्रत्यङ्मुखः कथम् ।
तत्र प्रति ब्रुवन्त्यन्ये तेषामेषा परिष्क्रिया ॥
देहप्रदेशो पुंसस्स्यात् चक्षुः ज्ञानस्य कारणम् ।
तेन देहाभिमुख्येन बुद्ध्यमानोऽवबुद्ध्यते ॥
अप्सूर्यदर्शिना नित्यं चक्षुः द्वेधा प्रवर्तते ।
एकमूर्ध्वमधस्ताच्च तत्रोर्ध्वांशप्रकाशितम् ॥
शरीरस्यानृजुस्थत्वात् नात्मा सूर्यं प्रपद्यते ।
ऊर्ध्ववृत्त्यर्पितं बिम्बं अवाग्वृत्त्या तु बुद्ध्यते ॥
ऊर्ध्ववृत्तेस्तदेकत्वात् अवागिव च मन्यते ।
अधस्तादेव तेनार्कः सान्तरालः प्रतीयते ॥
एवं प्राग्भूतया वृत्त्या प्रत्यग्वृत्तिसमर्पितम् ।
बुध्यमानो मुखं भ्रान्त्या प्रत्यगित्यवगच्छति ॥
तेनानुभवसिद्धेन पथा स्यादन्यथा गतिः ।
प्रतिबिम्बेन बिम्बस्यानुमानं क्वचिदभ्यधुः ॥

(74) अनुमानाक्षेपः

1 अथानुमानप्रमाणविकल्पः महती कथा ।
तथाऽपि शक्यसंक्षेपा स्यादित्यत्र प्रयत्यते ॥

विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम् ।
अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ॥
विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात् ।
तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥
व्याप्तिरेवानुमानस्य जीवातुस्सा च सर्वथा ।
न संभवति संबन्धग्रहस्यानुपपत्तितः ॥
अन्वयव्यतिरेकाभ्यां नाविनाभावनिश्चयः ।
त्रैकालिकानां वस्तूनामानन्त्यादतिशङ्कनात् ॥
अतएवेहानुमानशब्दः प्रायेण लौकिकैः ।
प्रयुज्यते संशयार्थः परोक्षं संशयात्मकम् ॥
साहचर्ये च संबन्धे विस्रम्भ इति मुग्धता ।
शतकृत्वोऽपि तद्दृष्टौ व्यभिचारस्य संभवात् ॥
देशकालदशाभेदविचित्रात्मसु वस्तुषु ।
अविनाभावनियमः न संभवति कुत्रचित् ॥
2 भवन्नप्यविनाभावः परिच्छेत्तुं न शक्यते ।
जगत्त्रयगताशेषपदार्थालोचनाद्विना ॥
ये तु प्रत्यक्षतो विश्वं प्रपश्यन्ति महाजनाः ।
किं दिव्यचक्षुषामेषां अनुमानप्रयोजनम् ॥
सामान्यद्वारकोऽप्यस्ति नाविनाभावनिश्चयः ।
वास्तवं तु न सामान्यं नाम किंचन विद्यते ॥

बहुकृत्वोऽपि वस्त्वात्मा तथेति परिनिश्चितः ।
देशकालादिभेदेन दृश्यते पुनरन्यथा ॥
भूयो दृष्टौ च धूमोऽग्निसहचारीति गम्यताम् ।
अनग्नौ तु स नास्तीति न भूयोदर्शनाद्गतिः ॥
गत्वागत्वा च तान् देशान् यद्यर्थो नोपलभ्यते ।
ततोऽन्यकारणाभावादसन्नित्यवगम्यते ॥
दर्शनादर्शनाभ्यां हि नियमग्रहणं यदि ।
तदप्यसदनग्नौ हि धूमस्येष्टमदर्शनम् ॥
अनाग्निश्च कियान् प्रायो जगत् ज्वलनवर्जितम् ।
तत्र धूमस्य नास्तित्वं नैव पश्यन्त्ययोगिनः ॥
तदेवं नियमाभावात् सति वा ज्ञप्त्यसंभवात् ।
अनुमानप्रमाणत्वदुराशा प्रतिमुच्यताम् ॥
साध्यानुमितिवेलायां नचास्ति नियमग्रहः ।
नियमग्रहकाले च न साध्यमनुमीयते ॥
3 निरुपाधिकसंबन्धो व्याप्तिरित्यभिधीयते ।
साध्येन यस्समं व्याप्तोऽव्यापकः साधनस्य यः ॥
स उपाधिरिति प्रोक्तः तत्र चात्माश्रयो ध्रुवः ।
अतो व्याप्तिपरिष्कारः शतशः क्रियते बुधैः ॥
4 धर्मे सिषाधयिषिते न हेतोः पक्षधर्मता ।
धूमस्य वह्न्यधर्मत्वात्, साध्यं धर्मी यदीष्यते ॥

न हेतोरन्वयस्तत्र व्यतिरेकोऽपि बाधितः ।
द्वये तु साध्ये द्वयमप्यसिद्धं स्यादसंशयम् ॥
विशिष्टस्य तु साध्यत्वे न प्राक्तद्धर्मताग्रहः ।
अतश्च पक्षधर्मत्वं केचिन्नेच्छन्ति सूरयः ॥
ज्ञातव्ये पक्षधर्मत्वे पक्षो धर्म्यभिधीयते ।
व्याप्तिकाले भवेद्धर्मः साध्यसिद्धौ पुनर्द्वयम् ॥

5 अनुमानप्रयोगोऽपि वादौ कर्तुं न शक्यते ।
मिथोविरुद्धाङ्गीकारप्रचुरौ वादिनाविह ॥
शब्दो द्रव्यं वेदविदां गुणो न्यायविदां मतः ।
पञ्चभूतगुणोऽन्येषां परेषां नाभसो गुणः ॥
वृक्षादिशब्दाः स्फोटस्य विवर्त इति शाब्दिकाः ।
गुणद्रव्यविभागं च केचिन्नेच्छन्ति पण्डिताः ॥
एवमेव हि सर्वं च वस्तु तैस्तैर्विकल्प्यते ।
कः पक्षः किंचवा साध्यं को हेतुः द्वयसम्मतः ॥
सर्वत्रान्यतरासिद्धेरनुमानकथा वृथा ।
सामान्येन प्रयोगस्तु केवलं कण्ठशोषकृत् ॥

6 व्यवहारोऽध्यक्षशक्त्या कृतार्थो ह्यानुमानिकः ।
इन्द्रियं धूमसंयुक्तं वह्निं गमयति स्फुटम् ॥
व्याप्तिश्च पक्षधर्मत्वं स्यातां तत्सहकारिणी ।
तथैवोपमितिश्शाब्दी सर्वा प्रत्यक्षमिष्यते ॥

सहकारिसनाथं चेत् विचित्रं करणं भवेत् ।
अनागतादिलिङ्गांशे सयूथ्यकलहोऽस्ति हि ॥
अत एवानुमानानामपश्यन्तः प्रमाणताम् ।
तद्विस्रम्भनिषेधार्थमिदमाहुर्मनीषिणः ॥
हस्तस्पर्शादिनाऽन्धेन विषमे पथि धावता ।
अनुमानप्रधानेन विनिपातो न दुर्लभः ॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥
7 द्विविधं ह्यनुमानं स्यादिति प्राहुस्सुशिक्षिताः ।
यथोत्पन्नप्रतीत्येवं तथोत्पाद्यप्रतीति च ॥
तत्र धूमानुमानादेः प्रामाण्यमुपगम्यते ।
यतश्च साध्यं बुद्ध्यन्ते पुरुषाः कोमलाशयाः ॥
यत्त्वात्मेश्वरसर्वज्ञपरलोकादिगोचरम् ।
अनुमानं न तस्येष्टं प्रामाण्यं तत्त्वदर्शिभिः ॥
तस्माद्विदुर्वेदविदः धर्मब्रह्मादिगोचरम् ।
अनुमानं नोर्जितं स्यादिति शब्दं विधान्तरम् ॥

(75) अनुमानसमर्थनवादः

1 अत्रोच्यते न्यायविद्भिर्युक्तिचिन्ताविशारदैः ।
तानेवानुसरद्भिश्च सर्वैर्दार्शनिकैः परैः ॥

अबलाबालगोपालहालिकप्रमुखा अपि ।
बुद्ध्यन्ते नियतादर्थादर्थान्तरमसंशयम् ॥
अनुमानापलापे तु प्रत्यक्षादपि दुर्लभा ।
लोकयात्रेति लोकास्स्युः चित्रिता इव निश्चलाः॥

2 अत्रानुमानप्रामाण्यवादिनां वाक्यसंग्रहः ।
आदौ सौगतसिद्धान्तवचनं त्ववधार्यताम् ॥
अनुमानं ह्यर्थदृकस्यात् या च लिङ्गात्त्रिलक्षणात् ।
इति दिङ्नागकथितं लक्षणं त्वित्यनूदितम् ॥
कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥
कार्यकारणभावो हि प्रत्यक्षेणावगम्यते ।
तदुत्पत्त्याख्यसंबन्धादविनाभावनिश्चयः ॥
सहभावित्वमथवा क्रमभावित्वमेव वा ।
कार्यकारणभावस्स्यान्नियमो नात्र गर्भितः ॥
यथा धूमज्वलनयोः सुबीजाङ्कुरयोरपि ।
भवेद्यद्यपि चाशङ्का पुरुषस्य विपश्चितः ॥
तदेवाशङ्क्यते लोके यस्य शङ्का न बाधते ।
स्वप्रवृत्त्यादिकं हेतुफलभावनिबन्धनम् ॥
तादात्म्यनिश्चयेनापि क्वचित्तादृशनिश्चयः ।
वृक्षशिंशपयोरेषः सामानाधिकरण्यतः ॥

यत्र चात्यन्तभेदोऽस्ति गवाश्वादौ न तत्र हि ।
सामानाधिकरण्यं, तत् युगपन्न प्रयुज्यते ॥
अत्यन्ताभेदसत्त्वेन घटकुम्भादिवस्तुषु ।
सह प्रयोगो नैवास्ति नात्र तादात्म्यमिष्यते ॥
वृक्षोऽयं शिंशपेत्येवं प्रयोगो धीमतामपि ।
सामानाधिकरण्यं स्यात्तत्र तादात्म्यलक्षणम् ॥
वृक्षत्वं यद्यतिपतेत् शिंशपा कुत्रचित्तदा ।
स्वात्मानमेव संजह्यात् विपक्षे बाधकं न्विदम् ॥
तदुत्पत्तिः तदात्मत्वं अविनाभावबोधकम् ।
तत्कार्यं कारणं चात्मा स्वात्मानं साधयिष्यतः ॥
अनुमानं न प्रमाणमित्येवं चेत्प्रयुज्यते ।
एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेत् ॥
यदि च त्वाच्छिरस्कस्य प्रयोगः कस्यचित् तदा ।
स्वोक्तेरेव विरोधस्स्यात् माता वन्ध्या ममेतिवत् ॥
प्रमाणं च तदाभास सजातीयत्वहेतुना ।
ब्रुवन् स्वभावानुमानं स्वीकरोति भवानपि ॥
परकीयः संशयादिः ज्ञायते वचनाद्यदि ।
भवता स्वीकृतं तत्रानुमानं कार्यलिङ्गकम् ॥
तथैवानुपलब्ध्याऽपि कंचिदर्थं निषेधता ।
लिङ्गं ह्यनुपलब्ध्याख्यमगत्या स्वीकृतं भवेत् ॥

अत्रायं संग्रहश्लोकः तदुक्तः परिपठ्यते ।
प्रमाणान्तरसामान्यस्थितेरन्यधियां गतेः ॥
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ।
प्रतिषेधः स्वभावान्तर्नीतोऽभावे निरूप्यते ॥
कृत्तिकोदयतः क्वापि रोहिण्युदयनिश्चयः ।
तत्कोष्ठगत्यनुविहितान्वयव्यतिरेकतः ॥
3 द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥
बुद्ध्यारूढेनैव धर्मधर्मिभावे न कल्पितम् ।
अनुमानं नैव बाह्यस्सदसत्त्वमपेक्षते ॥
निरुपप्लवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधोऽयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥
यतश्च सविकल्पस्य प्रत्यक्षत्वं नचेष्यते ।
न तस्मादनुमानादेरुत्पत्तिः परमार्थतः ॥
4 न्यायरत्नाकरकृतामनूक्तिरवधार्यताम् ।
अनुमानं नैवमानमस्माकं परमार्थतः ॥
अवस्तुभूतसामान्यविषयत्वात्तथाऽपि च ।
तत्परंपरया वस्तुप्रभवं मानमिष्यते ॥
वह्निस्वलक्षणाद्धूमस्वलक्षणसमुद्भवः ।
ततश्च धूमप्रत्यक्षं ततो धूमाविकल्पना ॥

अनुमानं ततश्चं स्यात्तद्वस्तुप्रभवं ततः ।
वह्नेस्तु प्रतिबद्धस्य प्रतिलम्भनमुच्यते ॥
यद्बाष्पाविषयाद्धूमविकल्पादुपजायते ।
वह्निज्ञानं, तन्न परंपरया प्रतिबध्यते ॥
वह्निनेति, न मानं तत् आभास इति गीयते ।
प्रतिबन्धपदार्थोऽपि सम्यग्व्युत्पादितोऽमतः ॥
व्यवहाराविसंवादान्मानतेन्द्रियलिङ्गयोः ।
आप्तवादाविसंवादाच्छब्दः प्रामाण्यमृच्छति ॥
5 बौद्धाः प्रमेयद्वैविध्यात् प्रमाणं द्विविधं जगुः ।
नान्यः प्रमाणभेदस्य हेतुर्विषयभेदतः ॥
विशेषोऽध्यक्षतो गम्यः सामान्यमनुमानतः ।
नोभयं नोभयग्राह्यं पिष्टं पिष्टं नहीष्यते ॥
अतश्च नोपगच्छन्ति संप्लवं नीतिकोविदाः ।
एकस्मिन् विषयेऽनेकमानवृत्तिर्हि संप्लवः ॥
चोदनालक्षणत्वं च शास्त्रयोनित्वमेव च ।
धर्मस्य ब्रह्मणश्चापि तस्मादेवोपपादितम् ॥
समानविषयत्वे च जायेत सदृशी मतिः ।
नचाध्यक्षधिया साम्यमेति शब्दानुमानधीः ॥
तेजोऽन्यदेव नक्षत्रशशाङ्कशकलादिषु ।
उद्घाटितजगत्कोशमन्यदेव रवेर्महः ॥

अन्यदेवेन्द्रियग्राह्यमन्यत् शब्दादिगोचरम् ।
शब्दात्प्रत्येति भिन्नाक्षः नतु प्रत्यक्षमीक्षते ॥
अन्यथैवाग्निसंसर्गाद्दाहं दग्धोऽनुमन्यते ।
अन्यथा दाहशब्देन दाहार्थः संप्रतीयते ॥
तस्मान्न संप्लवो नापि तृतीयं मानमिष्यते ।
प्रत्यक्षं च परोक्षं च मानं विषयभेदतः ॥
विकल्पविषये वृत्तिमाहुश्शब्दानुमानयोः ।
तेभ्यः संबन्धसिद्धौ च नानवस्था न संप्लवः ॥
यो वादिप्रतिवादिभ्यां निश्चितस्साधनं तु तत् ।
इत्युक्तवद्भिरप्येतैरसत्यात्सत्यधीर्मता ॥
अनुमानस्येत्थमेभिः प्रामाण्यं परिनिश्चितम् ।
तच्च सांवृतिकं वा सांव्यावहारिकमेव वा ॥
6 अथ तार्किकसिद्धान्तसंग्रहोऽप्यत्र लिख्यते ।
व्याप्त्यतीचारशङ्केत्थं प्रत्युक्ता कुसुमाञ्जलौ ॥
शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कश्शङ्कावधिर्मतः ॥
अनुमानस्य बाधश्च नाध्यक्षात्किंतु तर्कतः ।
तत्र व्याप्तयाद्युपगमात् स्वव्याघातो दुरुत्तरः ॥
व्याघातो यदि दोषो न को वा दोषः उदीर्यताम् ।
दोषादोषाविवेकश्चेत् प्रकृते दूषणं कथम् ॥

आशङ्का यदि निर्मूला सर्वत्र सुलभा हि सा ।
उत्प्रेक्षेत च यो मोहादज्ञातमपि बाधकम् ॥
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ।
इति पद्यं विश्रुतं हि यन्न्यायकणिकोदितम् ॥
व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥
व्याघातो यदि शङ्काऽस्ति नचेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कश्शङ्काऽवधिः कुतः ॥
इत्थं खण्डनकारेण कुसृष्टिर्येह कीर्तिता ।
सर्वार्थसिद्धौ शङ्कैषा प्रत्युक्ता सूरिभिर्यथा ॥
व्याघातनिर्धुता शङ्का व्याघाते सा कथं भवेत् ।
शब्दवैचित्र्यमात्रेण श्लोकस्तु परिवर्त्यते ॥
भूयोदर्शनतस्तत्र भवेच्छङ्कानिराक्रिया ।
तर्कस्तन्मूलभूतस्योपाधेरेव निवर्तकः ॥
निरुपाधिकसंबन्धो व्याप्तिरित्यत उच्यते ।
प्रायेण पक्ष एवैषोऽपूर्वरीत्याऽप्यनूद्यते ॥
न व्याप्तिर्नियमायोगादिति व्याप्तमिदं न वा ।
व्याप्तं चेत्स्वीकृता व्याप्तिः न व्याप्तं चेन्न दूषणम् ॥
सर्वस्य व्यभिचारित्वे व्यभिचारो न सिद्ध्यति ।
एकस्याव्यभिचारित्वे न सर्वव्यभिचारिता ॥

भूयोदर्शनतस्तावदुदेति मतिरीदृशी ।
नियतोऽयमनेनेति सकलप्राणिसाक्षिका ॥
दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणका ।
अत्र च प्रक्रियासारः विश्रुतोऽथापि लिख्यते ॥

7 पञ्चलक्षणकाल्लिङ्गात् गृहीतान्नियमे स्मृतेः ।
परोक्षे लिङ्गिनि ज्ञानं अनुमानं प्रचक्षते ॥
व्याप्तिज्ञानं तु करणं फलं ह्यनुमितिर्मता ।
व्यापारस्तु परामर्शः जन्योऽपि जनकोऽपि सः ॥
असाधारणहेतुर्यः करणं तदिहेष्यते ।
व्यापारवत्त्वं तस्येष्टमित्याहुर्नव्यतार्किकाः ॥
प्राचीनाः ज्ञायमानं तु लिङ्गं करणमूचिरे ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥
इति नव्या दोषमाहुः समाधिस्तत्रचेरितः ।
अनागतादिलिङ्गेनानागतादेर्भवेद्धि सा ॥
व्याप्यत्वेन ज्ञायमानं हेतुत्वेनाभ्युपेयते ।
न धूलीपटलज्ञानादपि सा नोपपद्यते ॥
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
संबन्धग्रहवेलायां प्रथमं लिङ्गदर्शनम् ॥
या पक्षधर्मता सैव द्वितीयं लिङ्गदर्शनम् ।
परामर्शस्तृतीयं स्यात् तेनानुमितिसंभवः ॥

व्याप्तिस्मृतेः पक्षधर्मज्ञानाच्चानुमितिर्भवेत् ।
न विशिष्टपरामर्शादिति प्राभाकरा विदुः ॥
अख्यातिवादभङ्गायान्यथाख्यातिप्रसिद्धये ।
विशिष्टज्ञानजन्यत्वं साध्यते युक्तिवेदिभिः ॥
भेदाग्रहो हि गुरुभिः भ्रमस्थानेऽभिषिच्यते ।
वह्निव्याप्यो धूम एष ह्रद इत्यादिसंविदोः ॥
भेदाग्रहाच्चेदनुमा साऽन्यथाख्यातिरेव हि ।
विशिष्टबुद्धिः हेतुश्चेत् अयोगोलं च वह्निमत् ॥
इत्याद्यनुमितेर्हेतुः धूमधीरन्यथैव सा ।
सेयं चोभयतःपाशा रज्जुरित्यस्ति धीः भ्रमः ॥
सामान्यव्याप्तिसहितपक्षधर्मत्वधीबलात् ।
सामान्ये पक्षनिष्ठत्वं विशेषः किल साध्यते ॥
साध्यस्य संशयः पक्षतेति प्राचीनलक्षणम् ।
साधनेच्छाशून्यसिद्धेरभावो नव्यलक्षणम् ॥
धूमस्य पक्षता कैश्चित्प्राचीनैरुपवर्णिता ।
धूमोऽग्निमान् पाण्डुतादिविलक्षणगुणादिति ॥
जीमूताः वृष्टिमन्तः स्युः औन्नत्यादिगुणात्तथा ।
कुमारिलोऽप्यन्ववादीदित्थं हि श्लोकवार्तिके ॥
तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात्प्रमेयता ।
सा देशस्याग्नियुक्तस्य, धूमस्यान्यैश्च कल्पिता ॥

8 शाक्यास्तु सविकल्पस्य प्रत्यक्षत्वं न मन्वते ।
एतेषामनुमानादेरुत्पत्तिर्नैव सिध्यति ॥
सति भावो न कार्यत्वं किंतु सत्येव भाविता ।
तस्माच्चेदविनाभावः स्यादात्माश्रयणं ध्रुवम् ॥
प्रमातुः शिंशपात्वं तु यस्य प्रत्यक्षगोचरः ।
परोक्षं तस्य वृक्षत्वमिति नातीव लौकिकम् ॥
कार्यकारणभावोऽपि क्षणयोर्नैव संभवी ।
संभवन्नपि दुर्लक्षः तन्न हेतुरसावपि ॥
सोपाधिका चेदाशङ्का स्यादुपाधिविधूननात् ।
निर्धुतैव भवेत्तेनोपाधितत्त्वं विमृश्यताम् ॥

## (76) उपाधिवादः.

1 साध्येन च समं व्याप्तः साधनाव्यापकश्च यः ।
स उपाधिरिति ह्याहोदयनो न्यायदेशिकः ॥
सिषाधयिषिते शब्दानित्यत्वे हि विशेषणैः ।
घटत्वमश्रावणत्वं सकर्तृत्वं च वार्यते ॥
वह्नौ साध्ये निवार्यन्ते तथैवैतैर्विशेषणैः ।
महानसत्वाद्रव्यत्वतत्सामग्र्य इति क्रमात् ॥
2 साध्यस्य साधनस्यापि व्यापकोऽव्यापकः क्रमात् ।
उपाधिरिति वादीन्द्रः प्राह शंकरकिंकरः ॥

3 उपाधिशब्दप्रवृत्तिनिमित्तमिदमुच्यते ।
अन्यत्र वस्तुनि स्वीयधर्मस्यारोपहेतुता ॥
जपाद्युपाधिः स्फटिकारुण्यबुद्धेर्हि तादृशः ।
दर्पणो मुखमालिन्यबुद्धेश्चोपाधिरिष्यते ॥
तथा स्वधर्मभूतायाः व्याप्तेः बुद्धिं करोति या ।
मैत्रीसुतत्वे हेतौ सा शाकपाकजता मता ॥
निरुपाधिकसंबन्धरूपव्याप्तिपरिग्रहात् ।
उपाधिशब्दाभिधेयापरित्यागेन दूषणे ॥
तात्पर्यं समशब्दस्य प्रयोक्तॄणां प्रतीयते ।
इतरेषां तु तात्पर्यमेतदध्यवसीयते ॥
व्यापकस्य निवृत्त्यैव व्याप्यं हि विनिवर्तते ।
पक्षे साध्यस्य बाधेनोपाधेर्दूषणता मता ॥
व्यर्थस्स्यात्समशब्दस्य प्रयोग इति निर्णयः ।
4 व्यभिचारोन्नायकत्वेनोपाधेर्दूषकात्मता ॥
नव्यनैयायिकैरुक्ता सा किंचिदुपदर्श्यते ।
हेतुस्त्वसौ साध्यव्यापकोपाधिव्यभिचारतः ॥
साध्येन व्यभिचारी स्यात् यदित्थं तत्तथेष्यते ।
एवं सामान्यमुखतः दोषस्योन्नयनं विदुः ॥
5 स उपाधिश्शङ्कितश्च निश्चितश्चेति च द्विधा ।
योग्यं चायोग्यमिति च द्वयं चोभयथा मतम् ॥

योग्यं योग्यानुपलब्ध्याऽयोग्यं तर्केण धूयते ।
भूयोदर्शनतश्शक्या दृश्योपाधेः निराक्रिया ॥
अदृश्योपाधिशङ्का तु तर्कैरिति विदुः परे ।
उपाधित्वेन शङ्क्यस्य संबन्धो निरुपाधिकः ॥
अन्यथोपाधिता नास्ति तद्वदन्यत्र गृह्यताम् ।
अप्रयोजकताहेतुरुपाधिरिति निर्णयः ॥
यत्रानुकूलतर्कस्यासंभवस्सोऽप्रयोजकः ।
6 नोपाधिः पक्षतोऽन्यत्वं साधनं च विपक्षतः ॥
बाधनं न सपक्षेभ्यः सर्वानुमितिबाधनात् ।
पक्षाद्भेदः विपक्षाच्च भेदः भेदः सपक्षतः ॥
नोपाधिर्न च हेतुस्स्यात्प्रतिरोधो नचैव हि ।
नोपाधिरिति पद्यस्य फलितार्थस्त्वसौ स्थितः ॥
भूयोदर्शनतो व्याप्तिग्रहो न्यायविदीरितः ।
सकृद्दर्शनतो व्याप्तिग्रहस्स्यादेकदेशिनाम् ॥
7 व्याप्त्यङ्गीकरणेऽनिष्टव्यापकस्य प्रसञ्जनम् ।
तर्कस्स चोभयविधविषयोपेत इष्यते ॥
प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहः ।
एष चात्माश्रयान्योन्याश्रयचक्रकभेदतः ॥
प्रतिबन्ध्यनवस्था च तथाऽनिष्टप्रसञ्जनम् ।
इत्येवंभेदतश्चापि प्रोक्तः षड्धा च पञ्चधा ॥

व्याप्तिः तर्काप्रतिहतिः अवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥
गौरवं लाघवं चेति तर्कः सार्वत्रिकावुभौ ।
गौरवं कल्पनाधिक्यं लाघवं त्वल्पकल्पना ॥
तर्कशब्दं पुनः केचिदनुमाने प्रयुञ्जते ।
अनुमानविशेषोऽयमिति केचित्प्रचक्षते ॥
सहकार्यनुमानस्य मानस्येति विदुः परे ।
तर्कः पृथक् मानमिति प्राहुर्जैनविपश्चितः ॥
8 व्याघातपर्यवसितं सर्वं दूषणमिष्यते ।
उपलम्भे त्ववसितं सर्वं साधनमुच्यते ॥

## (77) लिङ्गविचारः.

1 लिङ्गं व्याप्यं च हेतुश्चोपपत्तिर्युक्तिरेवच ।
साधनं स्थापना चेति पर्याय इति निर्णयः ॥
अन्यथाऽनुपपत्त्येकलक्षणं लिङ्गमिष्यते ।
पित्रोश्च ब्राह्मणत्वेन पुत्रब्राह्मणताऽनुमा ॥
सर्वलोकप्रसिद्धा न पक्षधर्ममपेक्षते ।
प्रयोगपरिपाटी तु प्रतिपाद्यानुसारतः ॥
प्रतिज्ञा हेतुरेवेति द्वयस्यैव प्रयोज्यता ।
व्युत्पादनाय मन्दानां दृष्टान्तादेरपीष्यते ॥

2 इत्यार्हतानां सिद्धान्तः ह्यथ वेदान्तिभिः परैः ।
व्याप्तिश्च पक्षधर्मत्वं उभयं लिङ्गलक्षणम् ॥
व्याप्त्यभावे पुनर्व्याप्यत्वासिद्धिरिति निश्चिता ।
पक्षधर्मत्वस्य हानौ स्वरूपासिद्धिरिष्यते ॥
अव्याप्तापक्षधर्मौ द्वौ हेत्वाभासौ समासतः ।
तयोरेव प्रपञ्चेन स्यादसिद्ध्यादिकल्पना ॥
इति न्यायपरीशुद्धिकारसिद्धान्तसंग्रहः ।
व्याप्तिस्तथा समुचितदेशवृत्तित्वमेवच ॥
द्वयं प्रमाणपद्धत्यां लिङ्गरूपं निरूपितम् ।
3 अथ त्रिलक्षणविदामेतद्वात्सीभुवां मतम् ॥
पक्षे सत्त्वं सपक्षे च सत्त्वं चैव विपक्षतः ।
व्यावृत्तत्वमिति त्रीणि लिङ्गरूपाणि ते विदुः ॥
हेत्वाभासा अपि ततस्त्रय एव हि तन्मताः ।
आभासोपि हि सर्वत्र स्वस्वरूपविपर्ययः ॥
4 पञ्चलक्षणकं लिङ्गमाहुर्न्यायविदः पुनः ।
पक्षे सत्त्वं सपक्षे च सत्त्वमेवं विपक्षतः ॥
व्यावृत्तत्वं तथैवासत्प्रतिपक्षत्वमेव च ।
अबाधितत्वमित्येतदत्र लक्षणपञ्चकम् ॥
5 एकैकापायतस्तेषां हेत्वाभासास्तु पञ्चधा ।
अत्रार्हतस्याक्षेपोऽयं देवसूरेर्निशम्यताम् ॥

अज्ञातस्य हि लिङ्गस्य हेतुता न च कस्यचित् ।
प्रसज्यते तार्किकाणां ज्ञातत्वमधिकं ततः ॥
हेतोश्च ज्ञापकत्वेन ज्ञातत्वं यदि लभ्यते ।
विपक्षव्यावृत्तिमात्रादबाधोप्यत्र लभ्यते ॥
अन्यथानुपपत्त्येकरूपस्यैतत्प्रपञ्चनम् ।
षड्रूपता तथा पञ्चरूपता वा त्रिरूपता ॥
6 यन्नयायपरिशुद्ध्युक्तमन्यथारूपपञ्चकम् ।
तदप्यत्रावधातव्यं प्रक्रियामात्रभेदतः ॥
असिद्धार्थत्वं च साध्यज्ञापनाय प्रवृत्तता ।
विशिष्यानास्कन्दितता व्याप्तिग्राहकमानतः ॥
संदिह्यमानविषयवत्ता व्यक्तिविभिन्नता ।
पक्षस्थहेतुव्यक्तौ स्यादित्येतद्रूपपञ्चकम् ॥
दृष्टान्तव्यक्तिवृत्तौ तु हेतौ तेषां विपर्ययः ।
सिद्धार्थत्वादिकं रूपपञ्चकं तत्र शाश्वतम् ॥
ततश्च दश रूपाणि सद्धेतोरसतः पुनः ।
न्यूनानीति विदुर्धीराः व्यासाभिरुचयस्तु ते ॥
7 लिङ्गं तु त्रिविधं कार्यस्वभावानुपलब्धयः ।
इति वैभाषिकाः प्राहुरिति सर्वत्र विश्रुतम् ॥
पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः ।
अविनाभावनियमात् हेत्वाभासास्ततोऽपरे ॥

हेतुबिन्दुवचस्त्वेतत्कीर्तितं धर्मकीर्तिना ।
स एव भिक्षुः बहुधा कुमारिलहृदिस्थितः ॥
यद्यप्यनुपलब्धिस्सा स्वभावान्तर्निपातिनी ।
तथापि प्रतिषेधस्य साधनात्पृथगुच्यते ॥
सा चैकादशधेत्येके परे षोडशधेति च ।
प्राहुर्विभागवैचित्र्यात् पृथक्कृतिफलं न्विदम् ॥
तथा प्रसङ्गानुमानं तद्विपर्यय इत्यपि ।
विभागोऽस्ति तदर्थं तु वक्तीत्थं किरणावली ॥
तत्स्वभावानुमानं यत् प्रसङ्ग इति कथ्यते ।
व्यापकानुपलब्धिर्या स विपर्यय इष्यते ॥
8 मात्रानिमित्तसंयोगिविरोधिसहचारिभिः ।
स्वस्वामिवध्यघाताद्यैः सांख्यानां सप्तधाऽनुमा ॥
9 अस्येदं कारणं कार्यं संबन्ध्येकार्थयोगिता ।
विरोधि लैङ्गिकमिति चतुर्धा कणभोजिनाम् ॥
10 इति वाचस्पतिः प्राह नैयायिकमते पुनः ।
पूर्ववच्छेषवच्चैव दृष्टं सामान्यतस्त्रिधा ॥
इत्यक्षपादसूत्रोक्तं कार्यं कारणमेवच ।
अकार्यकारणं चेति तस्यार्थः कैश्चिदिष्यते ॥
11 तथैव शाबरे भाष्ये त्वौपवर्षं द्विधेरितम् ।
यथा प्रत्यक्षतोदृष्टसंबन्धं प्रथमं मतम् ॥

परं सामान्यतोदृष्टसंबन्धामिति कीर्तितम् ।
विशेषतोदृष्टमेव प्रत्यक्षत इतीर्यते ॥
सामान्यतोदृष्टमेव स्याद्वैभाषिकसम्मतम् ।
परोक्षमानं सामान्यगोचरन्विति तन्मतम् ॥
वैशेषिकादयस्तत्र त्वित्थं व्यवहरन्ति हि ।
दृष्टं चादृष्टमिति च शब्दमात्रप्रभेदतः ॥
12 सामान्यतोदृष्टमेव द्वितीयमिह कथ्यते ।
तदेव परिशेषानुमानं व्याख्यातृसम्मतम् ॥
क्रियादिविषयादृष्टस्वलक्षणमितीतरे ।
दृष्टस्वलक्षणं सर्वमिति केचित् विदुः परे ॥
तेन सामान्यतोदृष्टं दृष्टं चापि विशेषतः ।
इति द्विधाऽनुमानं स्यादितरेषां विपश्चिताम् ॥
सास्नया गोर्हि विज्ञानं दृष्टमित्यभिधीयते ।
अत्यन्तजात्यभेदेऽपिचानुमानं तदिष्यते ॥
अत्यन्तजातिभेदे तु दृष्टं सामान्यतो मतम् ।
यथा प्रवृत्तिस्सफला वणिक्कर्षकभूभुजाम् ॥
तथा वर्णाश्रमवतां दृष्टार्थानभिलाषिणाम् ।
इति प्रशस्तपादेन द्वयमेतदुदाहृतम् ॥
दृष्टं वह्न्यादिकं तत्रादृष्टं कर्मादिकं त्विति ।
अनुमानप्रमेयं च द्विविधं गुरवो विदुः ॥

विशेषविषयं त्वाद्यं परं सामान्यगोचरम् ।
नातीन्द्रियेऽनुमानं स्यादिति कौमारिलं मतम् ॥
प्रत्यक्षदृष्टसंबन्धं ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥
तद्देशस्थेन धूमेन तत्र कालान्तरे पुनः ।
यदाऽग्निर्बुध्यते पुंसा विशेषविषयं तु तत् ॥
संदिह्यमानसद्भाववस्तुबोधात्प्रमाणता ।
विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥
प्राप्तिसामान्येन यत्र गतिसामान्यधीर्भवेत् ।
आदित्यादौ तत्र दृष्टं सामान्यमिति वार्तिकम् ॥
अर्थापत्त्यैव शक्त्यादेस्सिद्धिमेते विदुर्बुधाः ।
अनुमानेन शक्त्यादेस्सिद्धिं प्राभाकरा विदुः ॥
तेनेश्वराद्यसिद्धौ तु वेदस्यापौरुषेयता ।
निराबाधेति हृदयं कौमारिलमिति स्थितम् ॥
13 सांख्यास्सामान्यतोदृष्टमतीन्द्रियपदं विदुः ।
तेन क्रिया सकरणिकेतीन्द्रियं साधयन्ति ते ॥
अनुमानं पुनस्सामान्यावधारणलक्षणम् ।
यथादेशान्तरप्राप्तेर्गतिमच्चन्द्रतारकम् ॥
प्रत्यक्षं तु विशेषस्य प्राधान्येनावधारणा ।
इति पातञ्जले योगभाष्येऽप्येतद्विवेचितम् ॥

14 नैयायिकानां व्याख्यानमित्थमत्रावधार्यते ।
वह्न्यादिकं विशेषेण दृष्टमित्यभिधीयते ॥
रूपाद्रसानुमानं तु दृष्टं सामान्यतो मतम् ।
शृङ्गाद्द्विशफवत्त्वं वा सामान्येनावधार्यते ॥
परिशेषानुमानं वा सामान्यत इतीर्यते ।
अथवाऽतीन्द्रियं वस्तु सामान्यविषयं मतम् ॥
अतीन्द्रियानुमानस्य परिशेषानुमानतः ।
विशेषः कथितः सूक्ष्मः जयन्तेन स उच्यते ॥
इच्छादिकं शरीरादिविलक्षणसमाश्रयम् ।
शरीरादिषु बाधायां कार्यत्वादिति तत्क्रमः ॥
परिशेषानुमानस्य प्रवृत्तिक्रम एष हि ।
इच्छादेर्नाश्रयो देहः प्रसक्तोऽन्योऽपि नाश्रयः ॥
इत्येवं प्रतिषेधेन शिष्यमाणस्तदाश्रयः ।
इत्थं विशेषमालक्ष्य द्विधा व्याख्यत्स पक्षिलः ॥
15 अथौपनिषदानां तु व्याससूत्रावलम्बिनाम् ।
अभिप्रायस्त्वसौ न्यायपरिशुद्धौ प्रकाशितः ॥
विशेषतोदृष्टमेतद्विशेषानुगमे सति ।
भवेत्सामान्यतोदृष्टं सामान्यानुगमे सति ॥
अस्मदध्यक्षयोग्यार्थानुमानं स्याद्विशेषतः ।
तदयोग्यार्थानुमानं आहुस्सामान्यतः बुधाः ॥

तेनेन्दुपरभागादिसिद्धिः शैलापरान्तवत् ।
व्यक्तेरैक्येऽपिवा देशकालावस्थाभिदावशात् ॥
शृङ्गाच्छैलः स्वरात्पुत्रः रोहिणी कृत्तिकोदयात् ।
विशेषतोदृष्टमेतत् परं धूमादिकं भवेत् ॥
एतेऽतीन्द्रियवस्तूनां शास्त्रतस्सिद्धिवादिनः ।
बादरायणसिद्धान्तशास्त्रयोनिनये स्थितः ॥
भवन्तं च भविष्यन्तं भूतं व्यवहितं तथा ।
सूक्ष्मं च विप्रकृष्टं चेत्येतंजातीयकं तथा ॥
वेदो बोधयितुं शक्तः नान्यादित्यस्ति शाबरम् ।
तदयुक्तं ततश्चानुमानं त्रैकाल्यगोचरम् ॥
सर्वार्थविषयं चेति न्यायवित्प्रवरोदितम् ।
विवादोऽयमनादिस्स्यात् उक्तियुक्तयोः परस्परम् ॥

16 स्वार्थं परार्थमिति च द्विविधं हि विभज्यते ।
नैयायिकैः तत्र दोषमिममाहुः परे बुधाः ॥
सर्वाणि चानुमानानि स्वानुसंधानशक्तितः ।
प्रवृत्तानि स्वव्यवहृतिसाधनानीति हि स्थितम् ॥
चेद्विभज्य च वक्तव्यमेवं वक्तुं हि साम्प्रतम् ।
स्वयंसिद्धं चान्यवाक्यपूर्वकं चेति भेदतः ॥
स्वार्थं परार्थमिति हि प्रत्यक्षादावपीष्यताम् ।
दोषज्ञाः सूक्ष्ममतयः श्रोतारो नहि केवलम् ॥

नचापूर्वास्तीर्थकराः न भवन्तीति निर्णयः ।
तथात्वे प्रथमैकान्तपरिशेषः प्रसज्यते ॥

(78) व्याप्तिः.

1 अथ व्याप्तिपदार्थीयविकल्पस्यापि संग्रहः ।
तत्प्रमाणविकल्पोऽपि संग्रहादिह सूच्यते ॥
अविनाभावनियमः व्याप्तिस्सौगतसम्मता ।
सा च साध्यवदन्यस्मिन्नसंबन्धो निरुच्यते ॥
व्यतिरेकस्सुग्रहस्स्याद्दुर्ग्रहो यावदन्वयः ।
अतएवाविनाभाव इत्युक्तिः व्यतिरेकतः ॥
व्यतिरेकव्याप्तिरेवानुमानाङ्गतया मता ।
वैधर्म्यतश्च दृष्टान्तः विपक्षाद्विनिवृत्तये ॥
कार्यकारणभावो वा स्वभावो वाऽत्र गृह्यते ।
व्याप्तिग्रहोपायतया तैर्बौद्धैरिति निर्णयः ॥

2 नैयायिकैस्साहचर्यनियमो व्याप्तिरिष्यते ।
तच्च व्यापकसामानाधिकरण्यमितीर्यते ॥
साहचर्यं चान्वयतः तथैव व्यतिरेकतः ।
द्वेधाऽपि सम्मतं तेन लिङ्गं त्रिविधमुच्यते ॥
साहचर्येऽत्र घटकः संबन्धः बहुधा मतः ।
नौलूक्यवच्चतुर्धैव सांख्यवन्नापि सप्तधा ॥

इयानेव विशेषोऽत्र भावयोर्यादृशी ययोः ।
व्याप्यव्यापकता सैव व्यत्यस्ता तदभावयोः ॥
अग्नेर्भावस्य भूयस्त्वात्तदभावोऽल्पतां व्रजेत् ।
धूमभावस्य चाल्पत्वात् तदभावो महत्तरः ॥
व्यभिचारज्ञानशून्यसहचारस्य दर्शनम् ।
हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥
यावतीनां साध्यहेतुव्यक्तीनां स्यादलौकिकम् ।
सामान्यलक्षणासत्त्या सहचारस्य दर्शनम् ॥
3 मीमांसकानां सिद्धान्ते व्याप्तितत्त्वमिदं मतम् ।
व्याप्तिर्हि नियमः कश्चित् संबन्धोऽस्ति विलक्षणः
संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना ।
व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ॥
यो यस्य देशकालाभ्यां समो न्यूनोऽपिवा भवेत् ।
स व्याप्यः व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा
येन केनापि संबन्धेनैष क्वापि नियम्यते ।
स एव लिङ्गधर्मस्य लिङ्गता समुदाहृता ॥
तथा च नियमाख्यो यस्संबन्धो व्याप्तिलक्षणः ।
तदभावादागमोऽपि प्रमाणं स्याद्विलक्षणम् ॥
व्याप्तिस्सपक्षदृष्टैवानुमानाङ्गतया मता ।
सर्वदेशव्याप्तिरत्र दुर्ग्रहैव विपश्चिताम् ॥

भूयोदर्शनगम्या च व्याप्तिस्सामान्यधर्मयोः ।
क्वचिच्च कृत्तिकारोहिण्याद्ययोर्हि विशेषयोः ॥
कैश्चित् यावद्देशकालव्याप्तिधीरङ्गमिष्यते ।
मानं मृगयमाणाश्च प्रत्यक्षं तत्सकृद्विदुः ॥
बालोऽपि दीपकलिकास्पर्शाद्वेत्ति तथा सकृत् ।
योगिप्रत्यक्षतुल्यं तन्मानसं केचिदब्रुवन् ॥
भूयोदर्शनसंजातसंस्कारसचिवं पुनः ।
प्रत्यक्षं चरमं व्याप्तौ मानं केचित्प्रचक्षते ॥
यत्रयत्र भवेद्धूमः तत्रतत्राग्निरित्यसौ ।
यस्स्यादवगमः स्सोऽयं परोक्षो ह्यानुमानिकः ॥
इति कौमारिलाः प्राहुः नाङ्गं यावन्मतिस्ततः ।
अन्वयो व्यतिरेकश्च यथासंभवमिष्यते ॥
नियम्यत्वनियन्तृत्वे भावयोर्यादृशी मते ।
ते एव विपरीते तु विज्ञेये तदभावयोः ॥
गमकस्यैकदेशस्य व्याप्तिं गम्येन भाषितुम् ।
साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ॥
तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ।
उद्देश्यो व्याप्यते धर्मः व्यापकश्चोत्तरो मतः ॥
यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥

उद्देश्यतावच्छेदकव्यापकत्वं हि भासते ।
विधेयस्येत्येतदेव विवृतं नव्यतार्किकैः ॥
साध्येन साधनस्याथ व्याप्तिमन्ये प्रचक्षते ।
व्याप्तिरावृत्तिरेषा स्यादथवाऽधिकदेशता ॥
भूमौ प्रतिष्ठितो वह्निः धूमाग्रं व्योमन्यवस्थितम् ।
व्याप्नोति कथमित्यत्र प्रत्यवस्थीयते परैः ॥
4 निरुपाधिकसंबन्धो व्याप्तिरित्यपरे विदुः ।
उपाधिस्साधनाव्याप्तिसाध्यव्याप्त्यादिगर्भितः ॥
तत्रोपाधिव्याप्तिवस्तुनिर्णयेऽन्योन्यसंश्रयः ।
तत्रचेत्थं समाधानं परिशुद्धावुदीरितम् ॥
यो यावत्साध्यदेशस्थः न यावद्धेतुदेशगः ।
स उपाधिरिति ज्ञानान्न दोष इति निश्चितम् ॥
5 अन्तर्व्याप्तिः बहिर्व्याप्तिरिति व्याप्तिर्द्विधा मता ।
सिषाधयिषितव्यक्तिव्याप्तिरन्तरितीर्यते ॥
बहिः व्यक्त्यन्तरव्याप्तिरिति ह्यार्हतनिर्णयः ।
पक्षे व्याप्तिर्भवेदन्तः त्वन्यत्र बहिरिष्यते ॥
इति प्रमाणतत्त्वेऽपि विस्तृतं देवसूरिणा ।
विशेषव्याप्तिरन्तः स्यात् बहिस्समान्यतो भवेत् ॥
वृथा विभाग इत्याहुः विबुधा न्यायवेदिनः ।
व्यतिरेकव्याप्तिबुद्ध्याऽप्यन्वयव्याप्तिरेव हि ॥

अवधार्येत सैव स्यादनुमाङ्गमितीतरे ।
इत्थं व्याप्तिविकल्पोऽयं संक्षेपादिह सूचितः ॥
6 अथ साधर्म्यवैधर्म्यविचारे किंचिदुच्यते ।
शाक्या वैधर्म्यवचनं पाक्षिकं नैव सेहिरे ॥
वैधर्म्यमेव वक्तव्यं सर्वदेत्यप्यवादिषुः ।
धूमत्वं नाम सामान्यं न वस्तु परमार्थतः ॥
अस्तु वाऽथापि साधर्म्यं न वक्तुमिह शक्यते ।
अशेषदेशकालेषु दुर्ग्रहः शिखिनोऽन्वयः ॥
विपक्षव्यतिरेकस्तु सुज्ञानः स्याददर्शनात् ।
सुकरं चैकदेशस्थैर्नैवानग्निष्वदर्शनम् ॥
तस्माद्धूमो ह्यनग्निभ्यो रिच्यमानोऽवबोधकः ।
अनग्निव्यावृत्तिमुखादग्नेरिह विनिश्चयः ॥
अतद्व्यावृत्तिविषयौ लिङ्गशब्दावतो मतौ ।
अत्र प्रत्युक्तिरेषा स्यादपोहश्लोकवार्तिकम् ॥
न चादर्शनमात्रेण ताभ्यां प्रत्यायनं भवेत् ।
सर्वत्रेव ह्यदृष्टत्वात्प्रत्याय्यं नावशिष्यते ॥
अस्य चायमभिप्रायस्संग्रहात्प्रतिपाद्यते ।
विपक्षादर्शनं त्वत्रादर्शनस्वनशब्दितम् ॥
प्रत्यायनं पुनरतद्व्यावृत्तिविषयं मतम् ।
तच्छब्दार्थौ लिङ्गशब्दौ तन्नापोहमतिः क्वचित् ॥

अन्वयस्य सपक्षेऽपि विपक्षवददर्शनात् ।
द्वाभ्यां च व्यावृत्त एषः धूमस्संशायको भवेत् ॥
तथाचापोहरूपार्थो लोके नैव प्रसिद्ध्यति ।
अतोऽन्वयोऽप्यङ्गमिति स्वीकर्तुमुचितं बुधैः ॥
अन्वयस्य क्वचिद्दृष्टौ ह्यतद्व्यावृत्तिनिश्चयः ।
यत्तु सर्वत्रान्वयोऽयं दुर्ग्रहस्स्यादितीरितम् ॥
तत्तुल्यं व्यतिरेकेऽपि नैषोऽदर्शनमात्रतः ।
किन्तु दृश्यादर्शनतः, एकदेशास्थितस्य तु ॥
न कदाचिद्धि सर्वत्र दृश्यादर्शनसंभवः ।
तेन सर्वत्रान्वयेऽथ व्यतिरेके च सर्वतः ॥
अविज्ञातेऽपि बहुशः साहित्यावगमात्पुनः ।
व्यभिचारादर्शनेन सनाथादनुमोदयः ॥
सर्वैरभ्युपगन्तव्यः एवं शब्देऽपि दृश्यताम् ।
तद्वस्तुविषयौ लिङ्गशब्दौ नापोहगोचरौ ॥
अपोहवार्तिकश्लोकभाव एवं निरूपितः ।
7 अन्वयव्यतिरेकी च तथा स्यात्केवलान्वयी ॥
केवलव्यतिरेकी च हेतुः व्याप्तिप्रभेदतः ।
अतस्त्रिधाऽनुमानं स्यादिति न्यायविदां मतम् ॥
कौमारिलाद्याः नेच्छन्ति हेतुं तं व्यतिरेकिणम् ।
तथा वादीन्द्रादयश्च नेच्छन्त्यन्वयिनं पुनः ॥

अन्वयव्यतिरेक्येकहेतुमात्रविदस्ति चेत् ।
तृतीयश्शोभते पन्थाः स च द्वावपि दूषयेत् ॥
नैयायिकास्तु तान्सर्वान् दूषयेयुः महाधियः ।
अत्रायमभिसंधिस्स्यात् केवलव्यतिरेकिणः ॥
निरासे वेदविदुषां न्यायशुद्ध्यादिसूचितः ।
हैतुकास्साधयन्त्यत्र केवलव्यतिरेकिणा ॥
यद्यदिच्छन्ति तत्सर्वं स चादौ भज्यते यदि ।
त्र्यंशोऽवरोपितो भारो भवेद्धैतुकभञ्जने ॥
प्रमाणवादारम्भे च तद्विस्तर उदीरितः ।
साध्याप्रसिद्धिः वैषम्यं व्यर्थतोपनयस्य च ॥
अन्वयेनैव सिद्धिश्च व्यतिरेकिणि दूषणम् ।
तत्स्थाने ह्यभिषिञ्चन्ति पञ्चमीं प्रमितिं तु ते ॥
व्यतिरेकव्याप्तिबुद्ध्या साऽन्यथाऽकारि तार्किकैः ।
यच्चानुकूलतर्के सत्यप्रसिद्धविशेषणः ॥
न दोष इति भाषन्ते तार्किकाः तदसंगतम् ।
तर्को हि नाप्रसिद्धार्थे क्वचित्साधयितुं क्षमः ॥
अतोऽप्रसिद्धतादोषः तर्के सत्यपि दुस्त्यजः ।
केवलव्यतिरेकी च स क्वचिद्भावगोचरः ॥
अभावगोचरश्चेति द्विविधो विबुधैर्मतः ।
गौरिति व्यवहर्तव्य इति स्याद्भावगोचरः ॥

इतरेभ्यो भिद्यत इत्यभावविषयो मतः ।
व्यावृत्तिर्व्यवहारश्च लक्षणस्य प्रयोजनम् ॥
इति व्यवहृतिः प्राचां विदुषां तन्निबन्धना ।
8 केवलान्वयिहेतुश्च सम्मतो न्यायवेदिभिः ॥
अत एवाविनाभावः दुर्ग्रहः तत्र कथ्यते ।
धर्मादयः प्रमेयत्वात् प्रत्यक्षाः कस्यचित्त्विति ॥
उदाहरन्ति न्यायज्ञाः केवलान्वयिनं क्वचित् ।
इदं वाच्यं ज्ञेयतयेत्यपि क्वापि प्रयुज्यते ॥
तद्दूषयति वादीन्द्रः समाधिस्तत्र हि श्रुतः ।
वाच्यत्वं ज्ञायते चैवं ज्ञेयत्वमभिधीयते ॥
विरोधो व्यक्तिभेदेन यथावदुपशाम्यति ।
वाच्यत्वेऽपि च वाच्यत्वं ज्ञेयत्वे ज्ञेयता तथा ॥
व्यक्तिभेदाद्विरोधस्य शान्तिः बीजाङ्कुरादिवत् ।
नात्माश्रयप्रसक्तिर्वा नान्योन्याश्रयताऽपि वा ॥
प्रमेयत्वाभिधेयत्वप्रसङ्गे इति निर्णयः ।
तथापि विफलं त्वेतदिति केचन जानते ॥
इदं प्रयोजनं ज्ञेयं तत्त्वमुक्ताकलापतः ।
यतो वाचो निवर्तन्त इति श्रुत्येकदेशिनाम् ॥
सद्विवर्तविदां मार्गनिरोधः प्रथमं फलम् ।
दुस्साधं क्वचिदप्येवमवाच्यत्वादि चेत्तदा ॥

किं पुनस्सर्ववचसां प्रतिष्ठा यत्र तत्रतु ।
9 महाविद्या नाम कश्चिद्धेतुः वादीन्द्रसम्मतः ॥
स केवलान्वयी यावत्सपक्षेषु स्थितो मतः ।
महाविद्यासूत्रकर्ता यः कुलार्काभिधो बुधः ॥
महाविद्याप्रवीणश्च शिवादित्याभिधो बुधः ।
तस्यास्ति किंचिद्व्याख्यानं महाविद्याविडम्बनम् ॥
तस्य प्रणेता वादीन्द्रः यस्स्याच्छङ्करकिङ्करः ।
विवादाध्यासितं स्वस्वेतरवृत्तित्ववर्जितः ॥
यस्सकर्तृकानिष्ठस्स्यात्तस्याधिकरणं भवेत् ।
प्रमेयत्वात्कलशवत् इत्यादिः केवलान्वयी ॥
एतेन क्षित्यङ्कुरादेस्स्यात्सकर्तृकताति च ।
तर्कानुकूल्यतस्तत्र बलाबलविनिर्णयः ॥
इति प्राचीनसिद्धान्ताः प्रायस्संगृह्य दर्शिताः ।
वेदान्तसूरिभिर्न्यायपरिशुद्धाविति स्थितम् ॥

(79) अनुमेयवादः

1 न्यायवार्तिकतात्पर्यटीकायां कारिका इमाः ।
दिङ्नागकथिताः वाचस्पतिमिश्रैरुदाहृताः ॥
केचिद्धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः ।
संबन्धं केचिदिच्छन्ति सिद्धत्वाद्धर्मधर्मिणोः ॥

लिङ्गं धर्मे प्रसिद्धं चेत् किमन्यत्तेन मीयते ।
अथ धर्मिणि तस्यैव किमर्थं नानुमेयता ॥
संबन्धेऽपि द्वयं नास्ति षष्ठी श्रूयेत तद्वति ।
अवाच्योऽनुगृहीतत्वात् न चासौ लिङ्गसंगतः ॥
लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दृश्यते ।
तत्र प्रसिद्धं तद्युक्तं धर्मिणं गमयेदिति ॥

2 मीमांसकानां सिद्धान्ते त्वनुमेयमिदं मतम् ।
इदानीं पर्वते वह्निरस्तीत्यनुमितिः भवेत् ॥
देशकालानुरक्तस्य वह्नेः प्रागप्रसिद्धितः ।
सिद्धसाधनशङ्का तु वारितैवं कुमारिलैः ॥
पर्वतस्याग्निरस्तीति संबन्धोऽस्तीति वा तयोः ।
न हि प्रयुञ्जते धीराः संबन्धोऽतो न साध्यते ॥
तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता ।
तत्र धर्मी धूम एव प्राच्यतार्किकसम्मता ॥

3 गुरुभिस्त्वन्यथा तत्र निर्णीतं तत्प्रदर्श्यते ।
व्याप्तिग्रहणवेलायां धूमवत्त्यखिले स्थले ॥
वह्निमत्ताऽस्तीतिबुद्धेः प्रकृते पर्वते पुनः ।
धूमवत्त्वं ग्रहीतव्यं नच तेजस्विता पुनः ॥
सा हि पूर्वगृहीतैव संस्कारात्स्मर्यते तदा ।
प्रत्युत्पन्नानिदानोत्था संगतिस्त्वनुमा ततः ॥

4 सामान्यव्याप्तिसहितपक्षधर्मत्वधीबलात् ।
सामान्ये पक्षनिष्ठत्वं विशेषः न्यायविन्मतः ॥
अनुमेयं च मत्त्वर्थः नान्यशब्दार्थ इत्यतः ।
संबन्धसाध्यतापक्षाक्षेपास्सर्वे निवारिताः ॥
तस्माल्लोकायिताशङ्काः सर्वा अप्याकुलीकृताः ।
इति नैयायिकैकान्तः विश्रुतस्सर्ववादिनाम् ॥
स एव प्रायशस्सर्वैः स्वीकृतो नव्यसूरिभिः ।
निरूढतर्कसंस्कारः सुधियः प्रथमं यतः ॥

5 यत्सिषाधयिषन्त्यत्र तार्किकाः परमेश्वरम् ।
तत्रानुमाने यत्किंचित्प्रसङ्गादिह कथ्यते ॥
प्राधान्येनानुमानं तु त्रिविधं हीशसाधनम् ।
कार्यलिङ्गकमाद्यं स्यात् द्वितीयं वेदलिङ्गकम् ॥
अदृष्टलिङ्गकं चान्यत् विस्तरः कुसुमाञ्जलौ ।
वेदलिङ्गकमेवोपदेशलिङ्गकमुच्यते ॥
विवादाध्यासितं ह्येतत्कार्यत्वात्स्यात्सकर्तृकम् ।
कादाचित्कत्वतः कार्यं सर्ववित्कर्तृपूर्वकम् ॥
अन्वयव्यतिरेक्याद्यं द्वितीयं व्यतिरेकवत् ।
वेदवाक्यं कर्तृपूर्वं वाक्यत्वाद्भारतादिवत् ॥
वेदस्सर्वज्ञप्रणीतः वेदत्वात् व्यतिरेकयदः ।
अदृष्टं सकलं साक्षात्कर्तृधीमदधिष्ठितम् ॥

अचेतनत्वे च सति कार्यकारित्वतस्त्विति ।
अत्र दोषादोषचिन्ता प्रवृत्ता महती कथा ॥

(80) न्यायवादः

1 प्रतिज्ञा चापदेशश्च तथैव च निदर्शनम् ।
तथैव चानुसंधानं प्रत्याम्नायश्च पञ्चमः ॥

2 इति प्रशस्तपादोक्तमथ पक्षिलभाषितम् ।
प्रतिज्ञा च तथा हेतुरुदाहरणमित्यपि ॥
तथैवोपनयश्चापि भवेन्निगमनं ततः ।
जिज्ञासा संशयश्चैव शक्यप्राप्तिः प्रयोजनम् ॥
व्युदासस्संशयस्येति दशान्येऽवयवान्विदुः ।
प्रमाणसामर्थ्यबुद्धिः शक्यप्राप्तिरितीर्यते ॥
परे तु पञ्चावयवान् प्रतिज्ञादीन् प्रचक्षते ।
न्यायः परप्रत्ययार्थः वाच्यं यावदपेक्षितम् ॥
पञ्चावयवसंयुक्तमित्याहुरिह केचन ।
अत्रचावयवव्यूहे प्रमाणानि परस्परम् ॥
संभूयसंदिग्धमर्थं साधयन्तीति भाषितम् ।
शब्दः प्रतिज्ञाऽनुमानं हेतुः प्रत्यक्षमेव तत् ॥
उदाहरणमत्रोपमानं चोपनयो मतः ।
सर्वेषामुपसंहारो भवेन्निगमनं पुनः ॥

3 स्वाभिप्रायानुसारेण परः प्रत्याय्यते परैः ।
तत्र स्वप्रतिपत्तिर्हि क्रमेणैवं प्रजायते ॥
प्रथमं पर्वतोऽध्यक्षः कथ्यते स प्रतिज्ञया ।
ततो लिङ्गस्योपलब्ध्या हेतुना तन्निवेद्यते ॥
ततो व्याप्तिस्मृतिः साऽपि दृष्टान्तेनाभिधीयते ।
ततः परामर्शसिद्धिः स चोपनयवेदितः ॥
ततश्चानुमितिस्सैषा प्रोक्ता निगमनादिह ।
एवंच पञ्चावयवाः जयन्तेन निगुम्भिताः ॥

4 इति तार्किकसिद्धान्तं प्रायस्सर्वोऽनुमन्यते ।
अथ मीमांसकानां तु मते भेदः प्रदर्श्यते ॥
प्रतिज्ञया निगमनं हेतुनोपनयस्तथा ।
गतार्थ इति कः कुर्यात् पञ्चावयवघोषणाम् ॥
तदेवं पौनरुक्त्येन तथाऽध्याहारदोषतः ।
तर्कबौद्धमते हित्वा वयं त्र्यवयवे स्थिताः ॥
तत्तु पञ्चतयं केचित् द्वयमन्ये वयं त्रयम् ।
उदाहरणपर्यन्तं यद्वोद्राहरणादिकम् ॥

5 तथाचावयवद्वैधवादिभिस्सौगतैरिह ।
यत्सत्तत् क्षणिकं सन्तश्चामी भावा इतीर्यते ॥
तत्रोदाहरणं चोपनयश्चेति द्वयं मतम् ।
सूच्यन्ते नहि पाठ्यन्ते धीमन्तो वादिनः खलु ॥

पक्षस्य वचनं नाम प्रतिज्ञा स च दुर्वचः ।
ज्ञातव्ये पक्षधर्मत्वे पक्षो धर्म्यभिधीयते ॥
व्याप्तिकाले भवेद्धर्मः साध्यसिद्धौ पुनर्द्वयम् ।
तस्मान्नयाये प्रतिज्ञायाः प्रयोगो नेति जानते ॥
सपक्षः स्यात्समानोऽर्थः साध्यधर्मसद्त्त्ववतः ।
सपक्षलक्षणं त्वेतद्दिङ्नागविबुधोदितम् ॥
अनुमेयेऽथ तत्तुल्ये सद्भावः नास्तिताऽसति ।
इत्येवं धर्मकीर्तेश्च सपक्षविषयं वचः ॥
एवं स्थितेऽपि कैश्चित्तु बौद्धैः क्षणिकवादिभिः ।
सपक्षलक्षणं साध्यधर्मवत्त्वमितीरितम् ॥
ततश्च पक्ष एव स्यात्सपक्ष इति तन्मतम् ।
सत्त्वेन क्षणभङ्गानुमाने सर्वसपक्षता ॥
ततश्च पक्षवचनमनपेक्षितमुच्यते ।
तत्तु सर्वैरपि परैः विबुधैः प्रतिषिद्ध्यते ॥
6 प्रतिज्ञा हेतुरिति च द्वयमेवार्हता विदुः ।
मन्दबुद्धिविवेकाय दृष्टान्ताद्यपि कुत्रचित् ॥
7 नच शक्यं प्रतिज्ञातुं पक्षो नास्तीति केवलम् ।
एतत्प्रतिज्ञावाक्यार्थे पक्षोपगमसंभवात् ॥
तस्य चानभ्युपगमे न हि पक्षो निषिद्ध्यते ।
न हेतुनिरपेक्षात्मा पक्षो नामास्ति कश्चन ॥

प्रसाधयितुमिष्टो हि हेतुना पक्ष उच्यते ।
हेतुमात्रनिषेधोऽपि न च सर्वत्र शक्यते ॥
स्वप्रवृत्तिविरोधेन न कारकानिषेधनम् ।
ज्ञापकस्य निषेधस्तु व्यवहाराविरोधकृत् ॥
न दृष्टान्तनिषेधोऽपि सर्वलोकविसम्मतेः ।
तत्पक्षहेतुदृष्टान्तमर्यादा सुप्रतिष्ठिता ॥
तथा न्यायनिरुक्त्याख्यवादेऽधिकरणात्मकः ।
न्यायो निरूप्यते चैवं नयोऽप्याहत उच्यते ॥
8 यो वादिप्रतिवादिभ्यां निश्चितस्साधनं तु तत् ।
इति दिङ्नागोक्तमतः नासत्यात्सत्यधीः क्वचित् ॥
येऽपि रेखादयो दृष्टाः वर्णानां प्रतिपादकाः ।
न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ॥
वर्णात्मना न सत्याश्चेत्सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किंचिदिष्यते ॥
हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ।
तेन बाष्पादिवत्तेषामुपायत्वं न लेख्यवत् ॥
नन्वसत्यपि बाह्येऽर्थे बुद्ध्यारूढेन सिद्ध्यति ।
वासनाशब्दभेदोत्थविकल्पप्रविभागतः ॥
न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ।
व्यवहारोऽनुमानादेः कल्प्यते न बहिः स्थिते ॥

अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ।
भेदोऽसतः कथं हि स्यात् बुद्धिशब्दप्रकल्पनात् ॥
निर्वस्तुके कथंचस्यात्प्रसवो बुद्धिशब्दयोः ।
शब्दभेदोऽपि भवतः तदभावान्न सिद्ध्यति ॥
ननु यद्वन्मया हेतुः नेष्यते दूषणं तथा ।
तेन मे दूषणाभवात् अदुष्टं किं न साधनम् ॥
नेदानीं दूषणं कार्यं साधनाभावतो यदि ।
त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ॥
एवमादिवचोभेदैः निरालम्बनसाधनम् ।
दूषितं विस्तरेणेदं वीक्ष्यतां श्लोकवार्तिके ॥
असत्यात्सत्यधीयुक्तिं समालम्ब्य हि शाङ्करे ।
शारीरके जगन्मिथ्यावाद एष समर्थितः ॥
नन्वेकत्वैकान्तवादे नानात्वं न प्रसिद्ध्यति ।
प्रत्यक्षादिप्रमाणानि व्याहतानि भवन्ति हि ॥
तथा विधिप्रतीषेधशास्त्राण्यप्यफलानि च ।
मोक्षशास्त्रं तथा शिष्यशासित्रादि विहन्यते ॥
कथंवा सत्यमेकत्वमनृतादवगम्यते ।
अत्रोच्यते प्राकप्रबोधात् सर्वं सत्स्वाप्नवत्ततः ॥
सर्वोपपत्तिरेकत्वं त्वसत्यादपि गम्यते ।
यथा शङ्काविषाद्धेतोर्मरणाद्युपजायते ॥

रज्जुसर्पान्मृगजलाद्दंशनस्नानधीरपि ।
सत्याप्रबोधनिर्बाधा फलमप्युपलभ्यते ॥
शुभाशुभस्वप्नदृग्भ्यां सूच्येते साध्वसाधुनी ।
तथा सत्याक्षरज्ञानमस्ति रेखानृताक्षरात् ॥
देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥
इत्यादिः विस्तरो ज्ञेयः, तत्र श्रीभाष्यकृत्पुनः ।
असत्ये विषयेऽप्यत्र प्राह ज्ञानस्य सत्यताम् ॥
तेन ज्ञानेन सत्येन मता सर्वत्र सत्यधीः ।
सत्यादसत्यधीर्वा स्यान्नासत्यात्सत्यधीः क्वचित् ॥
सर्वस्यास्य विवादस्य निदानं वचनं पुनः ।
अनिर्वाच्यविचारे प्राक् धर्मकीर्तेरुदाहृतम् ॥

## (81) हेत्वाभासाः.

1 अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते ।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥
विपरीतमतो यत्स्यात् एकेन द्वितयेन वा ।
विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत् ॥
इति प्रशस्तपादेन प्रोक्तं वैशेषिकं मतम् ।
अथ नैयायिकमते विश्वनाथस्य संग्रहः ॥

2 अनेकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥
आद्यस्साधारणस्तु स्यादसाधारणकोऽपरः ।
तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥
यस्सपक्षे विपक्षे च भवेत्साधारणस्तु सः ।
यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥
तथैवानुपसंहारी केवलान्वयिसाध्यकः ।
यस्साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥
आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ ।
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतः त्रिधा ॥
विरुद्धयोः परामर्शे हेत्वोस्सत्प्रतिपक्षता ।
साध्यशून्यो यत्र पक्षः त्वसौ बाध उदाहृतः ॥
3 असिद्धिश्च विरुद्धश्चानैकान्तिक इति त्रयः ।
हेत्वाभासा इति प्राहुरार्हता अपि कोविदाः ॥
यस्संदिग्धविपक्षस्स्यात् स त्वनैकान्तिको मतः ।
बाधादिरप्यसिद्ध्यादावन्तर्भावमिहार्हति ॥
प्रमाणानां स्वरूपेण संख्यया विषयेण च ।
फलेन च चतुष्पात्त्वं आभासस्तद्विपर्ययः ॥
4 प्रत्यक्षादिप्रमाणानामाभासस्यापि दर्शनात् ।
हेत्वाभासस्य चैकस्य ग्रहणं चोपलक्षणम् ॥

5 अनुमानाभास एव साध्याभासादिसंभवात् ।
सोऽपि ग्राह्य इति प्राहुरपरे विबुधोत्तमाः ॥
6 समासमाविनाभावावेकत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥
विपक्षे बाधकाभावादुपाधेर्वाऽपि संभवात् ।
हेत्वाभासोऽन्यथासिद्धयन् अप्रयोजक इष्यते ॥
संदिग्धानैकान्तिकस्स्यादप्रयोजक इत्यपि ।
सौगतोक्तिरयुक्ता यदसिद्धेरुपजीव्यता ॥
7 स्वेनैव स्वस्य रोधश्चेत्स्वव्याघातो ननूच्यते ।
स्वस्य सिद्धावसिद्धौ वा विरोधः किं करिष्यति ॥
अत्रोच्यते या हि युक्तिः परपक्षापनुत्तये ।
उपात्ता तत्सजातीया स्वपक्षं चेत्प्रतिक्षिपेत् ॥
तादृश्या परपक्षस्य नच दोषः प्रसज्यते ।
स्वपक्ष एव दुष्टस्स्यादिति दूषकतोदिता ॥
दुष्टस्यापिच यद्यास्ति दूषकत्वं तदा भुवि ।
नित्यं स्यात्कलहः मौनं शरणं वाऽथ वादिनाम् ॥
8 सर्वं बाधितमेवास्तु वादिनामिति नैव सत् ।
बाधस्य बाधेऽबाधेऽपि सर्वाबाधोऽवतिष्ठते ॥
विचारो वस्तुरूपश्चेत्किं सिद्धयेत्सर्वशून्यता ।
विचारोऽवस्तुरूपश्चेदपि नो सर्वशून्यता ॥

9 मीमांसकानां सिद्धान्ते त्वथाभासो निरूप्यते ।
दोषोऽनुमाने द्विविधः प्रतिज्ञाहेतुभेदतः ।।
त्रिधा प्रतिज्ञादोषस्स्यात् स्ववाग्विहतिलक्षणः ।
वन्ध्या मे जननीत्येवं सर्वं वाक्यं मृषेत्यपि ।।
यावज्जीवमहं मौनी धर्मिधर्मोक्तिरोधतः ।
असिद्धिश्चाप्यनैकान्तिकत्वं बाधकतेति च ।।
हेतुदोषास्त्रिधा ख्यातः पञ्चधाऽसिद्धिरुच्यते ।
स्वरूपासिद्धिसंबन्धासिद्धी च व्यतिरेकतः ।।
असिद्धिराश्रयासिद्धिः व्याप्त्यसिद्धिश्च पञ्चमी ।
शशशृङ्गादिहेतुत्वे स्वरूपासिद्धिरुच्यते ।।
पक्षावृत्तेस्तु हेतुत्वे संबन्धासिद्धिरुच्यते ।
व्यतिरेकासिद्धिरेषा हेतुः पक्षात्मको यदि ।।
आश्रयासिद्धिरत्र स्यान्नचेत्पक्षः प्रसिद्ध्यति ।
भिन्नाधारे साध्यहेत्वोः व्याप्यत्वासिद्धिसंभवः ।।
द्विधाऽनैकान्तिकत्वं स्याद्धेतुदोषोऽप्यनन्तरः ।
आद्यं सव्यभिचारं स्यात् परं सप्रतिसाधनम् ।।
बाधकत्वं विरुद्धत्वं तृतीयो दोष इष्यते ।
10 भाट्टानां संशयोभीष्टः फलं सप्रतिसाधने ।।
गुरूणां तादृशो दोषः नेष्टः वस्तुविरोधतः ।
नहि वस्तु विकल्प्येत न विरुद्धसमुच्चयः ।।

एतेन वस्तुनो नानाकारता भाट्टसम्मता ।
सोऽनेकान्तो वाद इति गुरुभिस्त्वधरीकृतः ॥
अतएवानित्यदोषं प्राहुर्नैयायिका अपि ।
रत्नकोशकृतोऽप्यत्र विदुस्संशयहेतुताम् ॥
असाधारणदोषस्य शाक्यास्संशयहेतुताम् ।
वदन्ति तच्चानुमतं दूषितं च कुमारिलैः ॥
11 विरुद्धाव्यभिचारीति केचिज्जात्यन्तरं विदुः ।
साधारणविशेषं तं प्राहुः केचन सूरयः ॥
असाधारणमित्यन्ये प्रतिपक्षं परे विदुः ।
यथा परोदितैरेव पक्षहेतुनिदर्शनैः ॥
विरुद्धसाधने तत्र विरुद्धाव्यभिचारिता ।
सर्वसत्प्रतिपक्षाणां विरुद्धाव्यभिचारिताम् ॥
कदाचिदूचुराचार्याः समासरुचयो बुधाः ।
12 पक्षेण व्यभिचारस्य चोदना शाक्यसम्मता ॥
संदिग्धानैकान्तिकता सोच्यते, नान्यसम्मता ।
अनुमानस्य चोच्छित्तिस्ताद्दग्दोषानुधावने ॥
13 स व्यधीकरणासिद्धः हेतुः पक्षेतरस्थितः ।
इत्याहुरपरे सोऽपि संबन्धासिद्धिमान् भवेत् ॥
14 असाधारण एवायमनध्यवसिताभिधः ।
हेत्वाभासान्तरमिति भूषणन्यायसम्मतः ॥

भासर्वज्ञादयो न्यायसारादाविममाश्रिताः ।
पन्थानमिति विज्ञेयं मानमेयोदयादितः ॥
सर्वोदाहरणं न्यायमञ्जर्यादिषु विश्रुतम् ।
पश्यन्त्वपेक्षावन्तश्चेद्वयं दिङ्मात्रसूचकाः ॥

(82) कथा.

1 एकाधिकरणौ धर्मौ तुल्यकालौ विरोधिनौ ।
पृथक्परिग्रहौ पक्षप्रतिपक्षावुदीरितौ ॥
परस्परविरुद्धार्थवादिनोर्हि विवादिनोः ।
व्यवहारः कथेत्युक्तः सा कथा त्रिविधा मता ॥
वादजल्पवितण्डाभिः तत्स्वरूपं पुनस्त्विदम् ।
वीतरागकथा वादः विजगीषुकथा परः ॥
वितण्डा स्थापनाहीना परपक्षैकदूषणम् ।
प्रतिज्ञा साधनं चैव दूषणं च विनिर्णयः ॥
व्यवहारश्चतुष्पादः लोकवच्चैव निर्णयः ।
सर्वथा सदुपायानां वादमार्गः प्रवर्तते ॥

2 अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ।
इति सत्यविदः प्राहुः, आद्यो वादस्स खण्डने ॥
यदि शून्यविदं वादानधिकारं वदेत्सुधीः ।
तस्मिन्नेव विवादेनाधिकारं दित्सति स्वयम् ॥

यदि शून्यविदन्यं प्रत्याहानधिकृतिं सुधीः ।
तस्य चाप्रतिवादित्वात् निग्रहस्थानमेव तत् ॥
अत्रोत्तरं पुनरिदं ते वादानधिकारिणः ।
इत्यन्तेवसतां सोऽयमुपदेशो भवेदिति ॥
कथानधीकारवाचा निष्प्रयोजनतोदिता ।
इति मार्गान्तरं न्यायपरिशुद्धावुदीरितम् ॥
प्रयोजनानुयोगेन वितण्डावादिनिग्रहः ।
वात्स्यायनोदितः सोऽध्वा विद्वद्भिरनुगम्यते ॥
विस्तरश्शतदूषण्यां वेदान्ताचार्यसूरिभिः ।
कृतः कथाऽनधीकारवादे नावमिके पुनः ॥

3 वादेषु नियमा एते कल्प्यन्ते प्रौढिसिद्धये ।
अदन्त्यो वा निरोष्ठ्यो वा लुङ्प्रयोगोऽथवा तथा ॥
यङ्प्रयोगो यकृप्रयोगः इत्यादिश्शब्दगोचरः ।
अनुमानेनैव तथा शब्देनैव तथेति वा ॥
वैदिकेनागमेनैवेत्येवं मानव्यवस्थितिः ।
छलजात्यादयोऽप्येवं निग्रहस्थानलक्षणाः ॥
कक्ष्यादिनियमाश्चापि न्यायशास्त्रे हि विश्रुताः ।
एवंविधा हि निर्बन्धाः वादिनां जयहेतवः ॥

4 अर्थिप्रत्यर्थिनोस्तावन्न द्वयोर्जयसंभवः ।
एकस्य विजयेऽपि स्यात् सफला सत्कथैव सा ॥

यत्र द्वयोर्न विजयः नवा तत्त्वविनिश्चयः ।
कुकथां कथयन्त्येनां असदुक्तिपरंपराम् ॥
तां द्विकक्ष्यादिकामेके षट्कक्ष्यावधिकां विदुः ।
पूर्वत्रासंभवात् सभ्यैः उत्तरत्र निवारणात् ॥
असदप्रतिभादौ तु पक्षैकत्वमपि क्वचित् ।
सभ्येष्वसत्स्वदक्षेष्वप्युपर्युपरि धावति ॥

5 अथ पत्रमुखो वादो विदुषां हृदयंगमः ।
प्रमेयाम्बुजमार्ताण्डोदाहृतः कश्चिदुच्यते ॥
प्रसिद्धावयवं वाक्यं स्वेष्टस्यार्थस्य साधकम् ।
साधुगूढपदप्रायं पत्रमाहुरनाकुलम् ॥
भ्रान्तभासितभूताद्यत्यन्तात्मतद्भान्तवाक् ।
परान्तद्योतितोद्दीप्तमितितस्वात्मकत्वतः ॥
चित्राद्यदन्तराणीयमारेकान्तात्मकत्वतः ।
यदित्थं न तादित्थं न यथाकिंचिदिति त्रयः ॥
तथाचेदमिति प्रोक्तौ चत्वारोऽवयवा मताः ।
तस्मात्तथेति निर्देशे पञ्च पत्रस्य कस्यचित् ॥

6 छलैश्च निग्रहस्थानैः जातिभिश्चापि साधनम् ।
उपालम्भश्च वादे चेत् स जल्प इति निर्णयः ॥
विद्यायाः पालनार्थं सः न लाभाद्यर्थमिष्यते ।
छलं च त्रिविधं प्रोक्तं तद्वाविंशतिधा पुनः ॥

निग्रहस्थानमुदितं चतुर्विंशतिधा परम् ।
इति न्यायविदः प्राहुः परैर्विविधमिष्यते ॥

7 छलं च प्रायशः विश्वव्यामोहनमिति स्थितम् ।
जातिः स्वव्याघातकत्वादसदुत्तरमुच्यते ॥
परापादितदोषाणामनभ्युपगमेन वा ।
तदुद्धारेण वा दोषं ब्रूयादिति विनिर्णयः ॥
तथैवाप्रतिपत्त्या वाऽथवा विप्रतिपत्तितः ।
प्रतिज्ञादिपरित्यागान्निग्रहस्थानसंभवः ॥
तूष्णींभावो यदा तूष्णींभावो निग्रहकारणम् ।
प्रलपेत्तु यदा तत्र भवेत्प्रलपितं तु तत् ॥
यथायथा चेष्टते सः तथा निग्रहहेतुता ।
अनन्तं निग्रहस्थानं कीर्तितं धर्मकीर्तिना ॥
एवं नानाविधकथाभासतत्त्वावलोकिनाम् ।
सदुत्तरैस्तदुत्थानात् तत्त्वधीजयसंभवः ॥
अन्यथा षण्डचेष्टावद्भवेयुरफलाः कथाः ।
इति प्रख्यापनायात्र कथाभास उदाहृतः ॥

8 वादरूपैवैकधेति कथां तामार्हता विदुः ।
वीतरागकथा वाद इत्यतो विश्रुतो भुवि ॥
विश्रुता वीतरागास्ते नाम्नाऽपि प्रायशो बुधाः ।
पराजयभयाद्वीतरागता यशसेऽपि वा ॥

इति भेदानादरस्स्यादित्याहुर्वादकौतुकाः ।
नियोज्यः पर्यनुयोज्यः न कश्चित्कस्यचिद्भुवि ॥
संभवैतिह्यचेष्टादिप्रमाणानां यथायथम् ।
अनुमानप्रभृतिषु ह्यन्तर्भावो बुधैर्मतः ॥
चेष्टा सामयिकी शब्दव्यवहारानुसारिणी ।
अस्येयं बोधिकेत्येवं भरताद्यागमे स्थिता ॥
एवं लिप्यादिकमपि यथासंभवमर्हति ।
अन्तर्भावं ततस्तत्र न विकल्पोऽस्ति वादिनाम् ॥
इत्येवमनुमानस्य सारांशः परिकीर्तितः ।
बहुभिर्बहुधा प्राज्ञैः प्रायशो विस्तरः कृतः ॥

## (83) उपमानम्

1 वृद्धनैयायिकास्तत्रातिदेशवचनं श्रुतम् ।
संज्ञाप्रतीतिफलकमुपमानं प्रचक्षते ॥
उपायमात्रावगमे शब्दव्यापारविश्रमात् ।
निरपेक्षोपेयबोधतत्परादागमाद्भिदा ॥
यथा परार्थानुमानं नागमः किंतु भिद्यते ।
लिङ्गसामर्थ्यरूपस्योपायस्य प्रतिपादनात् ॥
2 नव्यनैयायिकानां तु सिद्धान्तोऽथ प्रदर्श्यते ।
श्रुतातिदेशवाक्यस्य तथा विपिननगामिनः ॥

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥
वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार इष्यते ।
गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥
तस्मादयं स गवयो नामेत्येवंविधा मतिः ।
उपमानैकजन्यैव न प्रमाणान्तरोद्भवा ॥
साधर्म्यादथ वैधर्म्याद्धर्ममात्राच्च तत् त्रिधा ।
गवयो गौरिवेत्यादिवाक्यं साधर्म्यमूलकम् ॥
गवादिवन्न द्विशफः भवेद्वाजीति यद्वचः ।
तद्वैधर्म्यनिदानं स्यात् धर्ममात्रात्पुनर्यथा ॥
दीर्घग्रीवः प्रलम्बोष्ठः कण्टकाशी क्रमेलकः ।
सादृश्यवचनं चैतद्द्वयोस्स्यादुपलक्षणम् ॥
प्रत्यक्षप्रत्यभिज्ञास्स्युः सादृश्यादिधियो यतः ।
गवयेन सदृग्गौरित्येषा नोपमितिस्ततः ॥
प्रसिद्धेन हि सादृश्यमप्रसिद्धस्य गम्यते ।
गवा गवयपिण्डस्य न तु युक्तो विपर्ययः ॥
यच्चावगतविज्ञानं प्रत्युत्पन्ननिदानजम् ।
सा संगतिः स संवादः सोऽनुवाद इतीर्यते ॥
सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः ।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपिवा ॥

प्रायस्सर्वेऽनुमानान्तर्भावमाहुर्यथापुनः ।
एषैव गौस्सेतिबुद्धिरनुमाऽन्योन्यहस्तवत् ॥
यद्वाऽऽप्तवाक्याद्व्युत्पत्तिश्चिह्नोन्नीतनिमित्ततः ।
3 अथ मीमांसकैकान्तः किंचित्संगृह्यतेऽधुना ॥
दृश्यमानार्थसादृश्यात्स्मर्यमाणार्थगोचरम् ।
असन्निकृष्टसादृश्यज्ञानं मैमांसकं मतम् ॥
गवयस्थितसादृश्यदर्शनं करणं भवेत् ।
फलं गोगतसादृश्यज्ञानमित्यवधार्यते ॥
तस्माद्यत्स्मर्यते तत् स्यात्सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥
प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते ।
विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥
प्रत्यक्षे च यथा देशे स्मर्यमाणे च पावके ।
विशिष्टविषयत्वेन नानुमानाप्रमाणता ॥
तथोपमानप्रामाण्यं विदुषां हृदयङ्गमम् ।
आग्नेयवाक्यं स्वसदृक्सौर्येणोपमितं यदा ॥
तदाचोपस्थिते स्वार्थे तृतीयोंऽशो ह्यपेक्षितः ।
सौर्यभावनया ग्राह्य इत्यस्त्येतत्प्रयोजनम् ॥
तथा प्रतिनिधिद्रव्यसंग्रहोऽपि क्वचिद्भवेत् ।
नचेदमनुमानादिनेति मानं पृथक्कृतः ॥

4 उपमानप्रमेयं चेत्संबन्धः स्यात्पदार्थयोः ।
स सामयिक एव स्यात् आरण्यकनरश्रुतः ॥
एवमारण्यकाः केचित् केचिन्नागरकास्तथा ।
केचिद्देशान्तरनरविश्रुताः कतिचित्पुनः ॥
द्वीपान्तरनरप्रोक्ता एवं सर्वे पदात्मकाः ।
शब्दास्स्युरिति संकेतसिद्धान्तः विजयी भवेत् ॥
औत्पत्तिकं तु संबन्धं शब्दस्यार्थेन ये विदुः ।
अर्थापत्तिप्रमाणेन साक्षात्तैस्तद्ग्रहो मतः ॥
प्रत्यक्षं चानुमानं च तदुत्पादे प्रवर्तते ।
अतस्संबन्धविज्ञानं त्रिप्रमाणकमुच्यते ॥
संबन्धाक्षेपशान्त्यन्ते वागेषा श्लोकवार्तिके ।
शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति ॥
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ।
अन्यथाऽनुपपत्त्या च बुद्ध्येत् शक्तिं द्वयाश्रिताम् ॥
अर्थापत्त्याऽवबुध्यन्ते संबन्धं त्रिप्रमाणकम् ।
नच सामयिकस्तस्मात्संबन्ध इति निर्णयः ॥
ये तु सामयिकं तं च संबन्धं तार्किका विदुः ।
तेषां व्याकरणादीनि प्रमाणानीति निश्चितम् ॥
अतस्संकेतसंबन्धसिद्ध्यर्थं मार्गशोधनम् ।
तन्मार्गप्रतिरोधाय त्रिप्रमाणकतोदिता ॥

सर्वमेतच्च वेदस्यापौरुषेयत्वसिद्धये ।
तत्पौरुषेयतायै च नदीनां सागरो गतिः ॥

(84) अर्थापत्तिः.

1 प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता ॥
तत्र प्रत्यक्षतो ज्ञाताद्दाहाद्दहनशक्तता ।
तथैवानुमितात्सूर्ये यानात्तच्छक्तिशालिता ॥
तथैवोपमितादर्थात्स्यादर्थान्तरकल्पना ।
इत्याद्यूह्यं बुधैस्तत्र निर्णयांशोऽवगम्यताम् ॥
साधारणप्रमाणानामसाधारणमानतः ।
विरोधादविरुद्धांशे धीरर्थापत्तिरुच्यते ॥
यथा जीवनमानस्य मन्दिराभावमानतः ।
विरोधात्करणीभूतात् बहिर्भावस्य कल्पना ॥
तस्माद्यो विद्यमानस्य गृहाभावोऽवगम्यते ।
स हेतुस्स बहिर्भावमगृहीत्वा न गृह्यते ॥
प्रमेयस्य प्रवेशोऽयं विशेषोस्त्यनुमानतः ।
विलक्षणप्रमाणत्वात् तस्य नास्त्यत्र दोषता ॥
2 तार्किकध्वंसनोपायमेतादृशमजानता ।
गुरुणा कल्पितः कश्चिज्जीवनस्यात्र संशयः ॥

जीवनं किल विज्ञातं वेश्मवर्तितया पुरा ।
तस्माज्जीवनसंदेहः भवेद्वेश्मन्यदर्शनात् ॥
संदिग्धं जीवनं त्वेतत् बाहिर्भावस्य बोधकम् ।
अर्थापत्तेः प्रभावोऽयं यत्सन्दिग्धोऽपि बोधयेत् ॥
एवं जीवनसंदेहे स्यात्संदिग्धविशेषणः ।
हेतुरित्यनुमानत्वनिरासः सुकरो मतः ॥
तत्संदेहव्युदासाय कल्पना या प्रवर्तते ।
संदेहापादकादर्थादर्थापत्तिरसौ मता ॥
दृष्टान्तदृष्टनियमस्मरणे त्वनुमा मता ।
प्रतिघातालोचने स्यादर्थापत्तिर्विलक्षणा ॥
विना कल्पनयाऽर्थेन दृष्टेनानुपपन्नताम् ।
नयता दृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना ॥
3 अर्थापत्तेस्तु नैवेह प्रमाणान्तरतेष्यते ।
व्यतिरेकव्याप्तिबुद्धया चरितार्था हि सा यतः ॥
सत्त्वभोजनयोर्व्याप्ये स्यातां जीवनपीनते ।
जीवित्वे च गृहासत्त्वं बहिस्सत्त्वं प्रसाधयेत् ॥
पीनत्वे च दिवाऽभुक्तिः रात्रिभोजनसाधनम् ।
इति नैयायिकाः प्राहुः इतरेऽपि तदध्वगाः ॥
अनियम्यस्य नायुक्तिः नानियन्तोपपादकः ।
न मानयोर्विरोधोऽस्ति प्रसिद्धे चाप्यसौ समः ॥

इदमौदयनं पद्यं तस्य चार्थोऽयमुच्यते ।
व्याप्यमेवोपपाद्यं स्यात् व्यापकश्चोपपादकः ॥
विरोधे नैव मानं स्यात् अनुमानेऽपि सा भवेत् ।
विस्तरो न्यायकुसुमाञ्जल्यादौ वीक्ष्यतां बुधैः ।

4 यत्र त्वपरिपूर्णस्य वाक्यस्यान्वयसिद्धये ।
शब्दोऽध्याह्रियते तत्र श्रुतार्थापत्तिरिष्यते ॥
पीनो दिवा च नात्तीति सांकाङ्क्षवचनश्रुतेः ।
तदेकदेशविज्ञानं श्रुतार्थापत्तिरुच्यते ॥
तामर्थगोचरां केचिदपरे शब्दगोचराम् ।
कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥
प्रायशश्चानया वेदे व्यवहारः व्यवस्थितः ।
सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥
वह्निसंसर्गतो दाहस्यान्यथाऽनुपपत्तितः ।
क्लृप्तिर्दहनशक्तेस्तु दृष्टार्थापत्तिरुच्यते ॥
प्रमाणग्राहिणीत्वेन दृष्टार्थापत्तितोऽधिका ।
श्रुतार्थापत्तिरेष्टव्या प्रमेयग्राहिणी परा ॥

5 प्राभाकरास्त्विमं भेदं न विवक्षन्ति तद्यथा ।
अर्थं बुद्ध्वा शब्दक्लृप्तिरिति सर्वत्र विश्रुता ॥
केवलं द्वारमित्युक्ते पिधेहीति न कल्प्यते ।
किंतु क्लृप्तिः पिधानस्य तदर्थस्यैव लाघवात् ॥

अतएवच शब्दस्य नाध्याहारमिमे विदुः ।
भाट्टा नैयायिकाश्चापि शब्दाध्याहारवादिनः ॥
पुष्पेभ्य इति शुद्धोक्तौ स्पृह्यर्थो यदि कल्प्यते ।
चतुर्थ्यनुपपत्तिस्स्यात् शब्दस्तदुपपादकः ॥
अर्थाध्याहारपक्षे तु कार्यं वेदार्थ इष्यते ।
स एव धर्मः वेदैकगम्यता न विरोत्स्यते ॥
द्रव्यक्रियागुणादीनां धर्मत्वं ये विदुर्बुधाः ।
अन्यथाऽनुपपत्त्या हि तेषां वेदस्य कल्पना ॥
लौकिकोऽलौकिकश्चेति यथा शब्दो द्विधा मतः ।
लौकिक्यलौकिकी चेति श्रुतार्थापत्तिरप्यसौ ॥

(85) अनुपलब्धिः

1 प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥
तत्र तृतीयपादेनानुपलब्धिर्विवक्षिता ।
तुरीयेन तु पादेनाभावबुद्धिर्विवक्षिता ॥
प्रमायाः करणत्वे तु फलं हानादिबुद्धयः ।
इति न्यायोऽभ्युपेतव्य इति वार्तिककृन्मतः ॥
अथ तस्यैव विवृतिः सम्प्रदायप्रवर्तकैः ।
प्रकाशितो लिख्यतेऽत्र पुनः वैशद्यसिद्धये ॥

2 अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।
अभावाख्यं प्रमाणं स्यात् अभावस्यावबोधकम् ॥
विषयं तदधीनांश्च सन्निकर्षादिकान्विना ।
उपलम्भस्य सामग्रीसंपत्तिरिह योग्यता ॥
सा च ज्ञाततयाऽभावज्ञानस्य सहकारिणी ।
अज्ञातोऽनुपलम्भस्तु सत्तामात्रेण बोधकः ॥
योग्यत्वावगमार्थं हि सूक्ष्मार्थाभाववेदने ।
सूक्ष्मबोधकनेत्रांशुसंपातार्थं प्रयस्यते ॥
योग्यत्वस्य च संदेहे विपर्यासेऽथवा सति ।
अभावेऽपि हि संदेहः भ्रमो वाऽस्त्येव तद्यथा ॥
तमसि भ्रष्टमन्विष्यन् कराभ्यामङ्गुळीयकम् ।
सर्वोर्वीस्पर्शसंदेहात् अभावेऽप्येति संशयम् ॥
तथैव सर्वतोऽस्पर्शों मत्वा सर्वाभिमर्शनम् ।
सत एवाङ्गुळीयस्याप्यभावं बुध्यते भ्रमात् ॥
द्विविधोऽनुपलम्भः स्यात्प्रतियोगिप्रभेदतः ।
प्रमितिश्च स्मृतिश्चेति तत्राद्या प्रतियोगिनी ॥
प्रत्यक्षादिप्रभेदेन प्रमितिः पञ्चधा स्थिता ।
तथैवानुपलम्भोऽपि प्रविभागमिहार्हति ॥
अभावाख्यं तु वस्त्वेव नास्तीत्याह प्रभाकरः ।
हसन्ति चिन्तां तस्यान्तेवसन्तः पुनरीदृशीम् ॥

3 इति मीमांसकाः प्राहुः अत्र नैयायिका जगुः ।
अभावः प्रत्यक्ष इति सर्वानुभवसाक्षिकः ॥
येनेन्द्रियेण या व्यक्तिः गृह्यते तेन तद्गता ।
जातिश्च तदभावश्च गृह्येते इति निर्णयः ॥
विशेषणतया सन्निकर्षेणैष प्रतीयते ।
सा हि स्वरूपसंबन्धः न च ज्ञाननिरूपिता ॥
स्याद्योग्यानुपलब्धिश्च करणे सहकारिणी ।
प्रतियोग्युपलम्भे चाभावो नैवोपलभ्यते ॥
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ।
तादृशप्रतियोगित्वं योग्यताऽनुपलब्धिगा ॥
तस्मात्तमसि कुम्भादेरभावो नोपलभ्यते ।
तत्र कुम्भोपलब्धिस्तु प्रसङ्गं नैव चार्हति ॥
तस्मादनुपलब्धिस्तु न मानान्तरमिष्यते ।
अपिचानुपलम्भस्याज्ञातस्य यदि हेतुता ॥
ज्ञानाकरणकत्वेन प्रत्यक्षत्वमिहाक्षतम् ।
यदि ज्ञातस्य हेतुत्वं तत्रापि तदपेक्षया ॥
दुरुद्धराऽनवस्था स्यात् साऽपि चाभावलक्षणा ।
भावान्तराभाववादेऽनुपलब्धिः न विद्यते ॥
स्वरूपेण पुनर्ज्ञाने भावरूपेण वेद्यते ।
प्रतियोगिस्पर्शितायां अभावत्वेन तद्ग्रहः ॥

4 दृश्यसत्ता भवेद्व्याप्या दर्शनं व्यापकं मतम् ।
व्यापकानुपलब्ध्यैव व्याप्याभावोऽवसीयते ॥
लिङ्गेनानुपलब्ध्यैव ह्यभावस्य गतार्थता ।
इति बौद्धाः तन्न युक्तं लिङ्गज्ञानानवस्थितेः ॥
अभिप्रायस्सौगतानां तेषामेषोऽवधार्यताम् ।
यो न्यायमञ्जरीन्यायरत्नाकरविशोधितः ॥
दृश्यं सद्यत्र यत्किंचिद्वस्तु नैवोपलभ्यते ।
नास्ति तद्वस्तु तत्रेति बुद्धिसत्त्वे पुमानिव ॥
न दृश्यते चात्र देशे दृश्योऽपि कलशास्त्विति ।
स्वभावहेतुरनुपलब्धिः स्यात्प्रतिषेधकः ॥
यैवैकज्ञानसंसर्गिवस्त्वन्यतरगोचरा ।
धीस्सैवैकतरस्येष्टाऽनुपलब्ध्यभिधा ततः ॥
उपलब्धेरभावोऽन्यो नोपलब्ध्यतिरेकतः ।
तस्मान्न तस्यानुपलब्ध्यन्तरापेक्षयाऽस्थितिः ॥
योऽसावन्यतरस्योपलम्भः स स्वयमेवहि ।
संवेद्य इत्यपि ततो नैव चात्रानवस्थितिः ॥
नास्तीत्यादिव्यवहृतियोग्यताऽभावशब्दिता ।
तादात्म्यमेव संबन्धः तया तस्या इति स्थिति ॥
बहुधाऽनुपलब्धिर्हि तीर्थकृद्भिर्निरूपिता ।
एकादशविधामेके परे षोडशधा विदुः ॥

व्यापकानुपलब्धिस्तु प्रायशस्सर्वसम्मता ।
व्यापकानुपलब्ध्या हि पक्षे व्याप्यं निवर्त्यते ॥
या व्यापकविरुद्धस्य चोपलब्धिरनन्तरा ।
पृथिवीत्वव्यापकस्य द्रव्यत्वस्य विरोधिनः ॥
गुणत्वस्योपलम्भेन पृथिवीत्वनिषेधधीः ।
तया संपद्यत इति साऽपि सर्वत्र सम्मता ॥
5 अत्र प्रतिब्रुवन्त्येवं कुमारिलमुखा बुधाः ।
अक्षादेवोत्पद्यतेऽसावभावो मानमिष्यते ॥
त्रिरूपलिङ्गजन्यार्थदृक्प्रमाणमितीरयन् ।
कथं तुच्छस्वरूपस्य कारणापेक्षितां वदेत् ॥
अनुमा दुर्निरूपाऽत्र मानमित्यैक्यवादिना ।
तस्मादनुपलम्भोऽस्ति, प्रमाणं वाऽथवा न सः ॥
अक्षापेक्षा तु नाभावग्रहणायोपयुज्यते ।
किंतु दृश्यादर्शनाय भूतलाद्यनबुद्धये ॥
दृश्यादर्शनमक्षं च मिलित्वैवावबोधयेत् ।
अभावेन विशिष्टं तं भावं यद्भूतलादिकम् ॥
नच भिन्नेन्द्रियग्राह्यं किंचिदस्त्यनुरागकृत् ।
नहि लाक्षानुरक्तेऽपि स्फटिके धीस्त्वगादिभिः ॥
इत्यादिवचनं तु स्यात्संबन्धाग्रहगोचरम् ।
प्रकृते तूभयोश्चैव संसर्गोऽभावगोचरः ॥

त्वाचं क्षीरं तस्य रसः संसर्गोऽपि च रासनः ।
तथाच मधुरं क्षीरमिति लोके विशिष्टधीः ॥
शब्दस्तु श्रावणः तस्य चार्थे श्रौत्रो न चान्वयः ।
तस्मान्न चक्षुः शब्दादिराज्ञितस्यावबोधकृत् ॥
6 अत्र नैयायिकानां तु सिद्धान्तोऽयं निरर्गलः ।
सर्वोपाख्यावियुक्तत्वान्नेयमस्तीति वोच्यताम् ॥
अभावश्चाक्षुषज्ञानविषयो वाऽभ्युपेयताम् ।
अभावस्य विचारे तु कृत एतस्य विस्तरः ॥

(86) शब्दाक्षेपः.

1 नन्वत्र प्रथमं शब्दे प्रामाण्यं नावकल्पते ।
प्रामाण्येऽपि पृथग्भावो नास्तीत्यथ परीक्ष्यते ॥
अर्थप्रतीतिजनकं प्रमाणमिति सम्मतम् ।
विकल्पमात्रमूलत्वान्नार्थं शब्दाः स्पृशन्त्यमी ॥
अङ्गुल्यग्रे हस्तियूथशतमित्यादिवाक्यतः ।
एष वन्ध्यासुतो यातीत्यतो वाऽर्थः क इष्यते ॥
लोलाक्षीणां लक्षमभिरमयेद्यः पुमानिह ।
स गन्धर्वपदं प्राप्नोतीति च श्रूयते स्वनः ॥
स्वर्गकामो दर्शपूर्णमासाभ्यां च चरेदिति ।
वाक्यस्यार्थे कथं लोके न स्यात् श्रद्धैव केवलम् ॥

अर्थो निरूप्यमाणश्च को वा शब्दस्य शक्यते ।
वक्तुं, न जातिः न व्यक्तिः न तद्वान्नाम कश्चन ॥
संबन्धोऽप्यस्य नार्थेन नित्योऽस्ति समयोऽथवा ।
शक्यः सन्नपि वा बोद्धुं अर्थे कथमतीन्द्रिये ॥
वाक्यार्थोऽपि न निर्णेतुं पार्यते पारमार्थिकः ।
नियोगभावनाभेदसंसर्गादिस्वभावकः ॥
तत्प्रतीत्यभ्युपायश्च किं पदार्थः पदानि वा ।
वाक्यं वा व्यतिषिक्तार्थं स्फोटो वेति न लक्ष्यते ॥
सिद्धायामपि तद्बुद्धौ तस्याः द्राढिमकारणम् ।
नित्यत्वमाप्तोक्तत्वं वा न सम्यगवतिष्ठते ॥
पदे नित्येऽपि वैदिक्यो रचनाः कर्तृपूर्विकाः ।
नित्या वा कृतकत्वेऽपि कृताः केनेति दुर्गमम् ॥
कर्ताऽस्ति स च निर्द्वन्द्वः स चैकः स च सर्ववित् ।
स च कारुणिको वेति प्रतिपत्तुं न शक्यते ॥
परस्परविरुद्धाश्च सन्ति भूयांस आगमाः ।
तेषां कस्येश्वरः कर्ता कस्य नेति न गम्यते ॥
वेदे दोषाश्च विद्यन्ते व्याघातः पुनरुक्तता ।
फलस्यानुपलम्भश्च तथा फलविपर्ययः ॥
सिद्धकार्योपदेशाच्च वेदे संशेरते जनाः ।
किमस्य कार्ये प्रामाण्यं सिद्धेऽर्थे वोभयत्र वा ॥

तेन वेदप्रमाणत्वं विषमे पथि वर्तते ।
जीविकोपायबुद्धया वा श्रद्धया वाऽभ्युपेयताम् ॥

2 विकल्पयोनयश्शब्दा विकल्पाश्शब्दयोनयः ।
कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यतः ॥

भिक्षुणा जातिमात्रस्य तथा जातिमतोऽपि वा ।
जातिमद्योगस्य चापि वाच्यत्वमिह दूषितम् ॥

एकस्यार्थस्वभावस्य प्रत्यक्षस्य सतः स्वयम् ।
कोऽन्यो न दृष्टो भागः स्याद्यः प्रमाणैः परीक्ष्यते ॥

वस्तुरूपं हि निर्भागं तत् प्रत्यक्षनिवेदितम् ।
अतो बलाल्लिङ्गशब्दौ अपोहविषयौ मतौ ॥

नागोनिवृत्तिर्नासप्तिनिवृत्तिर्वाऽवबुध्यते ।
किंतु वस्तुस्वरूपेण स शब्दार्थोऽवगम्यते ॥

व्यावृत्तेष्वनुवृत्तं तं अपश्यन्तः परीक्षकाः ।
अतद्व्यावृत्तिरूपं तं सुनिष्कृष्य प्रचक्षते ॥

अनादिवासनावेगात् व्यावृत्तिरपि सा पुनः ।
सद्रूपमिव भिन्नं च तत्रतत्रावभासते ॥

3 इति सौगतसिद्धान्तः एष शाब्दिकसौगतः ।
तद्वाक्यार्थात्मना वाक्यं निर्भागं हि विवर्तते ॥

वाक्यार्थो वाक्यतो नार्थान्तरमित्यवधार्यते ।
शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ॥

विभागैः प्रक्रियामात्रमविद्वान् प्रतिपद्यते ।
शाब्दवैवर्तवादोऽयं वाक्यार्थे ह्यस्य विस्तरः ॥

4 शाक्या वैशेषिकाश्चापि पृथक् शब्दस्य मानताम् ।
नाङ्गीकुर्वन्ति तैरुक्तं वचनं चेदमुच्यते ॥
प्रत्यक्षमनुमानं च प्रमाणे सद्दशात्मनः ।
अप्रत्यक्षस्य संबन्धात् अन्यतः प्रतिपत्तितः ॥
अपोद्धृताभिधायी च शब्दः वस्तु न संस्पृशेत् ।
अपोहवाचोयुक्त्या च शून्यता सैव सम्मता ॥
प्रशस्तपादभाष्यानुवादोऽप्येष निशम्यताम् ।
वक्तृप्रामाण्यसापेक्षः श्रुतिस्मृत्यादिलक्षणः ॥
आम्नायोऽप्यनुमानं तद्वचनादिति सूत्रणात् ।
वक्तृज्ञानानुमानेन प्रामाण्यं तस्य सम्मतम् ॥

## (87) शब्दप्रामाण्यवादः.

1 अत्रोच्यते वेदविदां सम्प्रदायस्य संग्रहः ।
यदर्थं सकलं शास्त्रं मीमांसाख्यं प्रवर्तितम् ॥
पदार्थानां तु संसर्गमसमीक्ष्य प्रजल्पतः ।
वक्तुरेव प्रमादोऽयं न शब्दोऽत्रापराध्यति ॥
तेनाभिधातृदौरात्म्यकृतेयमयथार्थता ।
प्रत्ययस्येति, शब्दानां नार्थासंस्पर्शिता स्वतः ॥

अनुच्चारितशब्दोऽपि पुरुषो विप्रलम्भकः ।
हस्तसंज्ञाद्युपायेन जनयत्येव विप्लवम् ॥
या तु जात्यादिशब्दार्थपराकरणवर्त्मना ।
अर्थासंस्पर्शिता सैषाऽपोहवादे निराकृता ॥
2 तत्रानुमानमेवेदं बौद्धैर्वैशेषिकैराश्रितम् ।
भेदस्संख्यादिभिस्त्विष्टः न सूक्तं भेदकारणम् ॥
पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ।
यदाधिक्यं भवेत्किंचित् तत्पदस्य न गोचरः ॥
धूमादौ देशकालादिद्वारा त्ववगते सति ।
संबन्धनियमे तेन गमकत्वं प्रतीयते ॥
शब्दस्य गमकत्वं तु प्राग्वृद्धेभ्योऽवगम्यते ।
न संबन्धान्तरं तत्र नचाप्यत्रात्मसंश्रयः ॥
वृद्धेषु पूर्वपूर्वेषु गमकत्वं हि गृह्यते ।
अथोत्तरोत्तरेषां तु गमकत्वग्रहो भवेत् ।
यावन्तो यादृशा येच यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्याः ते तथैवावबोधकाः ॥
तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेकवक्तृत्वं क्रमश्चापि विवक्षितः ॥
तस्माद्गमकतैवादावभिधायकता ततः ।
ज्ञायते तन्निमित्तेति संज्ञासंज्ञित्वलक्षणा ॥

प्रसिद्धा हीन्द्रियं लिङ्गं अभिधायकमित्यपि ।
एवमन्येऽपि गमकविशेषाः तत्र चेन्द्रियम् ॥
सत्तामात्रेण गमयत्यर्थं सन्निहितं पुनः ।
यत्तु व्याप्यतया ज्ञायमानं लिङ्गं तदुच्यते ॥
गमकं व्यापकस्यैतत्, यत्त्वेतदभिधायकम् ।
गमकत्वस्यावगमादेव तद्गमयत्यदः ॥
तत्संज्ञापरपर्यायमभिधायकतात्मकम् ।
संबन्धमध्यवस्यन्ति नान्यमित्यवधार्यते ॥
औत्पत्तिकस्स शब्दस्यार्थेनेत्येष हि विश्रुतः ।
यस्त्रिप्रमाणक इति चोपमाने निरूपितः ॥
वाक्यार्थे तु पदार्थेभ्यस्संबन्धानुभवादृते ।
बुद्धिरुत्पद्यते तेन भिन्नाऽसावक्षबुद्धिवत् ॥
संकेतमूलो वेदस्स्याच्चेष्टावद्बोधकत्वतः ।
शब्दत्वाद्वा देवदत्तनिनदादिवदित्यसत् ॥
संकेतयितुरज्ञानात्संप्रदायेऽपि संतते ।
बोधकत्वं ततो नित्यमनुमानं तु बाधितम् ॥
यथा वह्नौ दाहकता यथा बोधकतेन्द्रिये ।
तथा शब्दे गमकता दृष्टा स्वाभाविकी च सा ॥
तस्याश्च ग्रहणं चापि शब्दे लिङ्गवदिष्यते ।
तथाऽपि शब्दो नार्थस्य लिङ्गं भवितुमर्हति ॥

बोध्यबोधकभावोऽत्र संबन्धोऽन्यत्रचापरः ।
व्याप्यव्यापकभावस्स्यात् धीद्वारं तु द्वयोस्समम् ॥
3 तत्राकाङ्क्षादिमद्वाक्यताद्दृग्वाक्यार्थयोरपि ।
स्वभावाद्यदि संसर्गः नियमो व्याप्तिरेव सः ॥
इति वैशेषिकस्वान्तमेष नैयायिकाशयः ।
संकेतरूपस्संबन्धः संबन्धत्वेन भासते ॥
न साहचर्यरूपेण तेन न व्याप्तिलक्षणः ।
साहचर्यं च संबन्धः संमतो लिङ्गलिङ्गिनोः ॥
शब्दार्थयोश्च समयस्सामग्रीभेदतो भिदा ।
वह्निः क्षुरं मोदकश्चेत्यादिशब्दप्रयोगतः ॥
दाहनं पाटनं च स्यात्पूरणं सहितौ यदि ।
साहचर्यं नैव तस्मात् शब्दो मानान्तरं मतम् ॥
मीमांसकानां सिद्धान्ते नियमो व्याप्तिरुच्यते ।
शक्तिर्बोधकता, तेन नानुमानं प्रसज्यते ॥
संबन्धग्रहणं चापि त्वनन्तैर्न च संभवि ।
अपूर्वोऽपि च वाक्यार्थः कदाचिदनुभूयते ॥
येचान्विताभिधानस्य वादिनः तन्मते पुनः ।
गृहीत एव संबन्ध इति शङ्का भवेदपि ॥
शब्दो मानान्तरं लोकवेदसाधारणं मतम् ।
वर्णराशिः क्रमव्यक्तः पदमित्यभिधीयते ॥

पदानां सन्निधिर्वाक्यं तद्राशिः ग्रन्थ इष्यते ।
इति कौमारिलमतं अथ प्राभाकरं पुनः ॥

4 गुरुर्लौकिकशब्दानामनुमानत्वमिच्छति ।
सर्वशब्दानुमानत्ववादिनः कणभोजिनः ॥
अत्र लौकिकवाक्यानां व्यभिचाराभिमानतः ।
अर्थासंस्पर्शितां शब्दस्याहुः केचित्पुराविदः ॥

5 अत्र प्रतिब्रुवाणानामभिप्रायोऽयमुच्यते ।
विवक्षितार्थविज्ञानमिन्द्रियार्थनिबन्धनम् ॥
तस्य ज्ञानं च वाक्येन लिङ्गभूतेन गम्यते ।
ज्ञात्वैवार्थं ब्रवीतीति य एवमवधारितः ॥
तस्य ज्ञानेन नियतं वाक्यं ज्ञानानुमापकम् ।
ज्ञानं चार्थाविनाभावि तेनार्थेऽपि विनिश्चयः ॥
ततोऽर्थे निश्चिते पश्चात्सोर्थो वाक्येन गम्यते ।
तस्यां दशायां वाक्यस्य तस्य स्यादनुवादता ॥
वाक्यार्थस्यानुमानेन व्यभिचारभये गते ।
अभिधत्ते पुनर्वाक्यमनुवाद इति स्थितम् ॥

6 नान्तरीयकताऽभावाच्छब्दानां वस्तुभिस्सह ।
नार्थसिद्धिस्ततस्ते हि वक्त्रभिप्रायसूचकाः ॥
इति कीर्तिवचोमूलो विचारोऽत्रावधार्यताम् ।
व्यवहाराविसंवादान्मानतेन्द्रियलिङ्गयोः ॥

आप्तवादाविसंवादाच्छब्दः प्रामाण्यमृच्छति ।
पूर्वं वाक्यं लिङ्गभूतं वक्तुर्ज्ञानावधारणे ॥
वक्तृज्ञानप्रसूतं हि वाक्यं तत्कार्यमिष्यते ।
कार्यात्कारणसिद्धिश्च सर्वेषामपि सम्मता ॥
ततश्च पुंवाक्यमात्रं न शास्त्रमभिधीयते ।
नन्वर्थ एव प्रथमं पुंवाक्येनावगम्यते ॥
अन्यथा तु कथं वक्तुः धीर्विशिष्टाऽनुमीयते ।
अर्थेनैव विशेषो हि निराकारतया धियाम् ॥
नचाप्रतीतेनार्थेन विशेषो ह्यवगम्यते ।
अत्र ब्रूते यथार्थत्वशङ्कयाऽर्थो न निश्चितः ॥
अनिश्चितो नहि ज्ञात इति तात्पर्यसंग्रहः ।
वाक्याद्वाक्यार्थानुमानवादिनस्सौगतानुगाः ॥
वैशेषिकाश्च गुरवः वक्तृज्ञानानुमाविदः ।
तत्रापि गुरवो लोकवाक्यमात्रानुमाविदः ॥
अपौरुषेयमेवैकं शास्त्रं वाक्यचयात्मकम् ।
तत्रापि चोदना शास्त्रं नाभिधेति विनिर्णयः ॥
आप्तवादाविसंवादसामान्यादनुमानतः ।
अभिन्नत्वमनूद्येत्थं दूषितं श्लोकवार्तिके ॥
आप्तवादाविसंवादादत्रचेदनुमानता ।
निर्णयस्तावता सिद्ध्येद्बुद्ध्युत्पत्तिर्न तत्कृता ॥

अन्यदेव हि सत्यत्वमाप्तवाक्यत्वहेतुकम् ।
वाक्यार्थश्चान्य एवेति ज्ञातः पूर्वतरं ततः ॥
तत्रचेदाप्तवादेन सत्यत्वमनुमीयते ।
वाक्यार्थप्रत्ययश्चात्र कथं वाऽनुमितिस्त्विति ॥

7 अलंकारविदः प्राहुश्शब्दानां विषयो द्विधा ।
प्रतिपाद्योऽनुमेयश्च प्रथमोऽपि द्विधा मतः ॥
वाच्यो व्यङ्ग्यश्चेति ततः विवक्षालक्षणः परः ।
विवक्षाविषयत्वे तु शब्दानां लिङ्गता मता ॥
व्यङ्ग्यस्वरूपे विषये शाब्दता स ध्वनिर्मतः ।
असौ वादः पूर्वमुक्तवादसंस्कारमूलकः ॥

## (88) शब्दप्रमाणपरिकरः

1 आप्तवाक्यं तु शब्दः स्यादाप्तत्वमिदमुच्यते ।
प्रतारणाद्यप्रयोज्यहिताहितमनीषयोः ॥
प्रयोजकत्वमाप्तत्वं समानं वेदलोकयोः ।
इति कैश्चिन्निरुक्तं स्यात् अन्यैरपरथा यथा ॥
यदनाप्तानुच्चरितं वाक्यं शब्द स्स इष्यते ।
प्रमाणं तल्लोकवेदसाधारणमिति स्थितम् ॥

2 अर्थावबोधकश्शब्द इत्याहुस्स्फोटवादिनः ।
श्रोत्रग्राह्यश्शब्द इति तत्प्रतिद्वन्द्विद्वाषितः ॥

3 आप्तवाक्यं शब्द इति प्राहुर्न्यायविशारदाः ।
आप्तो यथार्थवक्तेति पौरुषेयत्वसिद्धये ॥
वेदानां प्रोच्यते, तेन प्रामाण्यं परतो मतम् ।
पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ॥
शाब्दबोधः फलं तत्र शक्तिधीस्सहकारिणी ।
आसत्तिर्योग्यताऽऽकाङ्क्षा तात्पर्यज्ञानमिष्यते ॥
कारणं, सन्निधानं तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥
यत्पदेन विना यस्याननुभावकता भवेत् ।
साऽऽकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥
इति न्यायविदां मार्गः वैदिकानां पुनस्त्वसौ ।
परस्परापेक्षितत्वमाकाङ्क्षा स्यात्पदार्थयोः ॥
तात्पर्यविषयार्थानां बाधाभावो हि योग्यता ।
पदजन्या पदार्थानामासत्तिः स्यादुपस्थितिः ॥
तत्तदर्थप्रतीतीच्छा तात्पर्यं वक्त्रवस्थिता ।
वेदेऽपीच्छासमाकारः व्यापारोऽभ्युपगम्यते ॥
शरीरवादे प्रागुक्ता तन्त्रवार्तिकपद्धतिः ।
तन्निर्णयाय मीमांसा न्यायनिर्णयलक्षणा ॥
लोके तु वक्तुरिच्छेयं ज्ञेया प्रकरणादिना ।
लौकिकोऽलौकिकश्चेति शब्दोऽतो द्विविधो मतः ॥

4 शब्दार्थयोस्तु संबन्धो वृत्तिस्सा हि चतुर्विधा ।
मुख्या गौणी लाक्षणिकी तात्पर्यं चेति भेदतः ॥
मुख्या वृत्तिश्शक्तिरेषा सा पदार्थान्तरं मता ।
जातावेव हि शक्तिस्स्यात् व्यक्तिधीस्तुल्यवित्तितः॥
आक्षेपाद्वा स चाक्षेपः लक्षणा लिङ्गमेव वा ।
अर्थापत्तिः कुब्जशक्तिरित्येवं हि विकल्प्यते ॥
या स्वरूपसती शाब्दबोधे शक्तिः प्रयोजिका ।
व्यक्तिनिष्ठा कुब्जशक्तिरिति प्राभाकरा विदुः ॥

5 अवस्थानेऽपि चैकत्र मुख्यवृत्तेरसौ पुनः ।
तात्पर्यवृत्तिरन्यत्र दूरे संक्रमतेऽन्यथा ॥
सामान्यतः प्रयोगेऽपि विशेषावगतिः कथम् ।
तात्पर्यवृत्तिरभिधावृत्तेरपि बलीयसी ॥
यत्परस्स हि शब्दार्थ इति तस्माद्विदुर्बुधाः ।
प्रवृत्तिस्सर्वशास्त्राणां यस्मात्तात्पर्यनिर्णये ॥
पदार्थपर्यवसितोऽभिधाव्यापार इष्यते ।
तथापि तात्पर्यवृत्तिरपर्यवसिता मता ॥
अपर्यवसिता वृत्तिर्यत्र तत्रैकवाक्यता ।
सा पर्यवसिता या स्यात्पदे वाक्ये च केवले ॥
गुणसंबन्धतो गौणी लक्षणा शक्ययोगतः ।
तात्पर्यशक्तिः तात्पर्यनिर्णयात्सा बलीयसी ॥

तां लक्षणां केचिदाहुः बोध्यसंबन्धरूपतः ।
असतोऽपि हि शब्दोत्थज्ञानगोचरतेष्यते ॥
तथाऽगृहीतसंबन्धाः पदार्था एव सर्वशः ।
आगमार्थं बोधयन्तः बलीयांसो भवन्ति हि ॥
नियमस्मरणापेक्षाल्लिङ्गात्प्रबल आगमः ।
विशेषतश्च वेदस्य निर्दोषत्वाद्बलिष्ठता ॥
अव्युत्पन्नश्शब्दराशिः स्वस्वरूपं हि बोधयेत् ।
अतश्च देवताशब्दः स्वरूपे पर्यवस्यति ॥
6 अभिधेयेन संबन्धात्साहश्यात्समवायतः ।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता ॥
भर्तृमित्रवचस्त्वेतत् अपरैष्षाड्विधा मता ।
जहदादिविभेदेन त्रिविधा नव्यवैदिकैः ॥
7 पदार्थबोधनं शब्दशक्तिजन्यत्वतः पदैः ।
पार्थसारथ्यादिबुधैः अभिधानमितीर्यते ॥
संस्कारोद्बोधनद्वारा पदार्थानां तु बोधनम् ।
तत्स्यात् स्मरणमेवेति चिदानन्दादयो विदुः ॥
पदार्था एव वाक्यार्थं पुनस्संसर्गलक्षणम् ।
बोधयेयुर्लक्षणया तात्पर्यानुपपत्तितः ॥
मीमांसाशास्त्रनिष्णाताः नव्याः प्राहुर्बुधोत्तमाः ।
तस्मान्नानापदार्थानुरक्तो वाक्यार्थ इष्यते ॥

पदार्थमूलो नामूलो नच संकेतमूलकः ।
विस्तरोऽस्य त्वन्विताभिधाने चाभिहितान्वये ॥

(89) शब्दविभागः

1 ऋल्क्सूत्रे महाभाष्ये शब्दभेदो निरूपितः ।
चतुष्टयी हि शब्दानां प्रवृत्तिरिह जायते ॥
जातिशब्दाः क्रियाशब्दाः गुणशब्दाः तथा परे ।
यदृच्छाशब्दसंज्ञाः स्युः ते च डित्थादयो मताः ॥
ये प्रवृत्तिनिमित्तं तदर्थस्थमनपेक्ष्य च ।
प्रयोक्त्रभिप्रायमात्रात्प्रवर्तन्ते हि ते पुनः ॥
शब्दस्वरूपमेवात्र निमित्तमिति निर्णयः ।
अथचालंकारिकोक्तो विभागस्त्वपरो यथा ॥

2 चतुर्धा वाचकश्शब्दः जातिवाचक आदिमः ।
द्वितीयो गुणवाची स्यात् तृतीयः कर्मवाचकः ॥
द्रव्यवाची तुरीयः स्यात् तेषां विवरणं त्विदम् ।
अनुप्राणनहेतुर्यः धर्मः तस्य हि वाचकः ॥
जातिवाचक इत्युक्तः तत्रानुप्राणनं पुनः ।
विशेषतो याऽऽकाङ्क्षा स्यात् शान्तिस्तस्या इतीर्यते
जातिः प्राणप्रदात्रीति चात एवाभिधीयते ।
अर्थस्यानुप्राणितस्य सिद्धधर्मो विशेषणम् ॥

यत्स्यात्तद्वाचकश्शब्दः गुणवाचक उच्यते ।
तादृशो यस्साध्यधर्मः तद्वाची कर्मवाचकः ॥
एतत्त्रितयसंयुक्तं वस्तु द्रव्यमितीर्यते ।
तद्वाचको द्रव्यवाचीत्येवं प्राज्ञैरनूदितम् ॥
जातिस्सामान्यमित्याद्या जातिमात्रस्य वाचकाः।
व्यक्तिस्स्वरूपमित्याद्या व्यक्तिमात्रस्य वाचकाः॥
गोघटाश्वादयो जातिविशिष्टव्यक्तिवाचकाः ।
गुणादिवाचकाश्शब्दाः द्रव्यपर्यन्तबोधकाः ॥
असौत्रोऽपि च मत्वर्थीयादिस्तद्गुणवाचिनः ।
निष्कर्षप्रतिरुद्धायाः शक्तेरुत्तम्भको मतः ॥
वैभवात्क्वचिदायातः भूरिकेवलदर्शनात् ।
नचेत्तेषामसाधुत्वप्रसङ्गो दुर्निवारणः ॥
गुणैकनियतास्तावद्गन्धरूपरसादयः ।
गन्धत्वाद्यवच्छिन्नगन्धादिगुणवाचिनः ॥
तेषां न द्रव्यपर्यन्ता वृत्तिः क्वचन दृश्यते ।
न गन्धः पद्ममित्यस्ति सामानाधिकरण्यधीः ॥
सामान्यतश्च शब्दानामर्था अपि चतुर्विधाः ।
मुख्यो गौणो लाक्षणिकस्तात्पर्यार्थ इति श्रुताः॥
स्याद्वाचको लाक्षणिको व्यञ्जकश्चेति च त्रिधा ।
इतिचाप्यपरैरालंकारिकैः प्रविभज्यते ॥

3 नामाख्यातनिपातोपसर्गभेदैः चतुर्विधम् ।
पदं विभज्यते शास्त्रे सर्वस्मिन् पदवेदिभिः ॥

4 प्रादयो ह्युपसर्गास्स्युः निपाताश्चादयो मताः ।
तिङन्तास्त्वाख्यातसंज्ञाः सुबन्ता नामसंज्ञिताः ॥
उपसर्गा निपाताश्च वाचका द्योतका इति ।
मतद्वयं, वाचकत्वं शक्तिस्स्यात्सामुदायिकी ॥
विशेषणं द्योतकत्वं तच्च शक्त्यपवादनम् ।
सर्वं सर्वार्थशक्तं चेदपवादो ह्यपेक्ष्यते ॥
तदा पदान्तरं तत्स्यात् अन्वाख्यानमनर्थकम् ।
उक्ते विशेषणं, किंचिदुच्यमानविशेषणम् ॥
तेन शक्त्यपवादोऽयं भवेदर्थापवादवत् ।
चादयो वाचकाः प्राद्या द्योतका इति तार्किकाः ॥
सर्वेऽपि द्योतका एवेत्याहुश्शाब्दिककोविदाः ।
मीमांसकास्तु मध्यस्थाः चिन्तनश्रमभीरवः ॥

5 नैयायिकविभागोऽपि किंचिदत्र निरूप्यते ।
प्रकृतिः प्रत्ययश्चेति निपातश्चेति स त्रिधा ॥
निरुक्ता प्रकृतिर्द्वेधा नामधातुविभेदतः ।
यत्प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते ॥
रूढं च लक्षकं चैव योगरूढं च यौगिकम् ।
तच्चतुर्धा परैरूढयौगिकं मन्यतेऽधिकम् ॥

6 अम्बाम्बेति यदा बालश्शिक्षमाणः प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥
नापभाषतवै न म्लेच्छतवै इति यद्यपि ।
निषेधो वर्ततेऽथापि प्रमादो धीमतामपि ॥
कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः ।
शिष्टाः दृष्टाः प्रयुञ्जानाः अपशब्दाननेकशः ॥
शब्दशास्त्रप्रवक्तारस्त्रयोऽपि मुनयः पुनः ।
शास्त्र एव स्खलन्तीति विवृतं तन्त्रवार्तिके ॥
अन्तो नास्त्यपशब्दानामितिहासपुराणयोः ।
मरणान्तो व्याधिरसौ यद्व्याकरणमुच्यते ॥
इति चौशनसाः प्राहुरिति प्राह बृहस्पतिः ।
दुष्टग्रहगृहीतो वा भीतो वा राजदण्डतः ॥
पितृभ्यामभिशप्तो वा कुर्याद्व्याकरणे श्रमम् ।
वृत्तिः सूत्रं तिलाः माषाः कपत्री कोद्रवौदनः ॥
अजडाय प्रदातव्यं जडीकरणमुत्तमम् ।
इत्थं शङ्कासंग्रहोऽथ समाधेरपि संग्रहः ॥
रूपान्तरेण देवास्ते विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुरुषौ लोके पङ्क्तिपावनपावनौ ॥
वरं हि जातास्तिमयः गभीरे हि जलाशये ।
न मानवाः व्याकरणशुद्धिहीनमुखा भुवि ॥
ऐन्द्रं चान्द्रं च माहेशं दौर्ग कौमारमेवच ।
कालापं चैवाऽऽपिशलं कातन्त्रादिकमुच्यते ॥
अष्टादश पुराणानि चाष्टौ व्याकरणानि च ।
ज्ञात्वा सत्यवतीसूनुश्चक्रे भारतसंहिताम् ॥
7 ननु चाशक्तिजा दोषाः प्रमादजनिताश्च ये ।
परिहर्तुमशक्यत्वान्न निषेध्या इति त्वसत् ॥
प्रमादमेव मा कार्षीः सामर्थ्याय यतस्व च ।
एवमर्थो निषेधोऽयं नाद्रियेतान्यथा ह्यसौ ॥
अन्ये सुखमुखारूढाः न क्लेशेन विवक्षवः ।
शक्ताश्चैवाप्रमत्ताश्च वदेयुरनिवारिताः ॥
अशक्तैर्नाशिताश्चान्ये दाक्षिण्याद्यनुवर्तनात् ।
जानन्तोऽपि प्रयुञ्जीरन् यदि शास्त्रं न वारयेत् ॥
तत्कथं नाम यत्किञ्चित् स्यादपभ्रंशकारणम् ।
दूरात्परिहरेयुस्तदिति यत्नो नियम्यते ॥
रीतिरेषा निषेधेषु चान्येषु परिगृह्यताम् ।
प्रमादश्चाप्यशक्तिश्च न पुरस्क्रियतां बुधैः ॥

आर्याश्च म्लेच्छभाषाभ्यः कल्पयन्तः स्वकं पदम् ।
पदान्तराक्षरोपेतं कल्पयन्ति कदाचन ॥
तस्माद्ये याज्ञिकैर्येषां वेद्यैर्वार्था निरूपिताः ।
तेषां त एव शब्दानामर्थाः मुख्या नचेतरे ॥

8 भेदो नाम पदार्थानामवच्छेदः परस्परम् ।
संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम् ॥
स्वप्राधान्यात्पदार्थानां धर्मावेतावुभावपि ।
धर्मिभेदेन भिद्येते न ह्येकत्वमुपाश्रितम् ॥
अर्थैकत्वादेकवाक्यमित्यत्रेदं विचिन्तितम् ।
भाष्यवार्तिकयोः पूर्वमीमांसायां विलोकयताम् ॥

9 नाम्नां द्विधैव संबन्धः सर्ववाक्येष्ववस्थितः ।
सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते ॥
सामानाधिकरण्यं च धर्मः शब्दगतः स्थितः ।
तस्य तात्पर्यविषयोऽप्यर्थस्ताच्छब्द्यमश्नुते ॥
सामानाधिकरण्यं तत्तादात्म्यमिति कीर्त्यते ।
विरोधैकान्तसिद्धान्ते तत्स्वरूपैक्यलक्षणम् ॥
तद्धि तावद्धर्मधर्मिजातिव्यक्त्यादिषूच्यते ।
धर्मधर्मिविभेदे तु सर्वथा नैक्यसंभवः ॥
धर्मभेदे तदायत्तो धर्मिभेदः व्यवस्थितः ।
स सिद्धान्तस्सौगतानामिति धीमाद्भिर्निश्चितः ॥

तादात्म्यं तु विदुः केचित् ये भेदाभेदलक्षणम् ।
जातिव्यक्त्यादिषु तथा तादात्म्यमुपयन्ति ते ॥
अनेकान्तविदस्ते स्युः भाट्टास्तन्मार्गयायिनः ।
भर्तृप्रपञ्चादयश्च तन्मार्गस्य प्रवर्तकाः ॥
धर्मधर्म्यादिषु भिदावादिभिस्तार्किकैः मतः ।
धर्म्यैक्ये धर्मयोर्भेदः धर्मैक्येऽपि च धर्मिणोः ॥
विशिष्टयोरप्यभेदः तथा शुद्धविशिष्टयोः ।
तत्सिद्धान्ते तु तादात्म्यं वदितुं बहुधोचितम् ॥
सामानाधिकरण्येन चैवं तादात्म्यलक्षणम् ।
ऐक्यं त्रिधा विशुद्धैक्यं विशिष्टैक्यं भिदाऽभिधा ॥
अखण्डरसवस्त्वैक्यं चतुर्धाचोपपादितम् ।
सत्यादिशोधकवचस्स्वतद्वयावृत्तिमार्गतः ॥
तत्त्वमस्यादिवाक्येषु चान्वयेनोपलक्षणात् ।
सर्वं खल्विदमित्यादौ मिथ्यार्थारोपणेन तु ॥
ज्योतींषि विष्णुरित्यादौ बाधया चोपपादितम् ।
यथाकथाऽपि विधया निर्विशेषं सुरक्षितम् ॥
ऐक्याध्यासापवादाश्च विशेषणविशेष्यता ।
सामानाधिकरण्यं च चतुर्धेत्यप्यवादिषुः ॥
विप्रो ब्राह्मण इत्यादौ विशुद्धैक्यं व्यवस्थितम् ।
इदं रजतमित्यादौ अध्यासस्स्याद्विवक्षितः ॥

देह आत्मेत्यादिदेशो त्वपवादः प्रकीर्त्यते ।
नीलमुत्पलमित्यादौ स्याद्विशेषणतेति च ॥
सविशेषब्रह्मविदः तत्त्वत्रयविदश्च ये ।
सर्वत्र तेषां तादात्म्यं विशिष्टाद्वैतलक्षणम् ॥
अविरोधान्तरङ्गत्वजातिभोगाद्यभेदतः ।
एकोक्तिरपृथक्सिद्धेः देशकालदशादिभिः ॥
परिणामविदो ये च भेदाभेदविदोऽपि च ।
अनेकान्तविदां तेषां तत् भेदाभेदलक्षणम् ॥
संप्रदायप्रभेदेन विवक्षाभेदतोऽपिवा ।
वेदान्तिनां भिदा तत्र विश्रुतेत्युपरम्यते ॥
10 चतुर्विधस्तथा भेदः पूर्वस्त्वात्यन्तिको मतः ।
औपाधिको द्वितीयस्स्यात् तृतीयः पारिणामिकः ॥
वैवर्तिकश्चतुर्थस्स्यात् अभेदोऽपि चतुर्विधः ।
अखण्डत्वं च तादात्म्यं वैशिष्ट्यं चौपचारिकम् ॥
अतश्च बाधाद्व्यैक्यात् आत्मत्वादुपचारतः ।
तच्चतुर्धा जगद्ब्रह्मसामानाधिकरण्यगीः ॥
स्वभावाच्च विवर्ताच्च संकल्पात्परिणामतः ।
चतुर्विधं कारणत्वं वादिभिस्तैर्विकल्प्यते ॥
तथा कूटस्थशब्दार्थः चतुर्धा परिदृश्यते ।
कूटस्थो निर्विकारस्स्यात्तथा साधारणोऽपिच ॥

मायाध्यक्षोऽथवा ज्ञेयः राशिवत्स्थित एववा ।
योगवृत्त्यैव कूटस्थपदमेवं विकल्प्यते ॥

(90) वेदवादः.

1 कूटस्थनित्यवर्णानां राशिर्वेदोऽभिधीयते ।
क्रमः प्रवाहानित्यस्स्यादिति मीमांसका विदुः ॥
क्रमावच्छिन्नवर्णौघस्सदा सर्वज्ञबुद्धिगः ।
कूटस्थनित्यं वेदाख्यं तत्त्वं श्रीमध्वसम्मतम् ॥
सृष्टिकाले च वर्णानामुत्पत्तिं प्रलये पुनः ।
विनाशं केचिदिच्छन्ति सैषा कल्पान्तनित्यता ॥
वर्णस्याशुविनाशेऽपि क्रमे स्वातन्त्र्यभङ्गतः ।
वेदनित्यत्ववादस्स्यादिति साधारणी सृतिः ॥
2 अथान्येषां वैदिकानामभिप्रायस्य संग्रहः ।
अयमेषः तत्त्वविद्भिः विनिर्णीतः प्रकाश्यते ॥
वेदो हि नित्योऽभिप्रायः कश्चित्स्यात्पारमेश्वरः ।
श्रुतिस्स्मृतिर्ममैवाज्ञेत्यादि मानं परश्शतम् ॥
तदभिव्यञ्जके वाक्ये वेदशब्दः प्रयुज्यते ।
प्रयुज्यते चाप्यर्थे हि वेदविच्छास्त्रविद्यथा ॥
यज्ञेन वाच इतिच बह्वृचैः पठ्यते श्रुतिः ।
हृदयेनाभ्यनुज्ञात इत्येषा मानवी स्मृतिः ॥

हृदयं वेद इतिच भाष्यं मेधातिथेरिह ।
महतां हृदयं वेद इत्यप्याह कुमारिलः ॥
महत्परिग्रहो ह्येष विशेषो ह्यागमान्तरात् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥
अपिचोदयनाचार्यैः यन्न्यायकुसुमाञ्जलौ ।
उत्पत्तितो वाऽभिव्यक्तितो वाऽभिप्रायतोऽपिवा ॥
अनवच्छिन्नवर्णानां नैरर्थक्यमितीरितम् ।
तत्र नैयायिकमतमुत्पत्तिपदसूचितम् ॥
मीमांसकमतं चाथाभिव्यक्तिरिति कथ्यते ।
अस्वातन्त्र्यं हि रचनाविशेषे हि तदाशयः ॥
अथाभिप्रायत इति तदौपनिषदं मतम् ।
सर्वार्थसिद्धौ वेदान्ताचार्योक्तिरवबुध्यताम् ॥
एतदेवहि वेदस्यापौरुषेयत्वानित्यते ।
प्राक्प्रागुच्चारणाधीनोच्चार्यमाणत्वमेव तत् ॥
नह्येकरूपवाक्यस्य प्रवाहानादितां विना ।
प्रतिपद्यामहे वेदवाक्येष्वन्यामनादिताम् ॥
प्रतिकल्पं चैकरूपाभिसन्धिः परमेश्वरः ।
वाक्यं वदत्येकरूपमिति वेदस्य नित्यता ॥
नैतावताऽऽज्ञारूपत्वं वेदवाक्ये विहन्यते ।
द्योतयत्येव हि विभोरभिप्रायं सनातनम् ॥

अन्यथा करणे शक्तोऽप्येतं नान्यथयत्यसौ ।
धाता यथा पूर्वमिति स्वयमेवोपदिश्यते ॥
अव्यवस्थितशङ्काऽपि दूरेणोत्सार्यते ततः ।
सर्वेभ्यो वत्सलतरं शास्त्रमित्यपि कीर्त्यते ॥
वर्णं पदं वा वाक्यं वा स्फोटं तदतिरेकि वा ।
तत्त्वान्तरं वेति बुधाः जानते ये तु वैदिकाः ॥
प्रमाणानि पुनर्यानि ज्ञायन्ते तत्र भूरिशः ।
सर्वेषामत्र तात्पर्यमिति सामान्यनिर्णयः ॥
3 नित्यत्वादेरसिद्धत्वात्, अभ्युपेत्योच्यतेऽथवा ।
सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥
परिग्रहाच्च महतां प्रामाण्यमिह दुर्वचम् ।
ज्ञापकश्चायमप्यर्थः कारके संगतिः कुतः ॥
कोऽयं महाजनो नाम किमाचारः किमास्पदः ।
किंसंख्यः किंसमाचार इति व्याख्यातुमर्हसि ॥
महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
बौद्धाः द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥
प्रमाणान्तरदृष्टं हि शब्दोऽन्यं प्रापयेत्सदा ।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥
नूनं तत्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।
बुद्धिस्साक्षाददृष्टेऽपि युक्ताऽर्थे पुरुषोक्तितः ॥

नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसस्सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥
तेन सत्यपि विज्ञाने प्रतिभादेर्यथैव हि ।
स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥
स्वर्गयागादिसंबन्धविषया चोदना मृषा ।
प्रत्यक्षाद्यगतार्थत्वात् ईदृग्बुद्धादिवाक्यवत् ॥
यद्वाऽऽप्तेनाप्रणीतत्वात् बालोन्मत्तादिवाक्यवत् ।
व्योमादिवच्च नित्यत्वात्प्रामाण्यस्य निराकृतिः ॥
यदिवा पुरुषाधीनप्रामाण्यास्सर्वचोदनाः ।
स्वतो वा न प्रमाणं स्युः वाक्यत्वात्पुरुषोक्तिवत् ॥
प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।
शब्दैस्संबध्यमानत्वात् अप्रामाण्यं यथैव हि ॥
न स्याद्वक्तृगुणानां चेत् वचःप्रामाण्यहेतुता ।
तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥
ततश्च पुरुषाभावात्सति वा शुद्ध्यसंभवात् ।
निर्मूलत्वात्प्रमाणत्वं चोदनायां न युज्यते ॥
एवंस्थिते तु वेदस्य सतिवाऽसतिवा नरे ।
प्रामाण्यं दुर्लभमिति शङ्कायामिदमुच्यते ॥
4 स्वतस्सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥

तस्माद्बोधात्मकत्वेन बुद्धेः प्राप्ता प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥
अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।
वस्तुत्वाद्विविधस्यात्र संभवो दुष्टकारणात् ॥
पौरुषेये तु वचने प्रमाणान्तरमूलता ।
तदभावे हि तद्दुष्येत् इतरन्न कदाचन ॥
कर्तृमत्त्वे तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ।
कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ॥
एवमादि विना युक्त्या कल्प्यं, मीमांसकैः पुनः ।
इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ॥
तेन नाप्तोपदेशत्वं न स्यादागमलक्षणम् ।
नाप्तस्य संभवो वेदे, लोके नास्मात्प्रमाणता ॥
स्वतः सर्वप्रमाणत्वं नचेत्स्याद्दोषदर्शनम् ।
तेनैव सर्वाक्षेपाणां निवारणमिति स्थितम् ॥

(91) वेदवैलक्षण्यवादः

1 वेदाद्बुद्धागमस्यायं विशेषस्तन्त्रवार्तिके ।
निरूपितो विस्तरशः तत्संक्षेपोऽवधार्यताम् ॥
यदेव भवतां गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥

महाजनगृहीतत्वं पित्राद्यनुगमादि च ।
तेऽपि द्वीपान्तराक्षेपं वदन्त्येव स्वदर्शने ॥
संप्रदायविरुद्धं तद्वचनं ह्यवधार्यते ।
बुद्धोपदिष्टो धर्मोऽयं अनित्यं सर्वसंस्कृतम् ॥
क्षणिकास्सर्वसंस्काराः अस्थिराणां कुतः क्रियाः ।
बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकं च तत् ॥
नच शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम् ।
नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥
शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम् ।
2 स्थितैषां धर्मतेत्येतत् अर्थशून्यमतो वचः ॥
एषेत्यपि न निर्देष्टुं शक्या क्षणविनाशिनी ।
किमुत स्थितया साकं एषेत्यस्यैकवाक्यता ॥
तस्मान्नागमनित्यत्वं शब्दानित्यत्ववादिनाम् ।
नच पुंवचनं सर्वं सत्यत्वेनावगम्यते ॥
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ।
तस्मादपौरुषेयैव नित्या भवति नेतरा ॥
3 यद्धेतुदर्शनं तन्त्रवार्तिके विशदीकृतम् ।
तदेव चाप्युदयनः व्याचख्यौ कुसुमाञ्जलौ ॥
सम्यङ्निरूपिता न्यायपरिशुद्धौ पदव्यसौ ।
तत्संक्षेपोऽप्यत्र किंचित्क्रियते सुधियां कृते ॥

नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः ।
सन्ति किन्तु स्वतस्तस्य प्रामाण्यमिति हि स्थितिः ॥
वक्तुराशयदोषेण केषुचित्तदपोद्यते ।
अङ्गुल्यग्रे हि मातङ्गयूथमित्येवमादिषु ॥
नित्ये हेतुगुणापेक्षा वेदे नास्तीशबुद्धिवत् ।
हेत्वभावान्न दोषश्चेद्वक्त्रभावादिहापि नः ॥
अकारणं यथा ज्ञानं प्रामाण्यमधिगच्छति ।
अकारणं तथा वाक्यं स्वतःप्रमितिकारणम् ॥
यदि हेतुगुणाभावादप्रामाण्यं प्रसज्यते ।
तदीश्वरप्रमायामप्यनिवार्यमिदं भवेत् ॥
अज्ञातकर्तृको वेदो यथा गन्धर्वभाषितम् ।
अप्रामाण्यपदं तद्वत् शङ्का स्यादिति चेन्न तत् ॥
महत्परिग्रहादेवानाप्तकर्तृकता स्वयम् ।
शङ्काकलङ्कसंबन्धं नार्हतीति विदां मतम् ॥
बाह्यागमेऽपि बहुलमहाजनपरिग्रहः ।
परिग्रहविशेषोऽतो महत्स्विह विवक्षितः ॥
विशेषस्तु मतो हेतुदर्शनादर्शनादितः ।
अनन्यगतिकैः स्वैररसिकैः जीविकार्थिभिः ॥
कुहकैर्वञ्चितैश्चात्र प्रसिद्धो हि परिग्रहः ।
प्रतिमाजल्पनं शाखाभङ्गः पाषाणपाटनम् ॥

इत्येताभिः कुत्सिताभिस्सिद्धिभिः वञ्चिताः परे ।
वैपरीत्यं सुप्रसिद्धमिह वैदिकदर्शने ॥
वञ्चनापटुभिः वेदाविद्भिरेते प्रतारिताः ।
इति चेत, किं वञ्चयन्ति स्वात्मानमपि केवलम् ॥
यैश्च सर्वे पटुप्रज्ञाः लोका जाताः प्रतारिताः ।
प्रतारका इति कथं उन्नीतास्तेऽपि च त्वया ॥
लोकोत्तरपटुप्रज्ञो भवानेव महीतले ।
सर्वप्रतारकैरेतैरपि नैव प्रतार्यसे ॥
अनुष्ठानप्रवाहोऽयं स्यादेवान्धपरंपरा ।
इत्यसत्, तत्प्रमाणादेः बाधादीनामदर्शनात् ॥
धर्मबुद्ध्यैव निरुपाधिक एष परिग्रहः ।
इति त्वदुक्त्यैव सिद्धेः किमस्माभिरिहोच्यताम् ॥
अनादिनिधने चास्मिन् संप्रदाये चलत्यथ ।
प्रक्रियान्तरमाश्रित्य प्रातिच्छन्दप्रवर्तनात् ॥
प्रतारका भवन्तीति श्रुतिस्मृतिविनिश्चितम् ।
युक्तिमच्चैतदित्यत्र संक्षिप्ता दिक्प्रदर्शिता ॥
4 तुल्ययोगक्षेमतया वेदवज्जगतोऽपिच ।
अकर्तृता स्यादिति चेत् न कुलालादिदर्शनात् ॥
नचात्र वर्णनित्यत्वं वेदनित्यत्वकारणम् ।
काव्यादिष्वपि तुल्यत्वात् किंत्वीदृक्क्रमयोगिता ॥

तत्र पुंयत्ननिघ्नत्वमस्ति यद्यपि यः पुनः ।
उच्चारणे स्वातन्त्र्यस्याभावस्साऽपौरुषेयता ॥

5 वेदतः पौरुषेयत्वशङ्का वेदेन शाम्यति ।
हेत्वन्तरसमुद्भूता हेत्वन्तरनिवारिता ॥

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

धर्ममूलं वेदमाहुः ग्रन्थराशिमकृत्रिमम् ।
तद्विदां स्मृतिशीले च साध्वाचारं मनःप्रियम् ॥

यावत्प्रभावाः श्रूयन्ते ऋष्याद्या वेदराशिषु ।
तादृशा एव सृज्यन्ते वेदान् दृष्ट्वा स्वयंभुवा ॥

अनधीत्यैव वेदानामाविर्भावयितृत्वतः ।
तपसा प्राप्य संस्कारात्तत्सूक्तत्वादिसंभवः ॥

तपःप्रभावान्मन्त्राणां ऋषिदर्शनसंस्कृतेः ।
शक्तिराधीयते काचित् यथाऽस्माकमधीतितः ॥

अर्थावबोधकत्वं तु शब्दशक्त्याऽन्यशब्दवत् ।
ऋषिदर्शनतोऽधीतेरपि शक्त्यन्तरोद्भवः ॥

अपूर्वकार्यनिष्पत्तावुपकुर्यादिदं ततः ।
काठकादिसमाख्याया निमित्तं चेदमेव वा ॥

प्रकृष्टं वा प्रवचनं तात्सिद्धा वेदनित्यता ।
मन्त्रब्राह्मणयोर्वेदनामधेयं च विश्रुतम् ॥

6 हितानुशासनं वाक्यं विधिरत्र विवक्षितः ।
लिङ्वाच्योऽपूर्व इत्यत्र ख्यातो व्युत्पत्त्यसंभवः ॥
विमर्शात्सिद्धिरितिचेत् विमर्शः स्मृतिरेव हि ।
अस्तु वा कार्य एवादौ व्युत्पत्तिः व्यवहारतः ॥
अन्वयव्यतिरेकाभ्यां शब्दशक्तिर्विविच्यते ।
प्रयुज्यन्ते सिद्धपराः वक्तृभिर्हि कथा यथा ॥
प्रतिष्ठा देशभेदश्च छागादिर्वा घृताञ्जनम् ।
यातनासाधनत्वं च गृह्यते विध्यपेक्षितम् ॥
प्रतीता देवताप्रीतिः अपूर्वमुपकल्प्यताम् ।
लिङो वाच्यतया द्वारं स्वरूपाद्वा किमन्यतः ॥
विग्रहो हविरादानं युगपत्कर्मसान्निधिः ।
प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥
इति वादो भवेदर्धचार्वाकमतिमूलकः ।
अनर्चिद्देवतापक्षे शाब्दमार्गक्रमस्त्वयम् ॥
किमर्थं किं केन कथं वेति स्याद्धि चतुर्विधा ।
आकाङ्क्षा तत्रचाद्यायाः पूर्तिस्स्वर्गादिना मता ॥
देवतां प्रीणयेदित्येतया शाम्यत्यनन्तरा ।
ज्योतिष्टोमेनेति नामधेयात्केनेति शाम्यति ॥
कथमित्यस्य शान्तिस्तु समानैवोभयोरपि ।
विशेषतश्च पुरुषः चोदनाशब्दसूचितः ॥

श्रुतिस्स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोहीत्येवं भगवतोदितम् ॥
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥

7 श्रुतिमूलतयैवैताः स्मृतयो यान्ति मानताम् ।
श्रुत्यैव निर्णये किंवा स्मृतिभिश्चेति चेन्न तत् ॥
दुर्बोधा वैदिकाश्शब्दाः प्रकीर्णत्वाच्च ये खिलाः ।
तज्ज्ञैस्त एव स्पष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताः ॥
इति प्राह मरीच्याख्यः देवलस्य वचः पुनः ।
सत्यप्यस्मिन् धर्मशास्त्रे गृह्यापेक्षां प्रदर्शयेत् ॥
मन्वादयः प्रयोक्तारो धर्मशास्त्रस्य कीर्तिताः ।
तत्प्रयुक्तप्रयोक्तारः गृह्यकारास्तु मन्त्रतः ॥
वेदा अनन्तास्संकीर्णाः विकीर्णाश्च क्वचित्तथा ।
उत्सन्नाश्च कदाचित्स्युः मन्वाद्याः कृत्स्नवेदिनः ॥

8 श्रुतिस्मृतिविरोधे तु विकल्पं केचिदूचिरे ।
भ्रमसंभवतः श्रुत्या स्मृतिबाधं परे विदुः ॥
विरोधे तत्त्वविषये बाध एव विवक्षितः ।
विकल्पासंभवाद्वस्तुष्विति विद्वद्विनिश्चितः ॥

स्मृतिद्वयविरोधे तु व्यवस्था स्यात्परिग्रहात् ।
मन्वादीनां स्मृतिष्वेव केचिच्छ्लोका अपस्मृतिः ॥
इति शाबरसिद्धान्तः कुमारिलमतं त्विदम् ।
बुद्धागमः पाञ्चरात्रागमाद्यास्स्युरपस्मृतिः ॥
इति विज्ञायते तत्र प्रत्युक्तिरियमुच्यते ।
नच क्वचित् स्मृतेर्बाधे सर्वानाश्वाससंभवः ॥
बाधकादर्शनाद्धेतुदोषक्लृप्तेरयोगतः ।
परिग्रहविशेषेण श्रुतिमूलत्वकल्पनात् ॥
विस्रम्भहेतुस्संवादः क्वचिद्बाह्यागमेऽस्त्यपि ।
भूयश्श्रुतिविरोधेन वैदिकैरपरिग्रहः ॥
9 पाञ्चरात्रागमस्त्वेकायनवेदान्तमूलकः ।
श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत् ॥
वेदत्वं नात्र संदिग्धं यं वाकोष्विति च स्मृतेः ।
ऋग्वेदपाठे पठितं व्रतमेतत्सुदुश्चरम् ॥
इति सेश्वरमीमांसासंप्रदायस्य संग्रहः ।
असौ नातीव विच्छिन्नोऽनूद्यते च परैरपि ॥
इत्थं हि शतदूषण्यां तृतीये भङ्ग ईर्यते ।
सोऽनुवादो दैवविदः इति माण्डूक्यकारिका ॥
भवेद्वाऽप्यथवाऽन्यद्वा विपश्चिद्भिः विमृश्यताम् ।
विचारस्यावश्यकत्वं न्यायशुद्धौ समर्थितम् ॥

10 ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥
इत्येतत्कोशसंत्यागाभिप्रायं नार्थगोचरम् ।
निष्पन्नयोगपुरुषविषयं वा विदुर्बुधाः ॥
शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणम् ।
उपदेशाद्धरिं बुध्वा विरमेत्सर्वकर्मसु ॥
इत्येतत्तीव्रसंयोगवतामेवाविपश्चिताम् ।
अलसानामास्तिकानां विस्रम्भायेति निर्णयः ॥

(92) शास्त्रवादः

1 चोदना चोपदेशश्च विध्युद्देशो विधिस्तथा ।
नियोगो वेद आदेशः शास्त्रं चैकार्थवाचिनः ॥
प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥
शासनाच्छंसनाच्चैव शास्त्रमित्यभिधीयते ।
पुराणे इतिच प्राह श्रीपराशरमाधवः ॥
2 सूत्रं तु त्रिविधं प्रायः पूर्वाचार्यैर्निरूपितम् ।
उपदेशात्मकं त्वाद्यं व्याख्यानं तदनन्तरम् ॥
उपपादनशास्त्रं स्यात्तृतीयं न्यायपूर्वकम् ।
अथ शब्दानुशासनमथ योगानुशासनम् ॥

इत्याद्यारम्भकं शास्त्रमुपदेशात्मकं मतम् ।
धर्मं व्याख्यास्याम इति तथाऽथो यज्ञमित्यपि ॥
तथाऽथातो दर्शपूर्णमासावित्यादि यत्पुनः ।
एवमाद्यारम्भशास्त्रं भवेद्व्याख्यानलक्षणम् ॥
अथातो धर्मजिज्ञासाऽथातो ब्रह्मेतिपूर्वकम् ।
जिज्ञासाघटितं शास्त्रं न्यायशास्त्रं प्रचक्षते ॥
यथोपदेशं च तथा यथामूलं यथामति ।
बोद्धव्यमिति भेदेन शास्त्रभेदः प्रवर्तते ॥

3 पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥
याज्ञवल्कयस्मृतिस्त्वित्थं, तथैव ह्याश्वमेधिके ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ।
इतिच श्रूयते, तत्राप्यधिकं राणके यथा ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं तुरीयं स्यात् विद्या ह्यष्टादश स्मृताः ॥

4 विभजन्ते त्रिधा केचित् मन्त्रब्राह्मणमादिमम् ।
इतिहासपुराणं च द्वितीयं परिकीर्तितम् ॥
धर्मशास्त्रं तृतीयं स्याद्विषयाणां व्यवस्थया ।
यज्ञो मन्त्रब्राह्मणस्य विषयस्सर्वसम्मतः ॥

इतिहासपुराणस्य लोकवृत्तं हि गोचरः ।
धर्मशास्त्रे पुनर्लोकव्यवहारव्यवस्थितिः ॥
अपवर्गपरीक्षायामैकाश्रम्यस्य खण्डने ।
गौतमीयन्यायभाष्ये एवं वात्स्यायनोऽब्रवीत् ॥
धर्मशास्त्रं तु सकलं पूर्वभागोपबृंहणम् ।
पुराणं चोपनिषदामिति केचिद्विविश्चते ॥
पुराणं धर्मशास्त्रं च सर्वं सर्वोपबृंहणम् ।
तत्स्मृत्यनवकाशेति बादरायणनिर्णयः ॥
5 आन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता लोकसंस्थितिहेतवः ॥
आन्वीक्षकीत्यात्मविद्या धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ च वार्तायां दण्डनीतौ नयानयौ ॥
इति कामन्दकी प्राहाथात्मविद्या विचार्यते ।
प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम् ॥
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ।
इत्युक्तयाऽऽन्वीक्षकी विद्यैवात्मविद्येति तन्मतम् ॥
एतमर्थं मनुरपि सप्तमे प्राह तद्यथा ।
त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ॥
आन्वीक्षकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ।
सत्यप्येवं मनोर्व्याख्याकाराणां हृदये पुनः ॥

आन्वीक्षिक्या विभेदेन त्वात्मविद्या प्रतीयते ।
विस्तरस्यानवसराद्विमृशन्तु बुधास्त्विदम् ॥
6 अस्त्यत्र कश्चिद्विशेषः विद्याधीरोदितो यथा ।
विद्यास्थानेषु धर्म्येषु गणितो न्यायविस्तरः ॥
स चाक्षपाद एवेति नियन्तुं नैव शक्यते ।
नच सर्वं सूत्रबद्धं विद्यास्थानमितीष्यते ॥
नचैक एव ह्येकस्य विद्यास्थानस्य सूत्रकृत् ।
नचास्ति राज्ञामाज्ञाऽत्र सूत्रकृदृषिरित्यपि ॥
सूत्रकृद्यदि सर्वज्ञः ऋषिस्सकल इष्यते ।
वार्तिकादेरनारम्भप्रसङ्गो दुर्निवारणः ॥
धर्मं व्याख्यातुकामस्य षट्पदार्थोपवर्णनम् ।
सागरं गन्तुकामस्य हिमवद्गमनोपमम् ॥
कणान्वा भक्षयेत्कामं माहिषाणि दधीनि वा ।
युक्तियुक्तं तु गृह्णीमः नतु तद्वाक्यगौरवात् ॥
स्मृतिसूत्रप्रवाहोऽयमनादिर्धर्ममण्डले ।
यथालोकं यथावेदं लौकिके वैदिकेऽपि वा ॥
यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपिवा ।
तदर्वाग्भिः तथाऽऽचार्यैः प्रमाणादिविचारणा ॥
प्रणिन्ये बहुधा तैस्तैः यथेष्टं मतमास्थितैः ।
इत्यादिः विस्तरो न्यायपरिशुद्धावुदीक्ष्यताम् ॥

7 उक्तानुक्तद्विरुक्तादिचिन्ता यत्र प्रवर्तते ।
ग्रन्थं तं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः ॥
शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥
एवंच सूत्रभाष्यादिग्रन्थानां लक्षणं पुनः ।
सर्वत्र विदितं तस्माद्दिङ्मात्रमिह सूचितम् ॥
संसारमोचकाः शाक्यभिक्षुनिर्ग्रन्थकादयः ।
सम्मता आगमाभासा इति वैदिकनिर्णयः ॥

## (93) मीमांसावादः.

1 धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥
मीमांसाशास्त्रसारार्थसंग्रहोऽतो विलिख्यते ।
दृश्यन्ते विबुधाः प्रायः हंसभ्रमरवृत्तयः ॥
मानबधेत्यादिसूत्रेण जिज्ञासार्थे विवक्षिते ।
मानेस्सनि विचारोऽर्थः मीमांसापदबोधितः ॥
सच लाघवतर्काख्यः वेदवाक्यार्थगोचरः ।
परीक्षाशास्त्रमेवैतन्नानुशासनलक्षणम् ॥
तृतीयसूत्रे स्पष्टार्थपरीष्टिपदयोगतः ।
जिज्ञासापदतत्त्वार्थः व्याख्यात इति गम्यताम् ॥

न्यायवार्तिकतात्पर्यटीकावाक्यं निशम्यताम् ।
मीमांसासंज्ञकस्तर्कस्सर्वो वेदसमुद्भवः ॥
सोऽतो वेदः रुमाप्राप्तकाष्ठादिलवणात्मवत् ।
यः पूजितविचारोऽसौ मीमांसाशब्दितस्त्विति ॥
कालादनादेर्मीमांसा प्रवृत्ता लोकतः पृथक् ।
संजग्राह पुनः न्यायान् तादृशान् जैमिनिर्मुनिः ॥
नह्येकस्तूपसंहर्तुमियतो न्यायसंचयान् ।
समर्थः पुरुषो लोक इत्युक्तं तन्त्रवार्तिके ॥
विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः ।
अतोऽनधीतवेदस्य विचारश्शास्त्रवारितः ॥
2 स्वाध्यायविधिवाक्यार्थः प्रथमं प्रविभज्यते ।
प्रवृत्तं शास्त्रमेतद्धि तादृग्विधिनिबन्धनम् ॥
तदर्थपूर्वपक्षांशसिद्धान्तांशप्रकाशकम् ।
कारिकायुगलं ह्येतत्प्राच्यैर्विलिखितं बुधैः ॥
विनाऽपि विधिना दृष्टलाभान्न हि तदर्थता ।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत्
लभ्यमाने फले दृष्टे नादृष्टफलकल्पना ।
विधेस्तु नियमार्थत्वान्नानर्थक्यं भविष्यति ॥
तत्रार्थकर्माध्ययनं सम्मतं सक्तुहोमवत् ।
भवेदध्यापनविधिप्रयुक्तं च स्वरूपतः ॥

विधेयं चोपनयनमङ्गमध्यापनस्य च ।
प्रभाकरस्याभिमतमेतदर्थचतुष्टयम् ॥
गुणकर्मात्वध्ययनमवघातादिवन्मतम् ।
नियमोऽत्र विधेयस्स्यात्प्रयुक्तं स्वविधेर्बलात् ॥
स्वस्योपनयनं चाङ्गमेवमर्थचतुष्टयम् ।
कुमारिलस्याभिमतं ज्ञानान्तत्वं समं द्वयोः ॥
तत्रौपनिषदानां तु मतं स्याद्भाट्टसम्मतम् ।
विशेषस्स्यादुभयतो ह्यक्षरग्रहणान्तता ॥
अलौकिकं चाहवनीयादिवद्गुरवो विदुः ।
आचार्यकं भट्टपादा लौकिकं तद्विजानते ॥
गुरोराचारमाश्रित्य वर्तन्तेऽन्तेनिवासिनः ।
यान्यस्माकमिति श्रुत्या तदेतदभिधीयते ॥
अध्यापयेदिति विधिप्रयुक्तेऽध्ययनक्रमे ।
अष्टवर्षादिनिर्देशात् स्पष्टा शूद्रानधिक्रिया ॥
नियमस्य विधेयत्वेऽप्यधिकारो नियम्यते ।
उपनीतो हि विद्यार्थी विद्या हि पुमपेक्षिणी ॥
अन्यथाऽनुपपन्नो हि विधिस्स्यादग्निविद्ययोः ।
कल्पकः, क्लृप्तनिर्वाहे कल्पना गौरवाऽऽहता ॥
3 चोदनालक्षणः कार्यं धर्मो वेदार्थ इत्यतः ।
वेदार्थः कार्यरूपस्स्यादिति व्याख्या गुरोर्मता ॥

प्रमाणं च स्वरूपं च धर्मस्यादौ निरूप्यते ।
श्रुत्यर्थाभ्यामिति व्याख्या भट्टपादस्य सम्मता ॥
मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् ।
तल्लक्षणप्रमाणाभ्यां वस्तुसिद्धिरितीर्यते ॥
द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥
अतएवातिदेशेऽपि विवादोऽस्त्यर्थकार्ययोः ।
तस्य तत्त्वं चातिदेशपारायणनिरूपितम् ॥
अन्यत्र ह्यन्यदीयस्य देशोऽतीदेश उच्यते ।
अन्यस्मिन्नन्यताऽभावादित्यष्येष निरूपितः ॥
शास्त्रेऽस्मिन् लक्षणपदं प्रमाणाध्याययोर्मतम् ।
चोदनालक्षणः शेषलक्षणं चेति दर्शनात् ॥
किमाद्यपेक्षितैः पूर्णस्समर्थः प्रत्ययो विधौ ।
तेन प्रवर्तकं वाक्यं ग्रन्थेऽस्मिन् चोदनोच्यते ॥
चोदना चोपदेशश्च विध्युद्देशो विधिस्तथा ।
नियोगो वेद आदेशः शास्त्रं चैकार्थवाचिनः ॥
प्रवर्तेऽहमिति ज्ञानं येन शब्देन जन्यते ।
स चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥
यश्चोदनालक्षणस्स्यात्स धर्म इति योजना ।
धर्मस्वरूपतात्पर्यवचनव्यक्तिलक्षणा ॥

स चोदनालक्षणः स्याद्यो धर्म इति योजना ।
धर्मप्रमाणतात्पर्यवचनव्यक्तिरुच्यते ॥
तादृग्लक्षण एव स्याद्धर्म इत्थंविवक्षया ।
निराकरणमिष्टं स्याद्वेदाप्रामाण्यवादिनाम् ॥
धर्मे तु चोदनैव स्याल्लक्षणं त्रितिकल्पनात् ।
मानान्तरस्य व्यावृत्तिस्तथा बुद्धागमस्य च ॥
चोदनालक्षणो ह्यर्थो धर्म एवेति योजना ।
वेदार्थस्य विचारेऽस्मिन् शास्त्रे धर्मं प्रसञ्जयेत् ॥

4 इत्थं ह्युपोद्घातवादः वृत्तो मुख्यार्थसंग्रहात् ।
वर्तिष्यते तर्कपादवादोद्देशार्थसंग्रहः ॥
नित्ये शब्दार्थसंबन्धे तत्प्रामाण्यव्यवस्थितिः ।
इति शब्दार्थसंबन्धवादे नित्यत्वसाधनम् ॥
भवेद्बुद्धस्मृतिरपि प्रमाणमिति शङ्कया ।
बाधिता स्मृतिमात्रस्य स्मृतिवादे प्रमाणता ॥
सर्वज्ञवादे सार्वज्ञ्यं न कस्यापीति साध्यते ।
धर्मे बुद्धादियोगीन्द्रप्रत्यक्षत्वानिवृत्तये ॥
स्वतः प्रामाण्यवादोऽपि वेदप्रामाण्यसिद्धये ।
प्रामाण्यं कारणगुणसंवादार्थक्रियादिभिः ॥
अनपोदितमेवार्थतथात्वं विषयाश्रितम् ।
तत्स्वतो गृह्यत इति विषयीकरणं हि तत् ॥

अर्थान्यथात्वमितरत् परतस्तद्धि गृह्यते ।
हेतुदोषादिसंवादबाधकप्रत्ययादितः ॥
निरालम्बनवादो यश्शून्यवादस्य चाङ्कुरः ।
निराकृतो यतो ह्यर्थसद्भावे धर्मचिन्तना ॥
पदस्याथ पदार्थस्य वाक्यवाक्यार्थयोरपि ।
सत्यत्वे धर्मचिन्ताऽतः स्फोटवादो निराकृतः ॥
जातेराकृतिवादे तु पदार्थत्वव्यवस्थितौ ।
अनित्यव्यक्तिसङ्गत्या नाप्रामाण्यप्रसञ्जनम् ॥
अपोहरूपा जातिश्चेत्सा भवेत्तुच्छलक्षणा ।
अतो निराकृतोऽपोहवादो वस्तुत्वसिद्धये ॥
प्रपञ्चः परमाणूनां पुञ्जश्चेत्स्यादतीन्द्रियः ।
सङ्गतिग्रहणासिद्ध्या वनवादो निराकृतः ॥
वेदाप्रामाण्यशङ्का स्यात्संकेतस्सङ्गतिर्यदि ।
तन्निरीश्वरवादोऽतः संबन्धाक्षेपदूषणे ॥
अपरोक्षविरुद्धेति शङ्का चित्रादिचोदना ।
चित्राक्षेपपरीहारे यथावद्विनिवारिता ॥
यज्ञायुध्यादिवत्स्वर्गगमनं त्वसमञ्जसम् ।
इतिशङ्काव्यवच्छित्त्यै चात्मवादोऽवतारितः ॥
स्याद्यदा क्षणिकश्शब्दः न शक्तोऽर्थावधारणे ।
निर्मूला वेदधीस्तस्मादुदिता वेदनित्यता ॥

धर्मसंस्थापनायैव भावनार्थव्यवस्थया ।
प्रतिभावाक्यवाक्यार्थवादाद्या विनिवारिताः ॥
वेदस्यापौरुषेयत्वं स्थापयित्वा परिष्कृता ।
चोदनालक्षणो धर्म इति सिद्धान्तपद्धतिः ॥
5 वृत्तिकारमतं चापि भाष्ये बहुलमुज्झितम् ।
भाष्यकारमतं चापि वार्तिके प्रायशस्तथा ॥
दूषितं चापि बहुशः प्रभाकरगुरोर्मतम् ।
भट्टपादस्य सिद्धान्ताः राणकेऽपि प्रदूषिताः ॥
राणके मातुलसुतापरिणीत्यादिसाधनम् ।
शास्त्रदीपप्रकाशे तु शङ्करेण प्रदूषितम् ॥
सोमेश्वरो ह्यन्यथयत् यद्वार्तिककृतां मतम् ।
तदुद्दूष्य पुनः सोऽहं प्रकृतिं स्वामथानयम् ॥
इतिबालप्रकाशोक्तिश्शाङ्करी परिदृश्यते ।
तस्माद्युक्तिप्रधानेयं मीमांसेत्यत्रधार्यताम् ॥
युक्त्यैव ह्यागमस्यापि प्रामाण्यादि प्रसाध्यते ।
युक्तिशास्त्रं न्यायशास्त्रं मानशास्त्रमिदं स्थितम् ॥
सर्वत्र सूत्रकर्तारस्सर्वज्ञाः ऋषयस्त्विति ।
न निर्बन्धो वार्तिकादेरनारम्भप्रसङ्गतः ॥
व्युत्पाद्यन्ते सहस्रं हि न्यायाश्शास्त्रे यथातथम् ।
तन्न्यायानुगृहीतोऽर्थः चोदनालक्षणो मतः ॥

इत्थं संक्षेपतस्तर्कपादवादार्थसंग्रहः ।
कृतोऽथाध्यायसारांशोद्धारः सम्यक् वितन्यते ॥

(94) अध्यायार्थसंग्रहः

1 धर्मधीर्मानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशाविशेषोहबाधतन्त्रप्रसक्तिभिः ॥
अमानस्य निरूप्यत्वायोगात्प्राथम्ययोगिना ।
प्रमाणलक्षणेनात्राभावि द्वादशलक्षणे ॥
वेदार्थभेदाभावे स्यादङ्गत्वादिरयुक्तिमान् ।
शास्त्रार्थभेदचिन्ताऽथ शब्दभेदादिमानतः ॥
सिद्धे भेदे शेषशेषिभावबोधनलक्षणम् ।
श्रुतिलिङ्गादिमानेन प्रवृत्तं शेषलक्षणम् ॥
प्रावर्तिष्टाथ जिज्ञासा शेषाणामेव शेषिभिः ।
प्रयोज्यत्वाय तुर्येऽस्मिन् क्रत्वर्थपुरुषार्थयोः ॥
प्रयुक्तेषु पदार्थेषु श्रुत्यर्थादिप्रमाणतः ।
अनुक्रान्तः पञ्चमे चाव्यवधानात्मकः क्रमः ॥
सक्रमे चापि शास्त्रार्थे स्थापितेऽथ निरूपितः ।
तत्प्रयोक्ता चोपदेशषट्केऽस्मिन् षष्ठलक्षणे ॥
2 अथोपदिष्टे प्रकृतिविचारे विकृतौ पुनः ।
सामान्यतोऽतिदेशोऽत्र सप्तमे स्थापयिष्यते ॥

विशेषतोऽतिदेशोऽथ प्रावर्तिष्टास्य कर्मणः ।
इदं प्रकृतिरित्यादिनिर्णयोऽष्टमलक्षणे ॥
सामसंस्कारमन्त्राणामूहः प्रकृतिगामिनाम् ।
विकृतावन्यथाकृत्वा संबन्धो नवमे मतः ॥
प्रत्याम्नान द्वारलोप पर्युदासनिषेधतः ।
विकृतौ प्राकृताङ्गानां निवृत्तिर्बाधलक्षणे ॥
तन्त्रं त्वनेकोद्देशेनानुष्ठानं सकृदिष्यते ।
अन्यार्थानुष्ठितेनान्यस्योपकारः प्रसञ्जनम् ॥
एकादशद्वादशयोः प्रमेयार्थाविमौ मतौ ।
कालसंख्यामन्त्ररूपनिमित्तफलकर्तृभिः ॥
सकृद्विशेषाग्रहणेऽनुष्ठानं तन्त्रमित्यपि ।
सप्तस्वेकविधेनापि विशेषग्रहणे सति ॥
सकृदेव ह्यनुष्ठानं प्रसङ्ग इति वोच्यते ।
एषोऽतिदेशषट्कार्थः प्रत्यध्यायं निरूपितः ॥

## (95) वेदनिरुक्तिवादः

1 मन्त्रब्राह्मणयोर्वेदनामधेयमिति स्मृतम् ।
कर्तव्यार्थस्मारकत्वं मन्त्रलक्षणमुच्यते ॥
परप्रत्यायनार्थास्तु मन्त्रा निगदसंज्ञिताः ।
विधायकपदव्यूहः ब्राह्मणं परिकीर्त्यते ॥

हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः ।
परक्रिया पुराकल्पः व्यवधारणकल्पना ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य हि ।
2 इति प्राचां विभागस्स्यादर्वाचामथचोच्यते ।
धर्मः प्रयोजनयुतो ह्यर्थस्स्यादबोधितः ।
सर्वस्यापिच वेदस्य धर्मे तात्पर्यमिष्यते ॥
विधिर्मन्त्रो नामधेयः निषेधश्च ततःपरः ।
अर्थवाद इति स्पष्टः वेदराशिर्हि पञ्चधा ॥
अज्ञातार्थज्ञापको यो वेदराशिर्विधिर्मतः ।
विध्यर्थवादमन्त्राश्च स्मृत्याचारौ च नाम च ॥
वाक्यशेषश्च सामर्थ्यं धर्ममानमितीरितम् ।
तत्र कर्मोत्पत्तिवाक्यं फलवाक्यं गुणश्रुतिः ॥
फलाय गुणवाक्यं च वाक्यं सगुणकर्मणः ।
फलवद्गुणवाक्यं चेत्येवं वाक्यं हि षड्विधम् ॥
आद्यो धात्वर्थमात्रस्य विधिरित्युच्यते बुधैः ।
अन्योद्देशेन धात्वर्थविधिस्तु स्यादनन्तरः ॥
तथा धात्वर्थमुद्दिश्य तृतीयोऽन्यविधिर्मतः ।
अन्योद्देशेनान्यविधिः चतुर्थ इति गीयते ॥
पञ्चमो गुणसंयुक्तधात्वर्थविधिरुच्यते ।
अन्योद्देशेन षष्ठस्स्याद्विशिष्टविधिरेवचेत् ॥

एवं विधिप्रकारस्स्यात् षड्विधोऽर्थविभेदतः ।
उत्तरोत्तरतः पूर्वपूर्वं लघ्विति निर्णयः ॥
विधिश्चतुर्विध इति विभक्तः प्रायशो बुधैः ।
3 उत्पत्तेर्विनियोगस्य तत्प्रयोगाधिकारयोः ॥
कर्मस्वरूपमात्रस्य बोधको विधिरादिमः ।
कर्मस्वरूपनिष्ठा या त्वज्ञातज्ञाप्यतात्मिका ॥
विधेयता स्यात्तच्छालिबोधस्य जनको ह्यसौ ।
अङ्गप्रधानसंबन्धबोधकस्स्यादनन्तरः ॥
प्रयोगप्राशुभावस्य तृतीयो बोधको मतः ।
कर्मजन्यफलस्वाम्यबोधकोऽधिकृतेर्विधिः ॥
एवंविधविभागस्य निदानमवधार्यताम् ।
उत्पत्तिविधिराद्यो यः स द्वितीये विचार्यते ॥
विनियोगविधिस्त्वन्यः यस्तृतीये विचार्यते ।
चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम् ॥
अधिकारविधिस्त्वन्यः यष्षष्ठाध्यायगोचरः ।
एवं प्रमेयवैविध्याच्चातुर्विध्यं प्रकल्पितम् ॥
चतुष्टयेऽपि चैकस्मिन् क्वचित्किंचिद्विवक्षितम् ।
एवं द्वयं त्रयं वापि क्वचिच्चापि चतुष्टयम् ॥
प्रवर्तनालक्षणस्य विधेस्त्रेधा विधेयता ।
यागत्वरूपेणाद्या स्यादिष्टहेतुतयाऽपरा ॥

कृतिसाध्यतयाऽन्या स्यादुत्पत्त्यादिविधिस्ततः ।
आकाङ्क्षाक्रमयोगेन त्रयस्ते क्रमयोगिनः ॥
शब्दान्तराभ्याससंख्यानामधेयगुणैस्सह ।
अन्यत्प्रकरणं चेति प्रमाणं कर्मभेदकम् ॥
कालो देशो निमित्तं च फलं संस्कार्यमेवच ।
सहकार्यनुपादेयपञ्चकं प्रक्रियान्तरे ॥
4 परोद्देशप्रवृत्तस्य नरस्य कृतिकारकम् ।
अङ्गं स्याद्द्रव्यजात्यादिस्सिद्धोऽप्यङ्गं ततो भवेत् ॥
इतिकर्तव्यत्वता तु तादृक्पुंकृतिसाध्यता ।
सा द्विधा संनिपत्यारादुपकारकभेदतः ॥
विधीयमानव्रीह्यादिद्रव्याद्युद्दिश्य या क्रिया ।
तत्संनिपत्योपकारकाङ्गं सर्वार्थमेव तत् ॥
अथवाऽङ्गिस्वरूपस्य निष्पादकमितीर्यते ।
द्रव्याद्यनुद्दिश्य यत्स्यात्तदारादुपकारकम् ॥
अदृष्टार्थं फलापूर्वोत्पत्तावेवोपयुज्यते ।
अथवोत्पत्त्यपूर्वीयशक्तिसंपादकं हि तत् ॥
5 कर्म द्विधा ह्यर्थकर्म गुणकर्मेति भेदतः ।
अर्थकर्म भवेदात्मगतापूर्वस्य कारणम् ॥
परं संस्कारजनकं तच्च द्विविधमिष्यते ।
यथोपयुक्तोपयोक्ष्यमाणसंस्कारभेदतः ॥

उपयुक्ताकीर्णकरद्रव्यस्य विहिते स्थले ।
प्रक्षेपः प्रतिपत्तिस्सा ह्युपयुक्तस्य संस्क्रिया ॥
उत्पत्तिराप्तिर्विकृतिस्संस्कृतिश्च परं भवेत् ।
आधानाधीत्यवाघातप्रोक्षणानीत्युदाहृतिः ॥
यत्स्यात्पशुपुरोडाशप्रभृतिष्वंशभेदतः ।
दृष्टार्थं चाप्यदृष्टार्थमाश्रयीत्युच्यते हि तत् ॥
नित्यकाम्यविभेदेन तथा कर्म विभज्यते ।
सर्वस्यैव च काम्यत्वे कामना न भवेद्यदि ॥
सर्वोऽपि वैदिकः पन्थाः भवेद्दत्तजलाञ्जलिः ।
सर्वस्यापि च नित्यत्वे त्वशक्तया स्यादवत्सलः ॥
तत्र नित्यं तु शक्याङ्गं काम्यमुक्ताङ्गकं मतम् ।
नित्यकाम्यस्वरूपैक्ये विनियोगपृथक्त्वतः ॥
फलार्थं क्रियमाणेऽपि नित्यं भवति तन्त्रतः ।
नित्येन काम्यसिद्धिं तु कल्पकाराः प्रचक्षते ॥
पापक्षयफलं नित्यं काम्यं चापि क्वचिद्यदा ।
आरब्धे कामनाहानावुक्ताङ्गाशक्तिसंभवे ॥
प्रत्यवायपरीहारफलं तन्नित्यमित्यपि ।
अपरे प्राहुरनयोर्विशेषस्सूक्ष्म इष्यते ॥
नित्यं सामान्यफलतः काम्यं फलविशेषतः ।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥

नैमित्तिकं कर्मभेदं प्रायश्चित्तादिलक्षणम् ।
प्राहुः परे तत्तु कर्म काम्यमेवेति केचन ॥
6 प्रवर्तको नैव लिङ्स्यात् तद्व्यापारोऽपि नेष्यते ।
तदर्थभेदो नाज्ञादिः न कार्यं नेष्टहेतुता ॥
अभिधाभावनैवेष्टा लिङाद्यभिहिता तु या ।
सैव प्रवर्तनाभिख्या प्रेरणेति च गीयते ॥
अर्थात्मा भावना त्वन्या सर्वाख्यातेषु दृश्यते ।
कृतिः प्रयत्नो व्यापार इत्यादिव्यपदेशभाक् ॥
णिजर्थात्तु लिङर्थोऽसौ विलक्षणतया मतः ।
ज्ञापकव्यापार एषः स तु कारकसंश्रितः ॥
प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्ते प्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥
विधिः प्रवर्तकत्वाख्यस्वरूपानुपपत्तितः ।
स्वर्गं साध्यतया यागं साधनत्वेन बोधयेत् ॥
भवितुर्भवनस्यानुकूलो भावयितुर्भवेत् ।
व्यापारो भावना सैषा शाब्दी चार्थीति भिद्यते ॥
आद्या प्रवर्तनाभिख्या लिङाद्यभिहितोदिता ।
नञस्संव्यवहारे तु बोध्यते सा निवर्तना ॥
पुंप्रवृत्त्यनुकूलात्मा व्यापारः शब्दगोऽग्रिमः ।
पुंनिवृत्त्यनुकूलात्मा व्यापारोऽनन्तरो मतः ॥

प्रवृत्तिस्तु भवेदार्थी भावनाऽऽख्यातबोधिता ।
तदभावो निवृत्तिस्तु नञा योगे तु बुद्ध्यते ॥
प्रयोजनेच्छाजनितः पुंव्यापारोऽत्र चादिमः ।
अनिष्टद्वेषजनितः तदभावोऽन्तिमो मतः ॥
7 साध्यं च साधनं चेतिकर्तव्यत्वमिति क्रमात् ।
किं केन कथमित्येवमाकांक्षात्रयपूरकम् ॥
शाब्दी प्रवृत्तिलिङ्गस्तोत्रैस्त्र्यंशा भवति भावना ।
आर्थी तु स्वर्गयागाङ्गैः त्र्यंशेति परिनिष्ठितम् ॥
अङ्गताग्राहकं मानं षड्विधं श्रुतिरादिमम् ।
लिङ्गं वाक्यं प्रकरणं स्थानं सह समाख्यया ॥
निरपेक्षः कण्ठरवः श्रुतिः लिङ्गं समर्थता ।
समभिव्याहृतिर्वाक्यं पदयोश्शेषिशेषयोः ॥
प्रक्रिया ह्युभयाकांक्षा स्थानं सादेश्यमिष्यते ।
समाख्या यौगिकश्शब्दः तेषां भेदान् प्रचक्ष्महे ॥
विभक्त्येकाभिधानैकपदभेदात्त्रिधा श्रुतिः ।
शब्दार्थसामर्थ्यभेदाल्लिङ्गं द्विविधमुच्यते ॥
इतिकर्तव्यताकाङ्क्षा द्वेधा प्रकरणं हि तत् ।
करणानुग्राहकं तादितिकर्तव्यतोच्यते ॥
महाप्रकरणं तत्र फलभावनया युतम् ।
अवान्तरप्रकरणमङ्गभावनया युतम् ॥

श्रुत्यादिसमवाये तु पारदौर्बल्यमिष्यते ।
बोधे विलम्बाविलम्बौ बलाबलानियामकौ ॥

8 समग्राङ्गोपदेशोऽस्ति यत्र सा प्रकृतिर्मता ।
चोदकाद्यत्र न प्राप्तिरङ्गानां साऽथवा मता ॥
वैकृतस्य विधेः काचिदाकांक्षा चोदको मतः ।
चोदकादङ्गसंबन्धः प्रकृतौ नास्ति कश्चन ॥
तत्प्रतिद्वन्द्विभूता या विकृतिस्सा निरुच्यताम् ।
उपदेशो वाक्यमित्थं कुर्यादित्येवमादिकम् ॥
अतिदेशास्त्विदं तद्वत्कुर्यादित्येवमादिकम् ।
प्राकृतात्कर्मणो यत्र तत्समानेषु कर्मसु ॥
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्थितिः ।
निष्कर्षस्तु प्रकृत्यङ्गसजातीयपदार्थगा ॥
या विकृत्यङ्गता तस्याः ग्राहकं वाक्यमिष्यते ।
अन्तर्नीतोपकारस्य पदार्थस्यैव सा मता ॥
उत्कर्षोऽप्राकरणिकनिवेशोऽत्रावगम्यते ।
अपकर्षोऽप्रकृततः प्रकृते संगमो मतः ॥

9 स्वप्रयोज्यत्वसहितसामानाधिकरण्यतः ।
फलेच्छया विशिष्टा या कृतिस्साऽधिक्रियोच्यते ॥
अधिकारो विधेः पुंसा संबन्धः प्राच्यसम्मतः ।
कर्मण्यैश्वर्यबोधो यः सोऽधिकारोऽधुनेरितः ॥

10 प्रयोगे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तयः ।
षडेतानि प्रमाणानि पौर्वापर्यात्मनि क्रमे ॥
श्रुतिः क्त्वाथादिशब्दस्स्यादर्थस्तु स्यात्प्रयोजनम् ।
पाठो मन्त्रब्राह्मणयोः स्थानं तादृगुपस्थितिः ॥
प्रधानक्रमतोऽङ्गानां क्रमो मुख्यक्रमो मतः ।
सैषा प्रवृत्तिः प्रथमक्रमतोऽनन्तरक्रमः ॥

11 प्रयोगसमवेतार्थस्मृतिर्भवति मन्त्रतः ।
तस्मात् स्मृतेर्हि नियमः नादृष्टफलकल्पना ॥
तच्छाब्दबोधहेतुत्वे तत्प्रामाण्ये विवक्षिते ।
विनियोजकवाक्येषु मन्त्राणां वेदवर्तिनाम् ॥
पदार्थविधया शाब्दबोधस्य करणत्वतः ।
धर्मे प्रमाणं मन्त्रास्स्युः इति केचित्प्रचक्षते ॥
धर्मानुष्ठानोपयोगिज्ञानहेतुत्वमेव चेत् ।
धर्मे मतं प्रमाणत्वं मन्त्राणामिदमक्षतम् ॥

12 नामधेयो विधेयार्थपरिच्छेदक इष्यते ।
मत्वर्थलक्षणापत्तिः वाक्यभेदभयं तथा ॥
तत्प्रख्यशास्त्रं तेनैव व्यपदेश इति क्रमात् ।
चतुर्विधं निमित्तं स्यादेके पञ्चविधं विदुः ॥
पञ्चमं तूत्पत्तिशिष्टगुणप्राबल्यमुच्यते ।
उद्भिच्चित्राऽग्निहोत्रं च श्येनश्चेति चतुर्विधा ॥

क्रमेणोदाहृतिरियं वैश्वदेवं तु पञ्चमम् ।
तत्प्रख्यशास्त्रान्नामत्वं पञ्चमस्येतरे विदुः ॥
यागेनानेन यक्ष्येऽहं तेन याजय मामिति ।
नाम्ना विनैवमादिर्हि व्यवहारो न सिद्ध्यति ॥
मीमांसाविधिवाक्यार्थज्ञानानुष्ठानलक्षणे ।
त्रिविधे व्यवहारेऽस्मिन् सर्वस्मिन्नाम कारणम् ॥

13 निषेधस्तु भवेद्वाक्यं यत्पूरुषनिवर्तकम् ।
प्रवर्तनारोधिनी तु नञर्थस्स्यान्निवर्तना ॥
तदन्यमात्रसंकोचपरता पर्युदासता ।
तन्मात्रसंकोचपर उपसंहार इष्यते ॥
उभयत्र हि सामान्यं विशेषे पर्यवस्यति ।
व्यापारस्तूपसंहारः विधिप्रत्ययसंश्रितः ॥
धातुनामान्यतरयुग्व्यापारस्त्वपरो मतः ।
उपाध्यसंकरन्यायात्समावेशः द्वयोः क्वचित् ॥

14 स्तुतिनिन्दाऽन्यतरतत्परं वाक्यमिहेष्यते ।
अर्थवाद इति प्राज्ञैः तत्प्रभेदश्चतुर्विधः ॥
स्तुतिर्निन्दा परकृतिः पुराकल्प इति क्रमात् ।
अथ केचिद्विवक्षातश्चान्यथा प्रविविञ्चते ॥
विरोधे गुणवादस्स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधेत्यपि ॥

अग्निर्हिमस्येतिवाक्यं मन्त्रत्वेन समर्थितम् ।
अर्थवादेऽनुवादस्य नोदाहरणमर्हति ॥
प्राशस्त्यादिमतिस्त्वर्थवादादेव नियम्यते ।
प्राशस्त्यादिस्ततो धर्मः नियमाद्दृष्टसाधनम् ॥
सोऽर्थवादो धर्मशाब्दबोधे विध्येकवाक्यतः ।
धर्मे प्रमाणमथवा निरुक्तज्ञानकारणम् ॥
15 यद्विभागे च साकाङ्क्षमेकार्थमविभागतः ।
तदेकवाक्यं द्विविधं पदवाक्यविभेदतः ॥
स्वजन्योपस्थितौ स्वार्थे विषये पदपूर्वकम् ।
स्वजन्यबोधे विषये स्वार्थे स्याद्वाक्यपूर्वकम् ॥
एकानेकार्थभेदेन स भेदः परिभाष्यते ।
सार्थवादोत्पत्तिविधिप्रयोगविधिभेदतः ॥
इत्थं पञ्चविधे वेदे प्रधानार्थानुबन्धिनाम् ।
निरुक्तिसंग्रहो ज्ञेयः सामान्यांशोऽथ लिख्यते ॥

(96) सामान्यनिरुक्तिवादः.

1 मन्त्रब्राह्मणपर्याप्ताखण्डोपाधिर्हि वेदता ।
मन्त्रत्वं ब्राह्मणत्वं चाखण्डोपाधिरितीष्यते ॥
ऋक्त्वं पादव्यवस्थावन्मन्त्रत्वमिति निर्णयः ।
मन्त्रत्वैकाधिकरणगीतित्वं सामता मता ॥

पुरोनुवाक्या पूर्वार्धे देवतायाः प्रकाशकः ।
मन्त्रो याज्या तूत्तरार्धे देवतायाः प्रकाशकः ॥
प्रगीतमन्त्रसाध्येन्द्रदेवतादिगुणाभिधा ।
स्तोत्रं शस्त्रं त्वप्रगीतमन्त्रसाध्यतथाऽभिधा ॥
स्तोत्रस्य साधनीभूताः ऋचस्स्तोत्रीयसंज्ञिताः ।
स्तोमाः त्रिवृत्त्वादिसंख्याविशेषाः ज्योतिराह्वयाः ॥
2 अङ्गत्वं तु परोद्देश्यकृतिकारकरूपतः ।
विहितत्वं तदन्तःस्थोद्देश्यताकारकत्वयोः ॥
एकस्योपस्थापको यस्स शब्दश्श्रुतिरीर्यते ।
सा द्वितीयादिरूपेति नव्यतर्कपरिष्कृतिः ॥
विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्रचान्यत्रच प्राप्तौ परिसंख्येति गीयते ॥
विधिरुक्तोऽथ नियमः पक्षेऽप्राप्तांशपूरकः ।
अन्यव्यावृत्तिफलकः परिसंख्येति कीर्त्यते ॥
प्राप्ताप्राप्तविवेकेन परिसंख्या द्विधेष्यते ।
पञ्चपञ्चनखेत्याद्येमामगृभ्णन्नितीतरा ॥
श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ।
प्राप्तस्य बाधादित्याद्या परिसंख्या त्रिदूषणा ॥
अन्त्यायामश्वरशनाऽङ्गत्वं स्वार्थो विधीयते ।
नेयं त्रिदोषेति केचिदेषाऽपीतीतरे विदुः ॥

3 देवतोद्देशतो द्रव्यत्यागो यागो निरुच्यते ।
दानं स्वस्वत्वमुन्मृद्य परस्वत्वप्रकल्पनम् ॥
प्रक्षेपसहितो यागो होम इत्यभिधीयते ।
यथेष्टविनियोगस्य योग्यत्वं स्वत्वमुच्यते ॥
देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वमिष्यते ।
अथवा विधिवाक्यस्थशब्दत्वसमवृत्तिमान् ॥
अखण्डोपाधिरथवा तच्छब्दप्रतिपाद्यता ।
प्रतिग्रहीतृत्वयोगे सैव स्यात्सम्प्रदानता ॥
अव्यक्तिरुत्पत्तिवाक्ये देवतानभिबोधनम् ।
तथाऽवदीयमानत्वं हविष्ट्वमिति भाष्यते ॥
4 क्रत्वनुष्ठाप्यता यत्र क्रत्वर्थत्वं तदुच्यते ।
फलानुष्ठाप्यता यत्र सोच्यते पुरुषार्थता ॥
फलस्य पुरुषार्थत्वव्यवहारस्तु भक्तितः ।
विधानमप्रवृत्तस्य प्रवर्तनमितीरितम् ॥
उपादानमनुष्ठानमननुष्ठितगोचरम् ।
अनुष्ठानोद्देश्यतया विहितं स्यात्प्रयोजकम् ॥
विधेयत्वेन विहितं प्रयोज्यमिति निर्णयः ।
प्रधानमिह विध्यादिरङ्गं विध्यन्त उच्यते ॥
दक्षिणा नाम तद्द्रव्यं यत्स्यादानतिसाधनम् ।
सा चैकस्मिन् क्रतावेका वशीकरणमानतिः ॥

सामान्यतो निरुक्तीनां संग्रहोऽयं विबुध्यताम् ।
आनन्त्यानवकाशाभ्यां संक्षेपरुचयो बुधाः ॥

(97) दोषनिरुक्तिवादः.

1 प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥
श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् ।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥
वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे ।
पदान्तरार्थो वाक्यार्थः समानार्थोऽपरो मतः ॥
विधिर्लिङ्त्वर्थविषयः शान्ताकांक्षो भवेद्यदि ।
भारो लाघवतर्काख्यमीमांसाया न युज्यते ॥
करोत्यपरपर्यायभावना त्वेककर्मिका ।
अतस्त्वनेकोद्देश्यत्वे वाक्यभेदः प्रवर्तते ॥
विधेयतोद्देश्यता चाप्येका कृतिनिरूपिता ।
अतो विधेयभेदेऽपि तद्भेदो दुर्निवारणः ॥
वाक्यभेदो वाक्यदोषः पददोषस्तु लक्षणा ।
पदवाक्यसमावेशे गुणे त्वन्याय्यकल्पना ॥
विधेयमात्रं वोद्देश्यमात्रं स्वरसवाहतः ।
समर्पयेदेकपदं स चैकप्रसरो मतः ॥

तद्भङ्गलक्षणः कश्चिद्वाक्यभेदः प्रकीर्त्यते ।
अंशभेदे वाक्यभेदः कश्चिद्गौरवलक्षणः ॥
त्रिकद्वयसमावेशात्कश्चिद्वैरूप्यलक्षणः ।
उद्देश्यत्वानुवाद्यत्वप्रधानत्वत्रिकं क्वचित् ॥
उपादानविधेयत्वगुणत्वत्रितयं क्वचित् ।
मानान्तरेण सिद्धस्य या स्यान्निर्दिश्यमानता ॥
विधेयस्यान्वयित्वेन तदुद्देश्यत्वमुच्यते ।
मानान्तरेण सिद्धस्य पुनश्च श्रूयमाणता ॥
भवेत्तदनुवाद्यत्वं प्रधानत्वं गुणान्वयः ।
पुंसाऽनुष्ठायिमानत्वमुपादेयत्वमिष्यते ॥
अप्राप्तत्वयुता वाक्यवेद्यता स्याद्विधेयता ।
गुणत्वं विहितत्वं स्यादङ्गत्वेन च कर्मणः ॥
यद्वृत्तयोगः प्राथम्यं द्वयमुद्देश्यलक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥
येषामाख्यातशब्दानां यदप्याद्युपबन्धनात् ।
विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः ॥
2 विरोधे तुल्यबलयोर्विकल्पः परिगृह्यते ।
गत्यन्तरे च न सति सैषा ह्यगतिका गतिः ॥
प्रामाण्यस्य परित्यागः त्वप्रामाण्यस्य कल्पना ।
त्यक्तमानत्वोपगमोऽत्यक्तप्रामाण्यवर्जनम् ॥

प्रत्येकमेते दोषास्स्युः चत्वारश्शास्त्रयोर्द्वयोः ।
प्रयोगभेदात्तेन स्याद्विकल्पो ह्यष्टदोषभाक् ॥
प्रतिपत्तिरनुष्ठानं अपूर्वं च फलं तथा ।
बाधस्तेषां कोटियुग्मे इति वा दोषचिन्तना ॥

3 अथ प्रमाणयोर्बाध्यबाधकत्वव्यवस्थितिः ।
अनन्यथासिद्धतैव बाधकत्वे प्रयोजिका ॥
अन्यथासिद्धता या तु सा बाध्यत्वप्रयोजिका ।
उभयं सावकाशत्वानवकाशत्वमूलकम् ॥
अन्यथासिद्धता नाम माने विषयसत्यताम् ।
अन्तरेणात्मलाभस्स्यादवकाशो द्विधा मतः ॥
आद्यो द्विचन्द्रादिवत्स्यात् अप्रमाणपदार्हता ।
विषयान्तरलाभोऽन्त्यः भवेत् होमविधाविव ॥
प्राप्तबाधोऽप्राप्तबाध इति स द्विविधो मतः ।
आद्यः प्रमेयापहारः यो दाशमिक इष्यते ॥
अन्त्यो मूलोच्छेदरूपः तार्तीयीकस्स इष्यते ।
साधारणस्य शास्त्रस्य विशेषविषयादिना ॥
संकोचः क्लृप्तरूपस्य प्राप्तबाधोऽयमुच्यते ।
कल्प्यस्य क्लृप्तशास्त्रेण शैघ्र्यान्मूलनिकृन्तने ॥
फलापहारादप्राप्तबाध एषोऽभिधीयते ।
अथ तस्य प्रपञ्चोऽयं विदितो लोकवेदयोः ॥

बाध्यतेऽनन्यथासिद्धेनान्यथासिद्धतास्पदम् ।
तथा निरवकाशेन सावकाशं विशेषतः ॥
नैमित्तिकेन नित्यं च क्रत्वर्थं पुरुषार्थतः ।
पूर्वं परेणातिदिष्टमुपदिष्टेन बाध्यते ॥
सफलं निष्फलेनापि ह्यदृष्टं चापि दृष्टतः ।
बाध्यते चाप्युपादेयमनुपादेयतावता ॥
श्रौतेन बाध्यते स्मार्तं प्रबलेनापि दुर्बलम् ।
प्रधानेनाङ्गभूतं च लाघवेनापि गौरवम् ॥
अपेक्षितविधानेन विधानमनपेक्षितम् ।
भूयसा चाल्पबाधस्स्यात् रूढ्या योगः प्रबाध्यते ॥
एवमाद्यवगन्तव्यं नास्त्यन्तो विस्तरस्य हि ।
सिद्धानुगममात्रं तु कर्तुं युक्तं परीक्षकैः ॥
एवं दोषनिरुक्तीनां सरणिः स्यात्प्रदर्शिता ।
अथ न्यायनिरुक्तीनां सरणिश्च प्रदर्श्यते ॥

(98) न्यायनिरुक्तिवादः.

1 स्यादेकाङ्गानुवादेन ह्यङ्गयोश्चोद्यमानयोः ।
अन्तराले विधानं यत् स संदंश इतीर्यते ॥
धर्माविप्रतिषेधस्तु यदि स्यादङ्गमुख्ययोः ।
प्रधानानुग्रहो न्याय्यः सोमस्स्यात्तेन पर्वणि ॥

परस्परापेक्षतायामुपक्रमनयान्वयः ।
परस्परानपेक्षत्वे त्वपच्छेदनयान्वयः ॥
भूयोऽनुग्रहनीतिस्तु संख्यावैषम्यगोचरा ।
विरोधाधिकृतिन्यायः प्राबल्यात्परबाधकः ॥
2 दृष्टार्थत्वे संभवति नादृष्टार्थत्वमिष्यते ।
प्रयाजशेषप्रक्षेपः प्रतिपत्तिरतो मता ॥
वाजिनेऽप्यनुनिष्पन्नप्रतिपत्तिरितीष्यते ।
अतोऽध्ययनमन्त्रादेः दृष्टार्थत्वव्यवस्थितिः ॥
वचनेन विरोधे तु न हि न्यायः प्रवर्तते ।
घटं पटयितुं नेष्टेऽप्यागमानां सहस्रकम् ॥
आनर्थक्यप्रतिहतौ विपरीतं बलाबलम् ।
रूपे श्रुतेऽपि दध्नेतिवाक्यं गुणविधिर्मतः ॥
दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा ।
तदापि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥
अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः ।
दुर्बलैरपि बाध्यन्ते प्रबलैः पार्थिवाश्रितैः ॥
स्वरूपतः प्रकरणे स्थानाच्च बलवत्यपि ।
पूषानुमन्त्रणे लिङ्गसमाश्रितसमाख्यया ॥
बाध्यते हि प्रकरणमुपजीव्यविरोधतः ।
कल्प्योपकारापूर्वाङ्गात्प्राक्प्राकृतसमन्वयः ॥

फलं तस्य च संबन्धः कल्प्यौ विश्वजिति क्रतौ ।
रात्रिसत्रेष्वार्थवादफलसंबन्धकल्पना ॥

प्रसक्तस्य प्रतीषेधे तदन्यत्राप्रसङ्गतः ।
संप्रत्ययाच्छिष्यमाणे परिशेष इतीर्यते ॥

3 सामान्यविधिरस्पष्टस्संह्रियेत विशेषतः ।
स्पष्टस्य तु विशेषेण नोपसंहार इष्यते ॥

शब्दोपात्तविशेषेऽर्थे संकोचश्चेदसौ नयः ।
शब्दोपात्तविशेषान्याविषये यदि विश्रमः ॥

गोबलीवर्दनीतिस्स्यात् वैयर्थ्यविनिवृत्तये ।
तथैवोत्सर्गापवादः विरोधविनिवृत्तये ॥

तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।
देवतासङ्गतिस्तत्र दुर्बलं तु परंपरम् ॥

इष्टा शीघ्रप्रवृत्तित्वाद्योगाद्रूढिर्बलीयसी ।
अश्वकर्णादिशब्देषु विपरीतं बलाबलम् ॥

पदान्तरं प्रयुक्तं चेद्यौगिकार्थविशेषकम् ।
रूढिशक्तेर्भञ्जकं स्याद्यथा चाग्रसरोरुहम् ॥

सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाभिधीयते ।
न हि संबन्धवाचित्वं संभवत्यतिगौरवात् ॥

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैस्सह ।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥
4 यो नाम वेदतात्पर्यनिर्णयाय विरच्यते ।
न्यायाख्यस्सोऽधिकरणमिति व्यवहृतं बुधैः ॥
विषयो विषयश्चैव विचारो निर्णयस्तथा ।
प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः ॥
सङ्गतिर्विषयश्चैव संशयोत्थानकारणम् ।
संशयस्य प्रकारश्च तदर्था च विचिन्तना ॥
तस्यां फलफलित्वं च न्यायौ द्वौ पूर्वपक्षयोः ।
निर्णयस्तत्फलं चेति दशाङ्गानीतरे विदुः ॥
वाक्यस्य विषयत्वं तु यत्कोट्योस्संशयीययोः ।
उपस्थापकशब्दाभ्यां घटितं सत् तथैवच ॥
सन्न्यायाधीनतात्पर्यनिर्णयादेककोटिकाम् ।
प्रमितिं जनयेत् वाक्यं तत्त्वमित्यवधार्यते ॥
न्यायत्वं च निरुक्ताङ्गपञ्चकाद्यवबोधकम् ।
वाक्यजातं यथा न्यायवाक्यं शास्त्रान्तरे मतम् ॥
अनन्तराभिधाने या जिज्ञासा स्यात्प्रयोजिका ।
तद्धेतुज्ञानविषयसंबन्धः सङ्गतिर्मता ॥
तां प्रसङ्ग उपोद्घातः हेतुताऽवसरस्तथा ।
निर्वाहकैक्यं कार्यैक्यमिति षोढा विदुः परे ॥

अपवाद उपोद्धातः प्रसङ्गः प्रत्युदाहृतिः ।
दृष्टान्ताक्षेपातिदेशा इति मीमांसका विदुः ॥
पूर्वाधिकृतिसिद्धान्तन्यायं यत्रावलम्बते ।
उत्तराधिक्रियापूर्वपक्षस्तत्रापवादिकी ॥
उपोद्धातः प्रस्तुतार्थस्योपपादकता मतः ।
चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधाः ॥
उपोद्धातस्य चिन्तेयं यस्मान्निर्वाहिका स्थिता ।
तस्मात्तादर्थ्यतश्चिन्तैवोपोद्धात इतीर्यते ॥
स्मृतस्योक्तार्थसंबन्धादुपेक्षाया अनर्हता ।
प्रसङ्ग इति यत्प्राहुर्यस्मात्सैव हि सङ्गतिः ॥
तस्मादुपोद्धातमुखसङ्गतिभ्यः पृथक्कृतः ।
या सङ्गतिस्स प्रसङ्ग इति निष्कृष्टलक्षणम् ॥
पूर्वाधिकृतिसिद्धान्तन्यायस्याविषयीक्रियाम् ।
आलम्ब्य पूर्वपक्षस्योत्थाने स्यात्प्रत्युदाहृतिः ॥
पूर्वाधिकृतिसिद्धान्तन्यायसाधर्म्यसंश्रयात् ।
उत्तराधिक्रियापूर्वपक्षे दृष्टान्तसङ्गतिः ॥
पूर्वाधिकृतिसिद्धान्तन्यायस्यानुपपन्नताम् ।
शङ्कित्वा पूर्वपक्षस्योत्थाने त्वाक्षेपसंगतिः ॥
कृत्वा यत्राधिकाशङ्कां पूर्वमेवातिदिश्यते ।
संगतिः कथिता सद्भिः काचित्तत्रातिदेशिकी ॥

इत्थं संगतयस्सप्त मीमांसाशास्त्रसम्मताः ।
तत्सामान्यं विशेषाश्च संग्रहेण निरूपिताः ॥

5 अथार्हतानां सिद्धान्ते प्रमाणनयवादिनाम् ।
नयस्वरूपं संक्षेपाद्दिङ्मात्रमुपदर्श्यते ॥

श्रुतप्रमाणविषयविशिष्टैकांशगोचरः ।
अंशान्तरौदासीन्येन परामर्शो नयो मतः ॥

नयेनेतरसिद्धान्ताविरोधं प्रतिपेदिरे ।
इतरांशनिषेधे तु नयाभास उदाहृतः ॥

सकलो विकलश्चेति चादेशो द्विविधस्ततः ।
नायं वस्तु नचावस्तु वस्त्वंशः कथ्यते बुधैः ॥

नासमुद्रस्समुद्रो वा समुद्रांशो यथैव हि ।
तन्मात्रस्य समुद्रत्वे शेषांशस्यासमुद्रता ॥

काला त्मरूप संबन्धाः संसर्गोपक्रिये तथा ।
गुणिदेशा र्थ शब्दाश्चेत्यष्टौ कालादयो मताः ॥

कालादिभिरभेदेन युगपत्प्रतिपादकम् ।
वचस्स्यात्सकलादेशः तदन्यद्विकलात्मकम् ॥

सप्तभङ्गी सम्मतैव प्रमाणनयवाकययोः ।
विस्तरस्त्ववगन्तव्यः प्रमाणनयलोकने ॥

(99) वाक्यार्थवादः.

1 अथ वाक्यार्थवादोऽयमेष संगृह्यते तथा ।
यदर्थस्सकलश्शब्दः यतो यात्राऽपि लौकिकी ॥

जगत्यामिह याकाचित्प्रवृत्तिः परिदृश्यते ।
व्यापारोऽसौ क्रियारूपः सहि धात्वर्थलक्षणः ॥
क्रियैवोत्पादना भावो भावनेति च पठ्यते ।
चलनात्मा परिस्पन्दः गतिः कर्मेत्यपीर्यते ॥
व्यापारस्स तु वस्तूनां स्वभावादेव जायते ।
रजोगुणस्वभावोऽसौ क्षीरस्येवेति कापिलः ॥
तथात्वे कालदेशादिनियमानुपपत्तितः ।
स्वतन्त्रचेतनेच्छादिमूलस्स्यादिति वैदिकः ॥
अन्यथा सकलं शास्त्रं भवेद्दत्तजलाञ्जलि ।
विधानप्रतिषेधाद्यं लौकिकं चाप्यनर्थकम् ॥
चेतनस्य स्वतन्त्रस्य ज्ञानेच्छादिनिबन्धनः ।
अस्ति ह्याभ्यन्तरः कश्चित्प्रयत्नः कृतिलक्षणः ॥
चेष्टादिलक्षणस्तेन बाह्यो व्यापार इष्यते ।
सर्वा प्रवृत्तिस्तन्मूलेत्येतदध्यक्षसुस्थितम् ॥
बुद्धिजन्या भवेदिच्छा हीच्छाजन्या भवेत्कृतिः ।
कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया ॥
2 रजोगुणस्वभावेन चेत्प्रवृत्तिर्भविष्यति ।
स्तनंधयप्रवृत्तिश्चाप्येवमाद्याऽऽपतिष्यति ॥
ततश्च वीतरागादिजन्मादर्शनलक्षणम् ।
श्रान्तं जन्मान्तरे लिङ्गं अश्रान्तो बाह्यडिण्डिमः ॥

पूर्वाभ्यासेन लोके स्युः हर्षशोकभयादयः ।
जातमात्रस्य ते दृष्टाः पूर्वाभ्यासनिबन्धनाः ॥
पद्मादिषु प्रबोधाद्याः विकारा भूतसंश्रयाः ।
शीतोष्णवर्षाकालादिनिमित्ता इति निश्चिताः ॥
अयस्कान्ताभिगमनमयसो यत्प्रदृश्यते ।
अन्यत्र वृत्त्यभावेन तत्स्वभावादिति स्थितम् ॥
प्रवृत्तिस्तार्किकैस्तस्माद्दोषादेवेति सूत्रितम् ।
तथैव लोकानुभवोऽप्यनुकूलोऽवकल्पते ॥
तत्र प्रवर्तकं ज्ञानं वैदिकं वाऽथ लौकिकम् ।
कीदृशं त्विति जिज्ञासा सामान्येन प्रवर्तते ॥
स्वतन्त्रा परतन्त्रेति प्रवृत्तिर्द्विविधा मता ।
आद्या भवतु रागेण विधिनैव त्वनन्तरा ॥
वैधविज्ञानवैमत्यात् विध्यर्थोऽपि विभिद्यते ।
ततो वाक्यार्थविमतिः सर्वं संगृह्यतेऽत्र तत् ॥
फलार्था हि क्रिया लोके पुरुषार्थं फलं मतम् ।
पुरुषश्च क्रियार्थस्स्यात् इत्येवं बद्धशृङ्खले ॥
चक्रेऽत्र कस्य प्राधान्यं कस्य वाक्यार्थतेतिच ।
प्रवर्तकं किमत्रस्यात् इति संशेरते बुधाः ॥
3 लिङ्गादिरशब्द एवेति जरन्मीमांसका विदुः ।
तद्व्यापारात्मिका शब्दभावनेति कुमारिलाः ॥

तदर्थस्तु नियोगोऽस्तीत्याहुः टीकाकृतः पुनः ।
तदर्थः कार्य इत्याहुरन्ये प्राभाकरास्तु ते ॥
इष्टसाधनता याऽस्ति धात्वर्थे सेति मण्डनः ।
पुंसां नेष्टाऽभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ॥
प्रवृत्तिहेतुं धर्मं चेत्येषा विधिविवेकवाक् ।
फलं स्वर्गादिरेवेति नैयायिकाशिरोमणिः ॥
यमर्थमधिकृत्यात्र पुरुषः संप्रवर्तते ।
तत्प्रयोजनमित्थं हि सूत्रयामास गौतमः ॥
प्रवर्तिका क्रियैवेति प्रायश्शाब्दिकसम्मता ।
क्रियैव वाक्यार्थ इति मुनिरप्याह बादरिः ॥
इष्टस्य कृत्यधीनात्मलाभलक्षणकार्यता ।
प्रवर्तिकेति वेदान्तवादिनो न्यायवेदिनः ॥
आप्तस्य हितकामस्य नियोगं केचिदूचिरे ।
यतश्श्रुतिस्स्मृतिरपि नियोगस्सर्वशासितुः ॥
आप्ताभिप्रायमाचार्याः प्राहुश्चोदयनादयः ।
वेदस्य पौरुषेयत्वे मानं चापि विधिं विदुः ॥
अज्ञातज्ञापनं वाऽथवाऽप्रवृत्तप्रवर्तनम् ।
अथाप्राप्तक्रियाकर्तृसंबन्ध इति कल्पनाः ॥
उद्योगमपरे प्राहुरात्मनस्स्पन्दलक्षणम् ।
तत्तन्मतानुरोधेन विध्यर्थोऽत्र विभज्यते ॥

वाक्यज्ञाने हि वाक्यार्थविज्ञानमवकल्पते ।
ततः प्रस्तूयते वाक्यचिन्ता प्राच्यविचिन्तिता ॥

(100) वाक्यवादः.

1 अथात्र वैयाकरणसम्प्रदायस्य संग्रहः ।
एष वाक्यपदीयाख्यग्रन्थसारः प्रकाश्यते ॥
अखण्डं वाक्यमित्येके सखण्डमिति चापरे ।
संघातवर्तिनी जातिः एकोऽनवयवः स्वनः ॥
तथा बुद्ध्यनुसंहारोऽखण्डं त्रेधा विकल्प्यते ।
क्रमस्संघात आख्यातशब्द आद्यपदं तथा ॥
पृथक्सर्वपदं चेति सखण्डं पञ्चधा मतम् ।
अष्टौ वाक्यविकल्पास्ते शाब्दिकाचार्यसम्मताः ॥

2 स्फोटवादोऽखण्डपक्षः स्फोटश्शब्दः ध्वनिः पुनः ।
तद्गुणः दीपरुचिवत् स्वरव्यञ्जनलक्षणः ॥
बाह्य आभ्यन्तरश्चेति स स्फोटो द्विविधो मतः ।
जातिव्यक्तिप्रभेदेन बाह्यो द्विविध इष्यते ॥
संघातवर्तिनी जातिः बाह्यः प्रथम ईरितः ।
एकोऽनवयवश्शब्दः द्वितीयो व्यक्तिलक्षणः ॥
यदन्तश्शब्दतत्त्वं तु नादैरेकं प्रकाशितम् ।
स स्यादाभ्यन्तरः स्फोटः तदर्थोऽप्यस्ति चान्तरः ॥

अर्थभागैस्तथैतेषां आन्तरोऽर्थः प्रकाश्यते ।
एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ ॥
अतः प्रसिद्धरूपेण कालिदासेन कीर्तितम् ।
वागर्थाविव संपृक्तौ इति मङ्गलदैवतम् ॥
यश्च बुद्ध्यनुसंहारः स निरालम्बसोदरः ।
अखण्डपक्षे व्याख्यातं त्रिविधं वाक्यलक्षणम् ॥
3 सखण्डे क्रमसंघाताविति यल्लक्षणद्वयम् ।
तत्सङ्गतं ह्यभिहितान्वयपक्षसमीक्षया ॥
त्रीणीतराण्यन्विताभिधानपक्षकटाक्षतः ।
वाक्यमेकतिङित्यादि वाक्यलक्षणवार्तिकम् ॥
अर्थैकत्वादेकवाक्यमिति सूत्रं च जैमिनेः ।
संघातपक्ष एवान्तर्भावितुं सम्यगर्हति ॥
भेदोवाऽप्यथ संसर्गो वाक्यार्थ इति चिन्तना ।
अर्थैकत्वादितिन्याये कृता भाष्ये च वार्तिके ॥
एवं वाक्यविकल्पेन वाक्यार्थोऽपि विकल्प्यते ।
तयोरपि च संबन्धः तदधीनो विकल्प्यते ॥
4 तत्रचाखण्डपक्षे तु लक्षणेष्वपिच त्रिषु ।
प्रतिभा वाक्यार्थ इति तत्स्वरूपं निशम्यताम् ॥
विच्छेदग्रहणेऽर्थानां प्रतिभाऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥

उपश्लेषमिवार्थानामाकरोत्यविचारिता ।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्तते ॥
प्रमाणत्वेन तां लोकस्सर्वस्समुपगच्छति ।
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात् ॥
स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादेः करणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥
5 सखण्डपक्षे वाक्यार्थः क्रमसंघातपक्षयोः ।
संसर्ग इति, संघातपक्षेऽप्यस्ति मतान्तरम् ॥
पदार्थ एव विश्रान्तः विशेषे वाक्यगोचरः ।
आख्यातशब्दपक्षे तु क्रिया वाक्यार्थ इष्यते ॥
प्रतिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम् ।
फलं प्रसूयेत यतः सा क्रिया वाक्यगोचरः ॥
संसृष्ट एव वाक्यार्थः तुर्यपञ्चमकल्पयोः ।
अभिधेयः पदार्थस्स्यात् वाक्यार्थस्तु प्रयोजनम् ॥
इत्युक्तः फलवाक्यार्थवादस्साधारणो मतः ।
लक्षणानां च सर्वेषां वाक्यार्थाष्षाडिमे मताः ॥
प्रतिभाचैव संसर्गः पदार्थश्च विशेषतः ।
पदार्थ एव संसृष्टः क्रिया चाथ प्रयोजनम् ॥

अत्रान्विताभिधानं स्यात् क्रियासंसृष्टपक्षयोः ।
चतुर्ष्वप्यवशिष्टेषु पक्षेष्वभिहितान्वयः ॥
प्रतिभायां त्वेकरसा प्रतिपत्तिरुदेत्यतः ।
न तत्र काचिच्चर्चाऽस्ति मतयोरुभयोरपि ॥
ये मीमांसकवाक्यार्थविकल्पा भावनादयः ।
तेऽप्यत्रान्तर्भवन्तीति न स्यादधिककल्पना ॥
क्रियैव भावना तत्र प्रकृतिप्रत्ययार्थयोः ।
विवादः केवलं वैयाकरणानां तु तैस्सह ॥
नियोगाद्यास्तु वाक्यार्थाः लिङादियुतवाक्यगाः ।
न सर्ववाक्यविषया इति तेष्विह नादरः ॥
अनादितत्तद्वाक्यार्थविकल्पोत्थैरुपप्लवैः ।
बहीरूपतयाऽध्यस्तैः क्रमवद्भिरिवाक्रमैः ॥
पदार्थैश्चित्रित इव विकल्पोल्लेखलक्षणः ।
आकारो बाहिरध्यस्तः निरंशश्शाक्यसम्मतः ॥
वाक्यार्थो यः प्रायशोऽसौ प्रतिभायास्सहोदरः ।
अथातो वाक्यवाक्यार्थसंसर्गस्य विकल्पना ॥
6 तत्रानवयवे स्फोटे तदर्थे प्रतिभात्मके ।
वाक्येऽप्यथच वाक्यार्थे संबन्धोऽध्यासलक्षणः ॥
एके तादात्म्यमिच्छन्ति परे परिणतिं विदुः ।
तद्बिम्बप्रतिबिम्बत्वं वेति कैश्चिद्विकल्प्यते ॥

अवशिष्टेषु पक्षेषु वाच्यवाचकतात्मिका ।
मीमांसकानां दृष्ट्या तु संबन्धो योग्यता मता ॥
शाक्यदृष्ट्या तु शब्दार्थे बौद्धे विज्ञानवादतः ।
कार्यकारणभावाख्यस्संबन्ध इति निश्चितः ॥
बाह्यार्थे त्वथ वाक्यार्थे स च संकेतलक्षणः ।
इति तार्किकसिद्धान्त इति रीतिश्चतुष्टयी ॥
पदानि कल्पितानीति टीकाकारमतं स्मृतम् ।
वाक्यं तु कल्पितमिति पदकारमतं श्रुतम् ॥
अभेदपूर्वका भेदाः कल्पिता वाक्यवादिभिः ।
भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः ॥
7 शब्दवित्संप्रदायेऽस्मिन् वाक्यं प्रायेण शोधितम् ।
अर्थवित्संप्रदायोऽपि तथा किंचिद्विचार्यते ॥
क्रियावाक्यार्थपक्षश्च बादर्याचार्यसम्मतः ।
शेषलक्ष्माधिकरणे जैमिनीये निरूपितः ॥
पदार्थाः किल वाक्यार्थभावमायान्ति संहताः ।
अपेक्षानुगुणान्योन्यव्यतिषङ्गविशेषतः ॥
साध्यं निष्पद्यमानत्वात् प्रधानमवगम्यते ।
तस्मात्तदेव वाक्यार्थः क्रियातो नापरं च तत् ॥
यजेत दद्याज्जुहुयात् अधीयीतेति बोधितः ।
क्रियां साध्यतया वेत्ति तां च लोकोऽनुतिष्ठति ॥

क्रियैव तावत्कार्यात्मा प्रेरणात्मा फलार्थिता ।
प्रतीयते ततोऽन्यस्तु नियोगो नोभयात्मकः ॥
कुर्यादित्येवमादिभ्यः क्रियादिव्यतिरेकिणः ।
नार्थान्तरस्य संवित्तिः कस्यचित्प्रेरणात्मनः ॥
स चोदनामतिक्रामेत् यः क्रियां नानुतिष्ठति ।
यश्शब्दपरतन्त्रस्स्यात् शब्दप्रामाण्यवाद्यसौ ॥
फलाभिसन्धिहीनोऽपि कर्मसंस्कारसंस्कृतः ।
परिपक्वकषायस्स्यात् स्तोकस्तोकक्रमादसौ ॥
प्रपञ्चप्रविलापेन चोत्तमाधिक्रियायुतः ।
ज्ञातास्वादस्तमेवासौ पुमर्थं प्राप्तुमिच्छति ॥
विस्तरस्तु मतस्यास्य ज्ञेयो विधिविवेकतः ।
प्रायेणैते निष्प्रपञ्चनियोगन्यायवादिनः ॥

### (101) भावनावाक्यार्थः

1 वाक्यार्थभावनापक्षसारांशोऽथावधार्यताम् ।
भाव्यनिष्ठो भावकस्य व्यापारो भावना मता ॥
सा शब्दभावनाऽथार्थभावनेत्यपिच द्विधा ।
विभज्य व्यवहारस्य विषयीक्रियते बुधैः ॥
पुंप्रवृत्त्यनुकूलात्मा व्यापारश्शब्दभावना ।
प्रवर्तना प्रेरणा सा नियोग इति कीर्त्यते ॥

क्रियानुकूलः पुरुषव्यापारो ह्यर्थभावना ।
कृतिः प्रयत्न इत्यादिपर्यायपदशब्दिता ॥
लोकेऽस्मिन्नभिधाशब्दः शब्दव्यापारबोधकः ।
अतोऽभिधाभावनेति तामाहुश्शब्दभावनाम् ॥
भावना या तु पुरुषैरिष्टोपायतयाऽर्थ्यते ।
पुंव्यापारात्मिका सैषा कीर्त्यते चार्थभावना ॥
भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते ।
तत्सिद्धान्तकटाक्षेण भाव्येत्यादिपरिष्कृतिः ॥
सैव वाक्यस्यार्थ इति कुमारिलविनिर्णयः ।
वेदाद्गुरुनियोगाद्वा शासनाद्वा महीभुजाम् ॥
न सचेताः क्रियां कांचित् अनुतिष्ठति निष्फलाम् ।
वस्तुतस्तु फलं तस्मात्प्रधानमवगम्यते ॥
सएव वाक्यार्थ इति वक्तुं युक्तं च यद्यपि ।
तथाऽपि काम्यमानत्वात् सिद्धं तन्नावगम्यते ॥
साध्यमानत्वपक्षे तु साक्षात्तत्सिद्ध्यवेदनात् ।
व्यापार एव तन्निष्ठः वाक्यवेद्य इतीष्यताम् ॥
अत एवहि वाक्यार्थं भावनां प्रतिजानते ।
यथोचितफलाढ्यां च त्र्यसंबन्धबन्धुराम् ॥
आस्तां विधिपदं तावद्वर्तमानापदेशिनः ।
शब्दाद्यजत इत्यादेः भावना न न गम्यते ॥

2 क्रियाविशेष एवायं व्यापारो ज्ञातुरात्मनः ।
स्पन्दात्मकबहिर्भूतक्रियालक्षणविलक्षणः ॥

3 पुरुषस्य प्रयत्नो वा भावनेत्यभिधीयते ।
औदासीन्यदशाऽपायं पुमान् येन प्रपद्यते ॥
स यत्नो यागदानादिक्रियानिर्वृत्तिकारणम् ।
तस्य तद्व्यतिरेक्तत्वं प्रायस्सर्वोऽनुमन्यते ॥
नचायमात्मधर्मोऽपि न विभुत्वादिवन्मतः ।
साध्यरूपाभिसंबन्धात् धत्ते विषयतां विधेः ॥

4 अन्ये धात्वर्थसामान्यं भावनामभ्युपागमन् ।
यागदानाद्यनुस्यूतं रूपं गोत्वादिजातिवत् ॥
धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ।
तथाऽपि सर्वसामान्यरूपेणान्या प्रतीयते ॥
सा धातोः प्रत्ययाद्वाऽपि भावनाऽवगता सती ।
अपेक्षतेंऽशत्रितयं किं केन कथमित्यदः ॥
सिद्धसाध्यस्वभावाभ्यां धात्वर्थो द्विविधस्तयोः ।
अन्योत्पादानुकूलात्मा भावना साध्यरूपिणी ॥
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ।
इत्याहुरपरे प्राज्ञाः भावनातत्त्ववेदिनः ॥
भावनैवाहि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥

एकयैवहि बुद्ध्याऽसौ गृह्यते चित्ररूपया ।
पदार्थाहितसंस्काराचित्रापिण्डप्रसूतया ॥
पदात्प्रभृति या चैषा प्रज्ञा ज्ञातुर्विजृम्भते ।
पुष्पिता सा पदार्थेषु वाक्यार्थेषु फलिष्यति ॥
5 अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मा भावना त्वन्या सर्वाख्यातेषु दृश्यते ॥
प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते ।
वक्तुमाख्यातवाच्येति सिद्धान्तः राणकेरितः ॥
कार्यत्वान्तःप्रविष्टा या कृतिस्सैवहि भावना ।
स्वर्गादेर्भवितुर्भावयित्री स्याद्भावकाश्रिता ॥
तेन व्यापारसामान्यं पुंव्यापारनिबन्धनम् ।
इति सिद्धया स स्वभाववादो लौकायतो हतः ॥
विधेर्लक्षणमेतावदप्रवृत्तप्रवर्तनम् ।
अतिप्रसङ्गदोषेण नाज्ञातज्ञापनं विधिः ॥
णिजर्थात्तु लिङर्थोऽसौ प्रेरणाऽस्ति विलक्षणा ।
ज्ञापकव्यापार एष स तु कारकसंश्रितः ॥
प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्ते प्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥
विधिः प्रवर्तकत्वाख्यस्वरूपस्योपपत्तये ।
स्वर्गं साध्यतया यागं साधनत्वेन बोधयेत् ॥

अथापि शाब्दी शक्तिस्सा प्रधानमिति गम्यते ।
अतस्त्विष्टोपायतैषा धात्वर्थस्येति सूरयः ॥
वाक्यार्थाधिकृतावस्य विस्तरः श्लोकवार्तिके ।
शाब्दबोधक्रमस्त्वेष खण्डदेवादिशोधितः ॥

6 यजेतेत्यत्रचाख्यातं लिङ्त्वेनाख्याति भावनाम् ।
अभिधाख्यां तथैवार्थीमाख्यातत्वेन बोधयेत् ॥
उभे अंशत्रययुते इति विश्रुतमेव तत् ।
विशिष्टशाब्दीप्रयोज्या तादृश्यार्थीति गम्यते ॥
प्रयोज्यत्वं स्वविषयज्ञानजन्याऽनुमा तु या ।
तत्प्रयोज्यत्वमनुमा त्वेतादृश्यत्र गम्यताम् ॥
यागो मदिष्टहेतुस्स्यात् इत्याकारा तया पुनः ।
पुमान् प्रवर्तत इति प्रयोज्यत्वं निरूपितम् ॥
यागस्य चेष्टहेतुत्वमेव प्राशस्त्यलक्षणम् ।
स शब्दभावनांशस्सन् एवमत्रोपयुज्यते ॥

(102) नियोगवाक्यार्थः.

1 नियोगवाक्यार्थवादिटीकाकारमतं पुनः ।
प्रदर्श्यतेऽथ यच्छिष्याः कार्यवाक्यार्थवादिनः ॥
कर्ता संख्या तथाचार्थभावना शब्दभावना ।
तस्याः कृतिः तदाख्यानं चेत्येतदतिदुर्भरम् ॥

तस्मान्नियोग एकोऽर्थः कालत्रयविवर्जितः ।
नियुक्तोऽस्मीत्यनुभवात् प्रेरणात्माऽथ तद्धिया ॥
आत्माकूतविशेषो यः आत्मधर्मस्स जायते ।
भौतिकस्पन्दहेतुस्सः न मानान्तरगोचरः ॥
औदासीन्यप्रच्युतिर्वा योद्योग इति कीर्त्यते ।
आद्या प्रवृत्तिराकूतं चिकीर्षेत्यादिनामभाक् ॥
शब्दस्यैव लिङादेर्यैः बुधैः प्रेरकतेष्यते ।
तेऽत्यन्तभीरवस्तस्मिन् संगतिग्रहणालसाः ॥
2 कार्यत्वावगतिस्त्वार्थी शाब्दी प्रेरकतामतिः ।
तस्मात्प्रेरक एवासौ प्रधानमिति निर्णयः ॥
अन्ये तु शाब्दं कार्यत्वं नियोगस्येति मन्वते ।
प्रेरकत्वं त्वार्थमिति नातस्स्याच्छब्दगौरवम् ॥
3 अनुबन्धद्वयं तस्य विषयश्चाधिकार्यपि ।
नियोगः कस्य कुत्रेति तदाकाङ्क्षे इमे उभे ॥
विषयः फलहेतुश्चेत्फलकामोऽधिकार्यतः ।
फलं पुंबुद्धिमूलं तत् न शास्त्रीयमिति स्थितिः ॥
यावज्जीवं सुखं जीवेदित्यादीच्छानिवारकम् ।
यावज्जीवं चाग्निहोत्रं कर्तव्यमिति शासनम् ॥
न दैन्यमीदृशं सोढुं स्वतन्त्रं शास्त्रमर्हति ।
यत्प्रवर्तयितुं पुंसः न शक्नोति फलं विना ॥

4 नित्याधिकारे तत्कर्म वेदोऽसौ शुचिजीविनः ।
विधत्तेऽतोऽफलमपि कार्यमित्येव कुर्वते ॥
विहिताकरणायत्तप्रत्यवायापनुत्तये ।
कर्तव्यमिति सिद्धान्तः भाट्टैः पर्यायतः कृतः ॥
तदेकदेशिनां पण्डापूर्वमिष्टं फलात्मकम् ।
स्वतएव पुमर्थत्वं तस्य पण्डत्वमिष्यते ॥
5 कामाधिकारे तु नियोज्यान्यथाऽनुपपत्तितः ।
फलक्लृप्तिः तत्प्रवृत्तिस्तस्माल्लिप्सार्थलक्षणा ॥
अतएवाधर्मतेति श्येनादेरिति निर्णयः ।
अर्थशब्दः प्रयुक्तोऽतः तादृशानर्थवारकः ॥
नित्येतिकर्तव्यतांशे शास्त्रमेव प्रवर्तकम् ।
अतोऽग्नीषोमीयहिंसा नाधर्म इति ते विदुः ॥
6 प्रतिषेधाधिकारेऽपि प्रत्यवायो न कल्प्यते ।
निषेध्यविषयादेव लब्धत्वादधिकारिणः ॥
तत्रास्मिन् कल्प्यमानेऽपि नरकादिफलोदये ।
अवैधत्वं प्रसज्येत न ह्याकाङ्क्षेदृशी विधेः ॥
विधेरपेक्षे द्वे एव नियोज्यविषयौ प्रति ।
तत्पूरणेन तृप्तस्तु न वाञ्छति ततोऽधिकम् ॥
नियोज्यस्तावदेतावान् क्रुद्धोऽरिहननोद्यतः ।
विषयस्तन्निवृत्तिस्स्यान्नियोगोऽतोऽत्र पुष्कलः ॥

कथं नरो निवर्तेत प्रत्यवायभयाद्विना ।
मा निवर्तिष्ट, विधिना तावदुक्तं निवर्तनम् ॥
प्रवृद्धतररागान्धः प्रत्यवायेऽपि कल्पिते ।
न निवर्तेत इत्येवं किं विधेरप्रमाणता ॥
फलं भवतु मा वा भूत् पुरुषोऽपि प्रवर्तताम् ।
मा प्रवर्तिष्ट वा शास्त्रं नियुङ्क्ते त्वधिकारिणम् ॥
7 कामप्रध्वंससिद्धान्ते सर्वं नैमित्तिकं मतम् ।
स्वर्गादिकामनानां तु निमित्तत्वमुपाश्रितम् ॥
स्त्रीकामो निष्कृतिं कुर्यादित्यादिषु निमित्तता ।
प्रतीयते नतु खलु फलसाधनता क्वचित् ॥
न पारलौकिकस्स्वर्गः किन्त्वैहिकसुखं सुखम् ।
धनधान्यादिकऋद्धिश्चेत्पुंसामिच्छा सुखे भवेत् ॥
यागेन तद्वयये जाते कामः प्रध्वंसते स्वयम् ।
अतएव क्षत्रियाणां विश्वजिद्यागशासनम् ॥
तत्रापि स्वर्गक्लृप्तिस्तु जैमिनेर्दैन्यलक्षणा ।
तथैव रात्रिसत्रेऽपि वेदो हि प्रभुसम्मितः ॥
प्रत्यवायपरीहारोऽप्यत्र कार्पण्यलक्षणः ।
शंयवन्ताधिक्रियान्यायो नैतत्सिद्धान्तसम्मतः ॥
नित्यं नैमित्तिकं कर्म कर्तव्यमिति वैदिकः ।
पन्थाः पुराणोऽयमत्र गीता भगवता स्वयम् ॥

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
स कालेनेह महता योगो नष्टः पुरातनः ॥
कर्मण्येवाधिकारस्ते कुरु कर्मैव तत्पुनः ।
यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ॥
अन्यत्र विस्तरस्तस्य द्रष्टव्योऽस्माभिरीरितः ।
अत्रापिच पुरः स्पष्टः फलकाण्डे भविष्यति ॥

(103) कार्यवाक्यार्थः

1 प्रभाकरगुरूणान्तु कार्यवाक्यार्थवादिनाम् ।
वाक्यार्थसंग्रहस्सोऽयं विविक्तप्रतिपत्तये ॥
आस्तां तावत्क्रिया लोके गमनागमनादिका ।
अन्ततस्तनपानादितृप्तिकारिण्यपि क्रिया ॥
सा यावन्मम कार्येयमिति नैवावधार्यते ।
तावत्कदाऽपि लोकेत्र प्रवृत्तिर्न भविष्यति ॥
पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥
कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः ।
विपरीतं त्वकर्तव्यमिति तद्विषये मतिः ॥
इत्याहुर्मण्डनाचार्याः गुरुभिस्तन्नचेष्यते ।
कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ॥

कारणत्वं फलोत्पादे भिद्येते ते परस्परम् ।
किंच स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ॥
फलसाधनता तत्र कारणं तेन कार्यता ।
तद्भावभाविनी नित्यं तदात्मेव प्रतीयते ॥

2 कार्ये मानान्तरावेद्ये क्रियादिव्यतिरेकिणि ।
व्यवहारत एवाहुः व्युत्पत्तिं प्रेरकात्मनि ॥
शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि ।
आवापोद्वापभेदेन तथा कार्ये लिङादयः ॥
कार्यमेव हि कर्तॄणां ज्यायस्समकनीयसाम् ।
भेदात्प्रैषामन्त्रणाध्येषणादिव्यपदेशभाक् ॥
कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ।
तच्च मानान्तरेणापि वेद्यमोदनपाकवत् ॥
एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः ।
तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि ॥

3 यागानुष्ठानतः कार्यमात्मानं लब्धुमर्हति ।
नच कर्त्रा विना तस्यानुष्ठानमुपपद्यते ॥
न विना चाधिकारेण कर्तुर्लाभः क्वचिन्मतः ।
नियोज्यमन्तरा क्वापि नाधिकारः प्रसिद्ध्यति॥
नकदाऽप्यविशिष्टोऽत्र नियोज्यो ह्यवकल्पते ।
एवं विशेषणतया स्वर्गस्तत्रावकल्पते ॥

कर्तृत्वमधिकारित्वं नियोज्यत्वमिति स्थितम् ।
अवस्थात्रितयं तत्रानुष्ठातृत्वं हि कर्तृता ॥
अधिकारः स्वकीयत्वबुद्धिमत्त्वं हि कर्मणि ।
कार्ये स्वकीयत्वबुद्धिमत्ता तु स्यान्नियोज्यता ॥
4 संप्रधार्यमिदं त्वत्र तत्कार्यं किं क्रियात्मकम् ।
उत तद्व्यतिरेकीति, तत्र लोकानुसारतः ॥
लिङादिस्तत्र कार्यं चेत्क्रियामेवावबोधयेत् ।
समन्वयो नियोज्येन तदानीं नावकल्पते ॥
नियोज्यस्य च कार्यं यत्स्वकीयत्वेन बुद्ध्यते ।
स्वर्गादिः कामयोगाच्च साध्यत्वेनैव गम्यते ॥
क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेस्साध्यमानस्य न क्षमा जननं प्रति ॥
इष्टस्याजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी ॥
तस्मान्नियोज्यसंबन्धसमर्थं विधिवाचिभिः ।
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥
क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतो मानान्तरापूर्वमपूर्वमिति गीयते ॥
5 कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥

6 कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वं च युज्यते ।
वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम् ॥
आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥
अतः पुरुषकारश्च दैवं च फलसाधनम् ।
मुख्यं दैवमपूर्वं स्यात् सहकारि तु पौरुषम् ॥
एवं नित्याधिकारादौ जीवनाद्येऽवधारिते ।
आत्मीयकार्यावगमात्प्रवृत्तिरुपपद्यते ॥
फलं फलतया नान्वीयते किंत्वधिकारिणः ।
विशेषणतयैवेति प्राभाकरविनिश्चयः ॥
एवं कामाधिकारार्थपर्यालोचनयोत्थिता ।
व्युत्पत्तिस्सर्ववाक्यार्थप्रतिपत्तौ निबन्धनम् ॥
तस्माल्लोकानुसारेण व्युत्पत्तिः कार्यमात्रके ।
तस्य त्वपूर्वरूपत्वं वेदवाक्यविमर्शजम् ॥
7 ननु लोकविरुद्धत्वं पक्षेऽस्मिन्नपि दृश्यते ।
सर्वदैव यतो लोके क्रियाकार्यं प्रतीयते ॥
यदि स्यातां विरोधस्स्यात् क्रियाकार्यत्वगोचरौ ।
प्रतिपत्तिप्रयोगौ तौ कार्येऽपूर्वेऽपि लौकिके ॥
प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति ।
क्रियाकार्यत्व एवातः प्रयोगो लक्षणान्वितः ॥

अभिधेयं लिङादीनामपूर्वं कार्यमेव तत् ।
अपूर्वेण क्रियाकार्यं नित्यं संबद्धमित्यतः ॥
लिङादयः क्रियाकार्ये बुधैर्लाक्षणिका मताः ।
तत्रान्विताभिधावादे सर्वं लाक्षणिकं मतम् ॥
लक्षणानभिविज्ञानं मुख्यार्थानवधारणात् ।
येतु मुख्यार्थकुशलाः तेषां लाक्षणिकत्वधीः ॥
तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम् ।
वेदार्थ इति सिद्धान्तः प्रभाकरगुरोर्मतः ॥
वाक्यार्थमातृकायां च श्रीभाष्येऽपिच विस्तरः ।
शाब्दबोधक्रमस्त्वेषः कार्यवाक्यार्थवादिनाम् ॥
8 यजेतेति पदात्कार्यप्रधानं यागगोचरम् ।
स्यात्कार्यं यागविषयमिति बोधस्स चादिमः ॥
ततश्च यागविषयं कार्यं स्यात्स्वर्गसाधनम् ।
इत्यर्थाध्याहाराविद्भिः द्वितीयो बोध इष्यते ॥
स्वर्गकामपदश्रुत्या स्वर्गकामनियोज्यकम् ।
प्रागुक्ताद्विदळं कार्यमिति स स्यात्तृतीयकः ॥
ततश्च स्वर्गकामीयकृतिसाध्यमिति क्रमात् ।
प्रागुक्तात्रिदळं कार्यमिति बोधस्तुरीयकः ॥
नापूर्वे स्वर्गहेतुत्वं यागे तेन विना भवेत् ।
इति चानुपपत्तेस्तु प्रतिसन्धानसंभवे ॥

स्वर्गकामकृतेस्साध्यः स्वर्गकामनियोज्यकः ।
स्वर्गस्य साधनं याग इति बोधस्तु पञ्चमः ॥
यदप्यनुपपत्तेस्तु प्रतिसन्धानमुच्यते ।
तदुपादानमित्युक्तं धीरौपादानिकी ह्यसौ ॥
विध्याक्षेप उपादानं श्रुतार्थापत्तितः पृथक् ।
सा स्यादभिहितापर्यवसानाऽश्रुतकल्पना ॥
अभिधानानवसितिः उपादानमितीर्यते ।
तेनौपादानिकी त्युक्ता फलसाधनतामतिः ॥
इति प्राभाकरमतं वादारम्भसमर्थने ।
वादावळावन्ववादीदनन्तार्यबुधोत्तमः ॥

### (104) निषेधवाक्यार्थः.

1 नञर्थस्य विचारेऽपि किंचिदत्र प्रकाश्यते ।
त्रिविधा हि नञो वृत्तिः कुमारिलमुखेरिता ॥
पर्युदासः तथाऽभावः प्रतिषेधस्तथेति च ।
पर्युदासस्स विज्ञेयः यत्रोत्तरपदेन नञ् ॥
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।
इति कैश्चिन्निरुक्तं हि तत्रार्थः फलितस्त्वसौ ॥
अन्योन्याभावबोधे तु पर्युदास इतीर्यते ।
अत्यन्ताभावबोधे तु प्रसज्यप्रतिषेधवाक् ॥

नेक्षेतोद्यन्तमादित्यं तथाचाब्राह्मणं नय ।
इत्यादावीक्षणाद्विप्रात् अन्यद्वस्त्ववगम्यते ॥
ईक्षणव्यतिरिक्ता हि क्रिया तत्राप्यपेक्षिता ।
प्रत्यासत्तेर्न संकल्पमतिक्रम्यावगम्यते ॥
तथैव क्षत्रियाद्यर्थः पर्युदस्तः प्रतीयते ।
नामधात्वर्थयोगी च नञतोऽन्यार्थगोचरः ॥
2 लिङाद्यन्याख्यातयोगे चाभावार्थः प्रतीयते ।
तत्र चाज्ञातसंदिग्धविपरीतार्थवारणम् ॥
अस्तिनास्तीतिसंदेहे पाक्षिकास्तित्वबोधनम् ।
निवर्त्यते नञा यद्वा नास्तितैवोच्यते सती ॥
निवर्ततेऽस्तितावुद्धिः मृगतृष्णादिबुद्धिवत् ।
अज्ञानादिनिवृत्तिश्च दृष्टा मानान्तरेऽपि हि ॥
3 विधिना युज्यते यत्र न हन्यान्न पिबेदिति ।
नात्राभावार्थता यस्मात्प्राप्तं हि प्रतिषिध्यते ॥
रागादिना यदि प्राप्तं पानं च हननं च वा ।
कथं वा कथ्यते तत्राभावो भावनिवर्तितः ॥
यदि नानुष्ठास्यतेऽत्र प्राप्तिर्नैव प्रसिध्यति ।
तस्मादत्र निषेधार्थतत्त्वमेतन्निरूपितम् ॥
सच केशेषु पुरुषं गृहीत्वा विनिवर्तयन् ।
चिकीर्षिताच्च व्यापारात् अभावं स्थापयत्यपि ॥

अन्यथैव प्रवर्तन्ते भावाभावधियोऽपराः ।
व्यवस्थितबहिर्वस्तु परिच्छेदफलात्मिकाः ॥
अन्यथाऽनागतोत्पाद्यभावप्रेरणवारिका ।
अन्तस्संकल्पमूलात्मा वृत्तिर्विधिनिषेधयोः ॥
एतदुक्तं भवत्यत्र न्यायरत्नाकरोदितम् ।
यथा विधिर्विधेयस्य चेष्टहेतुत्वसिद्धये ॥
प्रमाणीभूय संकल्पं पुंसोऽनुष्ठानगोचरम् ।
जनयित्वा तेन पुंसा व्यापारं कारयन् स्वयम् ॥
तत्र कारकहेतुस्स्यात् निषेधोऽपि तथैव हि ।
निषिद्धस्यानिष्टहेतुभावे मानं भवन् ततः ॥
अननुष्ठानसंकल्पं वैराग्याज्जनयन् पुनः ।
तदभावव्यवस्थां च करोतीति सुनिश्चितम् ॥
तथाच यदि रागादिप्राप्तं विध्यर्थलक्षणम् ।
कर्तव्यत्वं लिङाऽनूद्य नञा तस्य निषेधनम् ॥
यदिवाऽत्र नञर्थस्य वर्जनस्य विधेयता ।
लिङाऽवबोधः द्वेधाऽपि व्यापारेऽनर्थहेतुताम् ॥
कल्पयन् अननुष्ठानसंकल्पजननात्परम् ।
निवारणं स्यादित्येतन्निषेधस्य निरूपणम् ॥
4 इयत्प्रयासहेतुश्च वक्ष्यमाणो विनिश्चितः ।
अवस्तुत्वादभावस्य न नृशृङ्गं नियुज्यते ॥

नोपादेयं नैव हेयं न कार्यं नापि कारणम् ।
को विधिः को निषेधोऽत्र प्रख्योपाख्याविवर्जिते॥
न कलञ्जं भक्षयेदित्येवमादिरपार्थकः ।
नियोग इति हि प्राहुरभावावस्तुवादिनः ॥
विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥
इत्यादिस्मृतिवाक्यार्थभङ्ग्यो भाष्यकृतामपि ।
अभावावस्तुसिद्धान्तमूलदोषनिबन्धनाः ॥
अभावः कारणं कार्यं वस्तु येषां विपश्चिताम् ।
तेषां पुनः नवीनानां प्रयासो नैव कश्चन ॥
यस्याभावोऽधिकरणं यस्य भावान्तरं च वा ।
सर्वं तद्विषयं ज्ञेयं न विचारोऽत्र कश्चन ॥
अत्र राणककारेण प्रोक्तं भङ्ग्यन्तरं त्विदम् ।
स्वकाले यदकुर्वन् तत् करोत्यन्यदचेतनः ॥
प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ।
इत्युक्तं तदपि प्रोक्ताभावतत्त्वविकल्पना ॥

(105) प्रयोजनवाक्यार्थः

1 अथ नैयायिकमते फलमेव प्रवर्तकम् ।
सम्मतं तत्र सारांशसंग्रहोऽप्यवधार्यताम् ॥

रागादेव प्रवृत्तिश्चेज्जन्मान्तरविनिश्चयः ।
रागिणामेव जन्मेति वीतरागेति सूत्रितम् ॥
यदि रागान्न प्रवृत्तिः स्वभावः कुशली भवेत् ।
शास्त्रं निरधिकारि स्यात् इति नैयायिकाशयः ॥
सुखे दुःखनिवृत्तौ वा पुंसां भवति कामना ।
न पुनः व्योमपुष्पादि कश्चित्कामयते नरः ॥
भयं नाशङ्कते यस्मात्फलं वापि समीहितम् ।
तथाविधस्य राज्ञोऽपि नाज्ञाऽनुष्ठीयते जनैः ॥
वर्तमानापदेशेऽपि फलं यत्रावगम्यते ।
तत्र प्रवर्तते लोकः लिङादिष्वश्रुतेष्वपि ॥

2 रहस्यं पुनरत्रेदं मीमांसकहृदि स्थितम् ।
इष्टसाधनताबुद्ध्या प्रवर्तेत नरो यदि ॥
रागात्साङ्गे प्रवृत्तिः स्यात् निषिद्ध्येत तदा वधः ।
विधिनैव प्रवृत्तिश्चेत् वधो वैधो भवेदिति ॥
शास्त्रमूला प्रवृत्तिश्चेददोषाऽभ्युपगम्यते ।
शास्त्रोत्थरागमूलाऽपि तादृक्स्यादिति तार्किकाः ॥

3 भवत्यारोग्यसंपत्तिर्भुञ्जानस्य हरीतकीम् ।
तत्कामो भक्षयेच्चेति को विशेषः प्रवर्तने ॥
अन्वयव्यतिरेकाभ्यां यदेवमनुमन्यते ।
प्रेरकत्वं फलस्यैव न नियोगात्मनः पुनः ॥

4 नियोगादथ निष्पत्तिः फलस्येत्यभिधीयते ।
फलं प्रत्यङ्गभूतत्वादवाक्यार्थत्वमापतेत् ॥
प्रेरणावगमादेव प्रवृत्तिर्यदि सिद्ध्यति ।
स्वर्गकामपदं तत्स्यादधिकारिविशेषणम् ॥
यो हि येन विना लोके न सिद्ध्येत्स तमाक्षिपेत् ।
नियोज्यमात्राक्षेपे स्यान्नियोगो न फलात्मकः ॥
ननु च स्वर्गकामोऽत्र नियोज्यः नान्यथा भवेत् ।
यदि स्वर्गस्य संपत्तिं नाधिगच्छेत्स्वकर्मणः ॥
नरेच्छामात्रमेवेदं, न शब्दस्त्वियति क्षमः ।
नियोज्यः स्वर्गकामो हि भवेज्जीवनवानिव ॥
विधेरेष स्वभावश्चेदायुष्मन् साधु बुध्यसे ।
भाट्टैः किमपराद्धं ते नित्येऽपि फलवादिभिः ॥
अधिकार्यनुपादेयविशेषणविशेषितः ।
जीवन्वा स्वर्गकामो वा समानः काम्यनित्ययोः ॥
विधिवीर्यस्वभावस्तु क्रिमेरपि तथाविधः ।
सप्रत्ययप्रेरकतां विधिर्नोपैति निष्फलः ॥
प्रत्यवायपरीहारो वोपात्तदुरितक्षयः ।
फलं नित्ये, ऽप्यन्यथा स्यादर्थानर्थाविवेकिता ॥
5 प्रतिषेधाधिकारेऽपि विधिवृत्तपरीक्षया ।
एवं नरकपातादिफलयोगो न दुर्वचः ॥

करणांशेऽपि लिप्सातः प्रवृत्तिर्यद्युपेयते ।
इतिकर्तव्यतांशे तु शास्त्रादिति न युक्तिमत् ॥
नहि तत्करणं शुद्धं स्वफलायोपकल्पते ।
सेतिकर्तव्यताकं हि करणं करणं विदुः ॥
उभयत्रापि लिप्सातः सातिचैवं प्रवर्तने ।
अग्नीषोमीयहिंसादेः स्यादेव श्येनतुल्यता ॥
तदुत्सर्गापवादाख्यन्यायस्यैव विमर्शनात् ।
न हिंस्यादिति सामान्यागोचरत्वावधारणा ॥

6 यस्त्वाह प्रेरकत्वं चेत्फलं दर्शयतो विधेः ।
प्रत्यक्षादिसमानत्वात् स्वातन्त्र्यं तस्य हीयते ॥
स वाच्यः फलशून्यत्वे सुतरामस्वतन्त्रता ।
यद्रिक्तमर्थं मूढोऽपि न कश्चिदनुतिष्ठति ॥
फलस्यैवेष्यमाणस्य पश्यन् प्रेरकतामतः ।
यमर्थमधिकृत्येति सूत्रं व्यधित सूत्रकृत् ॥

7 गुणप्रधानानियमात् मिथस्संसृष्टलक्षणः ।
पदार्थ एव वाक्यार्थः स्यात्प्रयोक्तृविवक्षया ॥
क्वचित्साक्षात्पदोपात्तं क्वचित्प्रकरणागतम् ।
क्वचिदालोचनागम्यं फलं सर्वत्र गम्यते ॥
तस्मात्फलस्य साध्यत्वात् सर्वत्र तदवर्जनात् ।
क्रियादीनां च तादर्थ्यात् तस्य वाक्यार्थतेष्यते ॥

8 प्रतिभा खलु विज्ञानं तच्च शब्देन जन्यते ।
नतु शब्दस्य विषयः रूपधीरिव चक्षुषः ॥

९ सुखं हि जगतामेव काम्यं धर्मेण जायते ।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ॥
चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत् ।
तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥
बलवद्विष्टहेतुत्वमतिस्स्यात्प्रतिबन्धिका ।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥
चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा ।
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ॥
एवं प्रवृत्तिजननात् विधेरपि तदर्थता ।
नित्येऽपि ब्रह्मलोकादेस्संप्राप्तिरवधार्यते ॥
आप्ताभिप्रायमाचार्याः विध्यर्थं लाघवाद्विदुः ।
वेदस्य पौरुषेयत्वे मानं चापि विधिं विदुः ॥
इति नैयायिकमतसारांशो विशदीकृतः ।
अथ वेदान्तसिद्धान्ते विशेषः प्रतिपाद्यते ॥

(106) आप्ताभिप्रायवाक्यार्थः.

1 इष्टस्य कृत्यधीनात्मलाभलक्षणकार्यता ।
लिङर्थ इति वेदार्थसंग्रहे भाष्यकृद्वचः ॥

प्राभाकरा ये विख्यातास्ते वाच्यापूर्ववादिनः ।
कौमारिलाः पुनः कल्प्यापूर्ववादिन ईरिताः ॥
अतिरिक्तार्थवाच्यत्वकल्पनायामपीष्यते ।
श्रुतैव देवताप्रीतिः नापूर्वं क्वचिदश्रुतम् ॥
इष्टसाधनतां प्राहुर्लिङर्थं मण्डनादयः ।
अयं त्विष्टाभ्युपायोऽतः कार्यमित्यध्यवस्यति ॥
कार्यत्वमिष्टोपायत्वादन्तरङ्गमितीतरे ।
लघीयसी साध्यताऽतः देवताप्रीत्यपेक्षया ॥
तत्रैव शब्दशक्तिः स्यादिति श्रीभाष्यकृन्मतम् ।
आप्तस्य हितकामस्य नियोगोऽपि तदादृतः ॥
श्रीपूर्णप्रज्ञसिद्धान्तोऽप्येवमेव प्रतीयते ।
अनुव्याख्यानवाक्यं तु तदीयमवधार्यताम् ॥
कार्यता च न काचित्स्यादिष्टसाधनतां विना ।
कार्यं साधनमिष्टस्य भगवानिष्टदेवता ॥
इति तस्माद्देवता तु येषां स्यान्निरनुग्रहा ।
क्लिश्नन्ति ते वै प्रायेण नान्य इत्यत्र निर्णयः ।
2 अत्र श्रीभाष्यकारीयापूर्वसिद्धान्तखण्डनम् ।
संगृह्यतेऽथ विशदबोधाय विदुषामपि ॥
आचार्यकाधिकारार्थाऽधीतिस्स्यादिति संशये ।
अर्थज्ञानाधिकारार्थाऽथातो धर्मेत्यसूत्रयत ॥

विधिस्स्वाध्याय इत्यादिः यावत्स्वाध्यायगोचरः ।
अथेत्यानन्तर्यमपि यावत्तत्प्रतियोगिकम् ॥
अत इत्यर्थपरता यावद्वेदावलम्बिनी ।
जिज्ञास्यताऽपि कृत्स्नस्य वेदार्थस्येति गम्यते ॥
अभिधा चोदना चेति श्रुतिरेषा द्विधा मता ।
आद्या सिद्धपरा ज्ञेया द्वितीया कार्यतत्परा ॥
अव्युत्पत्त्यनपूर्वत्वाप्रयोजननिबन्धनम् ।
अप्रामाण्यं विदुस्सिद्धे विबुधा ह्यभिधाश्रुतेः ॥
चोदनाश्रुतिरेवैषा व्युत्पत्त्यादिपरिष्कृता ।
प्रमाणं स्यात्ततश्चाद्या लिङ्गेऽन्तर्भावमर्हति ॥
चोदनालक्षणः कार्यं धर्मो वेदार्थ इत्यतः ।
वेदार्थः कार्यरूपस्स्यादिति व्याख्या गुरोर्मता ॥
ततश्चोपनिषद्व्याख्याशास्त्रं नारम्भमर्हति ।
यस्मादुपनिषच्छब्दः सिद्धवस्त्वेकगोचरः ॥
अत्रोच्यते ब्रह्मविद्भिः ब्रह्माप्यानन्दलक्षणम् ।
शास्त्रेणैवावसेयं च व्युत्पन्नं चाप्तवाक्यतः ॥
तस्मात्साध्यपरा यद्वत्तथा सिद्धपराऽपिच ।
श्रुतिः प्रमाणं तेनार्धजरतीयं न युक्तिमत् ॥
इति सिद्धान्तानुरोधात्कार्यतत्त्वमनूद्यते ।
प्राक्छ्लोकैस्सप्तभिः पश्चात् सप्तभिस्तन्निरस्यते ॥

लोके हि सिद्धवस्तूनां ये शब्दाः प्रतिपादकाः ।
पश्चात्तनास्ते संदृष्टाः प्रतिपाद्यात् तथा यदा ॥
श्रुतिः सिद्धपराचेत्स्यात् प्रतिपाद्यादनन्तरा ।
ततश्चापौरुषेयत्वं नित्यत्वं च न निर्वहेत् ॥
कृतिसाध्यं प्रधानं यत्तत्कार्यमिति गीयते ।
प्रामाण्यमपि वेदस्य तत्र व्युत्पत्तिसंभवात् ॥
आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥
कृतिसाध्यत्वमिष्टत्वं कृत्युद्देश्यत्वमेवच ।
कार्यस्य त्रय आकारा इत्याहुः कार्यवादिनः ॥
साधारणौ द्वावाकारौ भावार्थफलयोरिति ।
तृतीयोऽसौ नियोगस्य त्वसाधारण इष्यते ॥
कार्यं हि तच्च प्रथममनन्यार्थं प्रतीयते ।
ततश्चान्यार्थता युक्ता भृत्येष्टप्रदभूपवत् ॥
3 स च किं कृतिकर्मत्वं किंवा प्रेरकता मता ।
अनुकूलत्वमथवा शेषित्वमथवा मतम् ॥
प्रयोजनत्वमथवा प्राधान्यमथवा कृतेः ।
अथवा सुखरूपत्वं पुरुषार्थत्वमेववा ॥
नाद्यत्रयं कृत्यधीनसिद्धता वेष्टताऽपिवा ।
फलभावार्थयोरेव तदेतत्पर्यवस्यति ॥

शेषित्वं दुर्निरूपं स्यात् पञ्चमं पूर्ववद्भवेत् ।
षष्ठं त्वसंभवग्रस्तं सप्तमं लोकदूषितम् ॥
अष्टमं निष्प्रमाणं स्यात् अपूर्वं दुर्वचं ततः ।
कर्तृव्यापारसाध्यत्वमात्रं धात्वर्थसंगतम् ॥
लिङादेर्वाच्यमित्याहुरनुशासनवेदिनः ।
एवं वाच्यापूर्ववादो यथाऽन्येषां न संमतः ॥
तथा कल्प्यापूर्ववादः सेश्वरैरधरीकृतः ।
इति श्रीभाष्यकारीयापूर्ववादार्थसंग्रहः ॥

4 अथान्विताभिधानाभिहितान्वयविवादयोः ।
आद्यः प्राभाकराभीष्टः ह्यन्त्यः कौमारिलादृतः॥
आदौ पदानि श्रूयन्ते ततो व्युत्पत्तिमार्गतः ।
परस्परानन्विता ये पदार्थाः स्मारयन्ति तान् ॥
आकाङ्क्षादिपरामर्शः स्मृतेष्वर्थेषु जायते ।
न्यायप्रवृत्तिस्तत्रैव स्वात्मानं लब्धुमर्हति ॥
वचनव्यक्तिभेदाभिव्यक्तिस्संपाद्यते तया ।
सम्यङ्न्यायानुग्रहेण तैर्वाक्यार्थोऽभिधीयते ॥
नानापदार्थसहितप्रधानैकार्थलक्षणः ।
पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ॥
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ।
अन्विताथाभिधायित्वे पदानां शिक्षिते सति ॥

विशिष्टा वक्तृधीर्ज्ञातुं शक्यते नान्यथा पुनः ।
एषोऽन्विताभिधानस्य प्रकारः गुरुसम्मतः ॥

5 अथ भट्टस्याभिमतः प्रोच्यतेऽभिहितान्वयः ।
पदैरेवाभिधीयन्ते पदार्थाः ते पृथक्पृथक् ॥
विशेषव्यक्त्यभावात्तत्स्मारकान्न विशिष्यते ।
योग्यत्वेन परामृष्टाः तेऽर्था अभिहिताः पुनः ॥
विशेषसंसर्गरूपं वाक्यार्थं बोधयन्ति तम् ।
पदमभ्याधिकाभावात् स्मारकान्न विशिष्यते ॥
यदाधिक्यं भवेत्किंचित् तत्पदस्य न गोचरः ।
न पदव्यापृतिस्तत्र चार्थैरेवार्थसिद्धितः ॥
यथा कविभिरालोच्यमाना अर्थाः परस्परम् ।
अन्विताः केवलं लोकोत्तरवाक्यस्य हेतवः ॥
अत एव हि वाक्यार्थमेते लाक्षणिकं विदुः ।
यस्मादभिहितैरर्थैः संबन्धात्सोऽवगम्यते ॥
नाकृतिः प्रथमं ज्ञाता व्यक्तिः पश्चात्प्रतीयते ।
किं तु प्रतीयते जातिः व्यक्त्यैव सहिता यथा ॥
तथाऽन्वयोऽप्यधिगतस्त्वन्वितस्यावबोधकः ।
इत्यन्विताभिधाय्येष शब्द इत्युच्यते परैः ॥
क्लृप्तमन्वितसामर्थ्यं पदार्थानां स्वभावतः ।
एकवाक्यतया तत्र कल्प्यं नियममात्रकम् ॥

पदार्थेष्वभिधावृत्तिः पदानां पर्यवस्यति ।
तात्पर्यवृत्तिर्वाक्यार्थे स तस्माच्चोदनाश्रयः ॥
6 शब्दैकलभ्यताराागादेवान्येऽन्वितवादिनः ।
तात्पर्येणान्यथासिद्ध्या परेऽभिहितवादिनः ॥
वाक्यं प्रमाणान्तरं स्यात्पदसान्निधिलक्षणम् ।
तद्विलक्षणसामर्थ्यं मतमिन्द्रियलिङ्गवत् ॥
तथा कार्यार्थसिद्धार्थव्युत्पत्त्येकान्तभेदतः ।
अन्विताभिहितेत्यादिमतभेदः व्यवस्थितः ॥
पदज्ञानं तु करणं द्वारमर्थस्मृतिस्ततः ।
फलं संसर्गबोधस्स्यात् इति नैयायिका विदुः ॥
तत्रान्वयोऽनधिगतः वाक्यवेद्यो यतस्ततः ।
ते त्वन्वयाभिधानस्य वादिनः परमार्थतः ॥
निर्विशेषब्रह्मवादे ह्यन्वितस्यान्वयस्य वा ।
भेदगर्भत्वतः शब्दः न तादृग्ब्रह्मबोधकः ॥
सविशेषब्रह्मवादे प्रधानार्थाविरोधतः ।
नैकत्र निर्भरस्तस्माद्व्यवहारो यथायथम् ॥
अन्वीयमानवस्तूनामभिधानं परेऽब्रुवन् ।
अन्येऽभिधीयमानानामर्थानामन्वयं जगुः ॥
अत्रापि केचिन्मन्यन्ते सामान्येनान्विताभिधा ।
विशेषतश्चाभिहितान्वय इत्यपि कल्पनाम् ॥

अतस्सामान्यतो ज्ञातः पदान्तरबलात्पुनः ।
भवेद्विशेषविज्ञातः तेन स्यादन्वितोक्तिता ॥
इत्यप्याहुर्बुधाः केचित् सर्वथाऽन्वयबोधनम् ।
फलं सर्वत्राविशिष्टमित्याहुश्चिन्तनालसाः ॥
मीमांसकस्य सिद्धान्तः तथा नैयायिकस्य वा ।
प्रदर्शितः परिष्कृत्य प्रायो वेदान्तवादिभिः ॥
एष वाक्यार्थवादोऽत्र देवताप्रीतये कृतः ।
सर्वत्र देवताप्रीतिः कर्तव्येति हि निर्णयः ॥
लक्ष्मीपुरं श्रीनिवासविपश्चिच्चक्रवर्तिना ।
एवं प्रमाणभागोऽयं द्वितीयस्समगृह्यत ॥

श्रीः.

प्रीयतां भगवान् वासुदेवः.

इति श्रीवत्सकुलकलशजलनिधिकौस्तुभायमानश्रीवेङ्कटार्यतनूभवस्य ताताम्बागर्भशुक्तिमुक्ताफलायमानस्य श्रीमत्कस्तूरीरङ्गनाथविद्वन्माणिकरुणाकटाक्षसमासादितसारस्वतसर्वस्वस्य श्रीमद्विरक्तराघवार्यचरणानुगृहीतसकलसम्प्रदायरहस्यस्य श्रीमद्राजाधिराजमहीशूरमहीधुर्यतुर्यश्रीकृष्णराजसार्वभौमपरिपोषितस्य महाविद्वत्पण्डितरत्नाद्यनेकबिरुदालङ्कृतस्य संस्कृतमहापाठशालानिगमान्तप्रधानोपाध्यायस्य श्रीमतो लक्ष्मीपुराभिजनस्य श्रीनिवासाचार्यस्य कृतिषु मानमेयरहस्यश्लोकवार्तिके प्रमाणकाण्डः द्वितीयः समाप्तः.

# अथ तृतीयः प्रयोजनकाण्डः

---

## (107) त्रिवर्गवादः

1 प्रयोजनविचारोऽथ तृतीयोऽयं विलिख्यते ।
व्यापारस्य हि सर्वस्य विश्रमोऽस्ति प्रयोजने ॥
धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एवच ।
अर्थ एवेह वा श्रेयः त्रिवर्ग इति तु स्थितिः ॥
इति प्राह मनुस्तस्य वचनस्यायमाशयः ॥
श्रेयःपदं पुमर्थस्य वाचकं सर्वसम्मतम् ॥
अर्थ एव पुमर्थस्स्यादित्येकेषामिहाशयः ।
अर्थ एवहि धर्मस्य कामस्यास्तीह साधनम् ॥
काम एव पुमर्थस्स्यादिति केषांचिदाशयः ।
धर्म एव श्रेय इति रौति वै बादरायणः ॥
ऊर्ध्वबाहुर्विरौम्येष नच कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥
अर्थकामौ श्रेय इति चापरेषामिहाशयः ।
अर्थकामौ हि जगति प्रथितं सुखसाधनम् ॥
अर्थधर्मौ श्रेय इति चाचार्या मन्वतेऽपरे ।
कामो हि धर्मार्थाभ्यां स्यादिति तेषामिहाशयः॥

परस्पराविरुद्धस्तु त्रिवर्गश्श्रेय इष्यते ।
पुरुषार्थतयेत्यत्र मनोः स्मर्तुः विनिर्णयः ॥
मुमुक्षूणां पुनः श्रेयः मोक्ष एवेतिचेरितम् ।
षष्ठाध्याये, ततः पक्षाः विबुधैस्सप्त निश्चिताः ॥
तमसो लक्षणं कामः रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥
एवं प्राचां विवादेऽपिचाधुना ते चतुर्विधाः ।
पुरुषार्थाः चतुर्वर्गः इति पीठप्रकल्पना ॥
2 धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुर्विधः ।
पुरुषार्थो विभक्तोऽस्ति यथा स्मृतिपुराणयोः ॥
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदत्रास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् ॥
अत्राद्येऽर्थे चतुर्भिश्चैरधर्माद्यास्समुच्चिताः ।
मिथस्समुच्चयश्चेति व्याख्यातं तन्त्रवार्तिके ॥
अर्थं प्रोवाच चाणक्यः कामं वात्स्यायनोऽब्रवीत् ।
धर्मं तु जैमिनिः प्राह मोक्षं वै बादरायणः ॥
एतेऽधुना तीर्थकराः पुमर्थानामिति श्रुताः ।
समुच्चयविदस्सर्वेऽप्यधिकारिविभेदतः ॥
पुरुषैरर्थ्यमानत्वात्पुरुषार्थ इतीर्यते ।
स तु स्यात्सुखमेवात्र तच्चतुर्धा विभज्यते ॥

शारीरं मानसं चेति द्विधा तत्सुखमिष्यते ।
अर्थकामौ तु शारीरं धर्ममोक्षौ तु मानसम् ॥
3 पुमवस्थाक्रमेणैव पुरुषार्थक्रमोऽप्यसौ ।
निर्देशव्युत्क्रमे चापि हेतुरग्रेऽवगम्यते ॥
उत्पत्तितस्त्विन्द्रियार्थसन्निकर्षनिबन्धनम् ।
यत्तदर्थसुखं ज्ञेयमथ कामो निरुच्यते ॥
वयोऽवस्थाविशेषेण सहवासादिनाऽपिवा ।
पुंस्त्वाद्यभिव्यक्तिभवं अवस्थैकनिबन्धनम् ॥
तथा विद्यासंस्कृतेन मनसा धर्मलक्षणम् ।
सुखं ह्यनुबुभूषन्ति नियोगसुखवादिनः ॥
फलान्तराहेतुरपि स्वरूपे कार्यबुद्धितः ।
स्वयंप्रयोजनं नित्यमित्यप्यत्रेतरे विदुः ॥
प्रत्यवायपरीहारबुद्ध्या कर्तव्यमेव तत् ।
इत्याहुरपरे प्राज्ञाः स धर्मस्सुखमर्थ्यते ॥
अतएवाहि यज्ञस्य त्रैविध्यपरिशोधने ।
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥
यष्टव्यमेवेति मनस्समाधाय स सात्त्विकः ।
इत्यस्य पुरुषार्थत्वं गीतं भगवता स्वयम् ॥
ख्यातेर्लाभस्य पूजायाः मानसी सुखता यथा ।
तथा धर्मस्य सुखता शास्त्रदृष्टिभिरीक्ष्यते ॥

मोक्षस्य पुरुषार्थत्वे विक्रान्तं सर्वसूरिभिः ।
तत्सर्वमुत्तरत्रैव सम्यक्स्पष्टीभविष्यति ॥
एवं चतुर्विधसुखावस्थाप्राधान्यलिप्सया ।
चातुराश्रम्यसंस्थाऽपि प्रायेणात्रानुरुध्यते ॥
मोक्षाश्रमस्स्यात्संन्यासः धर्मो वैखानसाश्रमः ।
कामो गृहस्थाश्रमस्स्यात् अर्थार्थी ब्रह्मचार्यसौ ॥
एतद्दृष्ट्यैव वर्णानां विभागोऽपि समञ्जसः ।
ब्राह्मणस्त्विह संन्यासी ऋषिः क्षत्रिय उच्यते ॥
गृहस्थोऽपि भवेद्वैश्यः शूद्रश्शुश्रूषुरुच्यते ।
तथा कालविभागोऽपि कृतं ब्राह्मण्यलक्षणम् ॥
क्षात्रं त्रेता समाख्याता द्वापरः वैश्यता मता ।
शूद्रः कलिरितिप्रोक्तः स्फष्टं रामायणोत्तरे ॥
अपराजितपृच्छाया वचश्चाप्यवधार्यताम् ।
ऋग्वेदादिविभागेन कृतादियुगभेदतः ॥
विप्रादिवर्णभेदेन चतुर्वक्त्रः चतुर्भुजः ।
हेमाद्रीये कालखण्डे परिशिष्टे ह्युदाहृतम् ॥
चतुर्णामपि चैतेषां परस्परसमागमः ।
विशिष्टेनानुकूल्येन प्रपञ्चस्थितये मतः ॥
4 चातुराश्रम्यसिद्धान्ते त्वैकाश्रम्यं समाश्रिताः ।
जैमिनीयास्ततस्सोऽयं बाधपक्ष इतीर्यते ॥

अधिकारानुरोधेन बादरायणयोगिनः ।
विकल्पमिच्छया प्राहुः पक्षो वैकल्पिकस्तु सः ॥
समुच्चयं ह्याश्रमाणां मन्वाद्यास्स्मृतिकारिणः ।
प्राहुस्समुच्चयस्तेषां पक्ष इत्यवधार्यते ॥
तद्वद्धर्मार्थकामादिपुरुषार्थचतुष्टये ।
अर्थो लौकायतः प्रोक्तः कामश्शाक्तस्त्वनन्तरः ॥
जरन्मीमांसकाभीष्टः मोक्षस्सौगतसम्मतः ।
अधिकारानुरोधेन विकल्पं केचिदूचिरे ॥
समुच्चयस्स्वीकृतोऽस्ति स्पष्टं स्मृतिपुराणयोः ।
परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ॥
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेवच ।
असाधुभ्योऽर्थमादाय साधुभ्यस्संप्रयच्छति ॥
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।
इति मन्वादिवचनात्कलितावर्थकामयोः ॥
आद्यन्तयोः धर्ममोक्षाविति शास्त्ररहःस्थितिः ।
अर्थशास्त्रे स्तेयशास्त्रे चार्थतत्त्वं प्रपाश्चितम् ॥
5 अथ कामरहस्यं तु किंचिदत्र प्रकाश्यते ।
रागो द्वेषो मोह एते यान्तिचेदुत्कटां स्थितिम् ॥
कामः क्रोधो लोभ इति व्याह्रियन्ते क्रमादमी ।
कामस्येच्छासंज्ञकस्यावस्थाभेदा इमे मताः ॥

देवासुरमनुष्याणां रूपमेतद्विभाजकम् ।
त्रिविधं नरकस्यैतद्वारं नाशनमात्मनः ॥
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ।
इत्येवं गीतया सैषा श्रुतिस्स्म्याद्दुपबृंहिता ॥
बृहदारण्यकान्तस्स्था प्राजापत्यास्त्रया इति ।
असुरांश्च मनुष्यांश्च देवांश्चापि प्रजापतिः ॥
उपादिशाद्धि ददद-दयध्वं दत्त दाम्यत ।
श्रुतिस्मृत्योरयं भावः तस्मिन् सर्वं प्रतिष्ठितम् ॥

(108) मोक्षोपोद्घातः.

1 अथ मोक्षपदार्थस्य तत्त्वं संगृह्यतेऽधुना ।
यदर्थं सकलं शास्त्रं जगत्यां संप्रवर्तते ॥
दुःखाभावस्सुखमिति व्यवहारस्य गोचरः ।
किंचित्सुखं नाम वस्तु नास्तीत्येव हि सौगताः॥
न सुखादिप्रमेयं वा मनो वाऽस्तीन्द्रियान्तरम् ।
अनिषेधादुपात्तं चेत् अन्येन्द्रियमतं वृथा ॥
दुःखाभावस्सुखमिति जरत्तार्किकसम्मतः ।
इत्यानन्दगिरिः प्राह स्पष्टं संबन्धवार्तिके ॥
2 सुखाभावो दुःखमिति व्यवहारस्य गोचरः ।
दुःखं वस्त्वन्तरं नास्तीत्याहुर्लौकायताः पुनः ॥

यावज्जीवं सुखं जीवेत् सुखभाजः प्रजास्स्मृताः ।
आत्मा सुखे नियोक्तव्य इत्यादिवचसां चयात् ॥

3 सुषुप्त्याद्युपलम्भेन सर्वे दार्शनिकाः परे ।
तृतीयामसुखादुःखावस्थामभ्युपयन्ति ते ॥
रागद्वेषविहीना या दशोपेक्षात्मिका यथा ।
यथाऽनुष्णाशीतता वा यथाऽनिर्वचनीयता ॥
प्रत्यक्षाच्च परोक्षाच्चापरोक्षोऽन्यो यथेष्यते ।
कृतिज्ञप्त्योरन्तराळे व्यक्तिरन्या यथोच्यते ॥
तादात्म्यं च यथा भेदाभेदयोर्मध्यलक्षणम् ।
पतितात्पतितव्याच्च वर्तमानाध्वता यथा ॥
संचितागामिनोर्मध्ये प्रारब्धं वा यथेष्यते ।
तथाऽन्तरालावस्थानं प्राय इच्छन्ति सूरयः ॥
मिथस्संश्रयधीबाधमध्यावस्थोपलम्भनैः ।
न स्यात्परस्पराभावमात्रता सुखदुःखयोः ॥

4 अभ्यास एव सर्वत्र सुखादीनां नियामकः ।
कालदेशदशाभिन्नस्वभावात्स व्यवस्थितः ॥
नहि वस्तु स्वभावेन पुरुषार्थत्वमश्नुते ।
तथात्वे सर्वदा सर्वं सर्वेषां स्याद्व्यवस्थया ॥
सुखाय वा स्याद्दुःखाय नचैवं त्वव्यवस्थया ।
सुखदुःखव्यवस्थेयं दुर्निरूपा हि धीमताम् ॥

तथाचोक्तं पुराणेऽपि पराशरमहर्षिणा ।
मनःप्रीतिकरः स्वर्गः नरकस्तद्विपर्ययः ॥
वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च ततस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय ततः प्रसादाय च जायते ॥
तस्माद्दुःखात्मकं नास्ति नच किंचित्सुखात्मकम् ।
संस्कारात्मा वासनैव सुखदुःखव्यवस्थितिः ॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तत्तस्मात्तस्य रोचते ॥
पशुहिंसादिसंबन्धे यज्ञे तुष्यन्ति हि द्विजाः ।
तेभ्य एव हि यज्ञेभ्यः शाक्याः क्रुध्यन्ति पीडिताः॥
अग्नेश्शीतेन तोयस्य तृषा भक्तस्य च क्षुधा ।
क्रियते सुखकर्तृत्वं तद्विलोमस्य चेतरैः ॥
क्षुत्तृष्णोपशमं तद्वत् शीताद्युपशमं सुखम् ।
मन्यते बालबुद्धित्वात् दुःखमेव हि तत्पुनः ॥
अत्यन्तास्तिमिताङ्गानां व्यायामेन सुखैषिणाम् ।
भ्रान्तिज्ञानावृताक्षाणां प्रहारोऽपि सुखायते ॥
तथा सौगतगाथाऽपि गीयते सार्वलौकिकी ।
परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ॥

कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ।
अथौपनिषदानां च श्रुता माण्डूक्यकारिका ॥
यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।
तं चावति स भूत्वाऽसौ तद्ग्रहस्समुपैति तम् ॥
5 एवं सर्वमिदं दुःखं इति भावयतोऽनिशम् ।
सर्वोपपत्तिस्थानेषु निर्वेदोऽस्य प्रवर्तते ॥
निर्विण्णस्य च वैराग्यं विरक्तस्य च देहिनः ।
क्लेशकर्मप्रहाणादिद्वारो निश्श्रेयसोदयः ॥
त्यागेन वाऽथ भोगेन वैराग्यमिति संशये ।
न कर्मणा न प्रजया त्यागेनैकेत्यनुश्रवात् ॥
त्यागेनैवेति सिद्धान्तः निगमान्तविदां मतः ।
न जातु कामः कामानामुपभोगेन शाम्यति ॥
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।
इति मन्वादयोऽप्येतं पन्थानं समुपाश्रिताः ॥
भोगेनैवेति सिद्धान्तः सांख्यानामवगम्यते ।
भोगं कृत्वैव पुरुषस्यापवर्गं करोत्यपि ॥
प्रधानमिति सिद्धान्तः सांख्यशास्त्रेऽवगम्यते ।
जहात्येनां भुक्तभोगामित्यपि श्रूयते श्रुतिः ।
ऋणापाकरणश्रुत्याऽप्येष पन्थाः प्ररोच्यते ।
ऐकाश्रम्यविधानं च जैमिनेरिह युज्यते ॥

कथंचिदपि वैराग्यमन्तरङ्गं विमुक्तये ।
इति बोधयितुं शिष्यान् प्राचां तत्र न विस्तरः ॥

6 अल्पत्वास्थैर्यचिन्तायां सर्वं दुःखमयं जगत् ।
पूर्णत्वस्थैर्यबुद्धौ तु सर्वं सुखमयं जगत् ॥
अतोऽभिमानानुगुणा सुखदुःखव्यवस्थितिः ।
सोऽभिमानः कर्ममूल इति लोकायतेतरे ॥
कर्मापिचेश्वरायत्तमिति सेश्वरपद्धतिः ।
कर्मानपेक्षेशवादे शैवीच्छा तन्नियामिका ॥

7 सुखदुःखव्यवस्थानुगुणा शास्त्रसमुत्थितिः ।
दुःखं मा भूत्सुखं भूयादिति सर्वस्समीहते ॥
यदा लोको भिन्नरुचिर्भिन्नसंस्कारसंस्कृतः ।
विचित्रो लौकिकेऽप्यर्थे किमुवाच्यमलौकिके ॥
तस्मान्मोक्षविकल्पोऽयं तत्साधनाविकल्पना ।
तत्तच्छास्त्रविकल्पो वा नाश्चर्यमिह धीमताम् ॥

(109) मोक्षविकल्पः.

1 पापसत्त्वे दुःखसत्त्वं तत्सत्त्वे मुक्तिसत्यता ।
तत्सत्त्वे हेतुचिन्ता स्यात् सर्वं श्रद्धानिबन्धनम् ॥
तथाऽप्यात्यन्तिको दुःखध्वंसश्चेन्मोक्ष इष्यते ।
देहविच्छेदमात्रेण विमोक्षश्चारुवाङ्मतः ॥

महानन्दो यदा मोक्षः शरीरान्याविनिर्णयात् ।
सहस्रकामिनीलाभं कामशास्त्रविदो विदुः ॥
तत्रापिच सहस्रेति सहस्रवणमुच्यते ।
सहस्रुतिर्मोक्ष इति रतिरत्नप्रदीपिका ॥
शून्याद्वैतं माध्यमिकमतस्थैः मोक्ष इष्यते ।
स चोपलम्भोपशमः प्रपञ्चोपशमश्शिवः ॥
दुःखं स्वलक्षणं शून्यं क्षणिकं सकलं ततः ।
यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्षते ॥
शून्यादीनां भावनया वासनानां परिक्षयात् ।
धीसंततिः निर्वृणोति निर्वातस्थप्रदीपवत् ॥
वासनात्यन्तविच्छेदं योगाचाराः प्रचक्षते ।
ततो विशुद्धविज्ञानसत्सन्तानमहोदयः ॥
समस्तालीकविषयज्ञानसंतानसंहृतिः ।
प्रज्ञाकरोदिता सौत्रान्तिकसिद्धान्तसम्मता ॥
यतोऽसत्ख्यातिसिद्धान्तः सौत्रान्तिकपरिष्कृतः ।
केचिद्विषयसंसर्गवैधुर्यमनुजानते ॥
वैभाषिकमते मोक्षस्स स्यादिति विनिर्णयः ।
मतेष्वेषु त्रिषु मता केवला बुद्धिसंततिः ॥
एकतापत्तिमिच्छन्ति सन्ततीनां धियां परे ।
शुद्धज्ञानोदयः कैश्चित् चरमज्ञानमिष्यते ॥

नित्योर्ध्वगमनं मुक्तिरिति ह्यार्हतपद्धतिः ।
अर्हद्देहानुप्रवेशः तदीयैः कैश्चिदिष्यते ॥
साधारणश्शरीरोऽसौ सर्वलोकोपरिस्थितः ।
निरावरणता कैश्चिदलोकाकाश इष्यते ॥
सर्वलोकाकाशमूर्ध्नि सोऽलोकाकाश इष्यते ।
वियातानुभवः कैश्चिद्वैयात्यं च प्रगल्भता ॥
स्वातन्त्र्यं शिवसारूप्यं शिवसाम्यमथापिवा ।
चिच्छक्तिपरिशेषश्च भेदाः पाशुपता इमे ॥
2 ज्योतिष्टोमाग्निहोत्रादिसाध्यो यस्स्वर्गलक्षणः ।
मोक्षस्स एवेति मतं जरन्मीमांसकादृतम् ॥
चित्तेन स्वात्मसौख्यानुभूतिं भाट्टैकदेशिनः ।
केचित्स्वात्मन्यवस्थानमभावापत्तिलक्षणम् ॥
परमात्मप्राप्त्यवस्था पुनरावृत्तिवर्जिता ।
मुक्तिर्निश्श्रेयसमिति निर्णीतं तन्त्रवार्तिके ॥
प्रभाकरगुरूणां तु दृषत्तुल्य इतीरितम् ।
बोद्धा विषयसंवित्तौ ग्राहकत्वेन भासते ॥
मोक्षे प्रकाशरूपोऽसावात्मेत्येके प्रचक्षते ।
नेप्स्येत पुरुषैस्स्वापादविशिष्टोऽन्यथा तदा ॥
केवलात्मानन्दभोगः कापिलैः कैश्चिदिष्यते ।
कैश्चित्स्वसंवित्तिशून्या कैवल्यावस्थितिर्मता ॥

एवमेवानुजानन्ति पातञ्जलमतानुगाः ।
प्रकाशात्मविदो न स्वप्रकाशात्मविदस्तु ते ॥
सर्ववैशेषिकगुणोच्छेदः काणभुजो मतः ।
एवमेवानुजानन्ति केचिद्गौतमदर्शनाः ॥
तथा नित्यसुखव्यक्तिं विदुर्भूषणयायिनः ।
अथौपनिषदैः प्रायः ब्राह्माविर्भाव उच्यते ॥
स्वाभाविकं तु ये भेदाभेदमिच्छन्ति वैदिकाः ।
भर्तृप्रपञ्चादयस्तैस्सन्मात्रब्रह्मता मता ॥
औपाधिकं तु ये भेदमभेदं निरुपाधिकम् ।
इच्छन्ति भास्करास्तेषां सत्योपाधिविनाशतः ॥
सर्वातिशयितानन्दस्वात्मसंवेदिनः प्रभोः ।
सर्ववेत्तुस्सर्वशक्तेः ब्रह्मणो भाव इष्यते ॥
आविद्यकं तु ये भेदमभेदं पारमार्थिकम् ।
अहुर्मायाविदस्तेषां पन्थाश्शांकरसंमतः ॥
निर्विशेषब्रह्मभावापत्तिर्मोक्षस्तु तन्मते ।
ब्रह्माद्वैतवदेवेदं शब्दाद्वैतविदां मतम् ॥
ते विशुद्धाद्वैतिनस्स्युः विशिष्टाद्वैतिभिः पुनः ।
परिपूर्णपरब्रह्मानुभवो मोक्ष इष्यते ॥
तद्भोगे परमं साम्यमाहू रामानुजादयः ।
स्वस्वयोग्यस्वस्वरूपान्दाभिव्यक्तिलक्षणा ॥

मुक्तिरित्युच्यते पूर्णप्रज्ञैः विष्णोः प्रसादतः ।
प्रायेणैतेषु पक्षेषु संकीर्णा इतरेऽखिलाः ॥

3 जीवस्वरूपप्रध्वंसवादिनो ये विचक्षणाः ।
मुक्तिमात्यन्तिकीं सर्वक्लेशेभ्यस्ते विदुस्ततः ॥
तत्रादिमास्तु क्षणिकविज्ञानात्मविदो बुधाः ।
देहान्तात्मविदो ये तु बार्हस्पत्या हि ते मताः ॥
पौराणिकैकदेशीयाः ये कल्पान्तात्मवादिनः ।
येऽप्यौपनिषदाः केचित् मोक्षान्तात्माभिधायिनः॥
तत्रच ब्रह्मदत्तीयाः जीवोत्पत्त्यादिवादिनः ।
ब्रह्मैवोपादानमेषां जीवानामिति तन्मतम् ॥
भर्तृप्रपञ्चादयोऽन्ये ब्रह्मावस्थात्मवादिनः ।
तत्र केचिदभिव्यक्तिवादिनः शक्तिवेदिनः ॥
विकारा ब्रह्मणः जीवा इति कैश्चिदुपेयते ।
उत्पत्तिरप्यभिव्यक्तिः विकृतिर्वाऽप्यवस्थितिः ॥
परिणामस्ततस्सर्वे ख्याता वैनाशिका इति ।
सर्वेऽप्याश्रयनाशेन क्लेशप्रध्वंसवादिनः ॥
वैकासिकाः परे सर्वे प्रायो वैयासिका इमे ।
परिच्छेदकनाशेन ह्यपरिच्छेदवादिनः ॥

4 एवं मोक्षविकल्पेन द्विविधा ज्ञायते गतिः ।
स्वरूपोच्छित्तिरूपैकोपाध्युच्छित्तिरनन्तरा ॥

उपाध्युच्छित्तिपक्षेऽपि विभागो मुख्यतस्त्वसौ ।
स्वसंवेदनशाहित्यसाहित्याभ्यां द्विधा मतः ॥
स्वस्वरूपोच्छित्तिपक्षसंविद्राहितपक्षयोः ।
विशेषः फलतो नैव वक्तुं शक्यमितीतरे ॥
सुखसंवित्त्यभिव्यक्तिं कैवल्येऽप्यनुजानते ।
श्रुतिन्यायानुरोधेन तात्पर्यं पर्यवस्यति ॥
अतस्स्वतन्त्रः श्रौतोऽन्यः पक्षो नास्तीति यौक्तिकाः
तस्मान्मध्यस्थचिन्तायां सम्प्रदायः परा गतिः ॥
संस्कारः सुदृढस्सोऽयं पारंपर्यव्यवस्थितः ।
संप्रदायः यतः श्रद्धाविद्याकर्ममयः पुमान् ॥
5 येयं सुषुप्त्यवस्थैषा सर्वचेतनसाक्षिता ।
तामुदाहरणं मुक्तेस्सर्वे दार्शनिका विदुः ॥
बृहदारण्यके याज्ञवल्क्यो जनकभूपतेः ।
मोक्षोपलक्षणामेतामाह षष्ठप्रपाठके ॥
भाष्येऽपि पाक्षिले सैषा दशैवानूदिता तथा ।
यथा सुप्तस्य च स्वप्नादर्शने क्लेशसंक्षयः ॥
तथाऽपवर्गे रागानुबन्धो विच्छिद्यते तराम् ।
तस्यामपि दशायां ये विकल्पास्तान्निबोधत ॥
आत्मप्रध्वंसवादा ये तेषां निर्वाणलक्षणा ।
मुक्तिरात्यन्तिकी सैषा या महासुप्तिरुच्यते ॥

आत्मनित्यत्ववादा ये तेषां कैवल्यलक्षणा ।
मुक्तिरेतादृगेवेष्टा सुखदुःखविवर्जिता ॥
एतां च केचिदत्यन्तसुखरूपां विजानते ।
केचिदल्पसुखां केचिदभावालम्बनां विदुः ॥
केचिन्मोहमयीं प्राहुरात्मनोऽस्फुरणात्मिकाम् ।
दृष्टान्तेऽपि विवादश्चेत्कथं दार्ष्टान्तिकस्थितिः ॥
6 यैषाऽऽनन्दस्य मीमांसा मानुषानन्दपूर्विका ।
विकासरूपा सा सर्वलोककामाप्तिलक्षणा ॥
एते वैकासिकाः ख्याताः प्रायो वैनाशिकाः परे ।
ते निवृत्तिपराकाष्ठानिष्ठा इति विनिर्णयः ॥
ये प्रवृत्तिपराकाष्ठानिष्ठास्ते उभये समाः ।
भावाभावस्वभावस्य फलयोराविशेषतः ॥
या संकोचनिवृत्तिस्स विकास इति गीयते ।
यैवावृतिनिवृत्तिस्स प्रकाश इति कथ्यते ॥
सर्वदा गमनं यच्च सर्वदा स्थितिरेव सा ।
सर्वत्र गमनं यच्च सर्वत्र व्याप्तिरेव सा ॥
पराप्रकाश्यता यैव सैव स्यात्स्वप्रकाशता ।
अस्तमेतैव सविता चोदेता कस्यचिद्भवेत् ॥
तथा सर्वपरित्यागस्सर्वसंग्रहणात्मकः ।
सर्वत्र रागस्सर्वत्र वैराग्यं चोभयं समम् ॥

सर्वज्ञता सर्वशक्तिः जडता तुच्छताऽपिवा ।
तथैव सर्वतोमुक्तिस्सर्वप्राप्तिरितीर्यते ॥
अपोहदृष्टयः केचित्केचिदन्वयदृष्टयः ।
श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धस्स एव सः ॥
नैरात्म्यमेव सार्वात्म्यं इति तत्त्वविदो विदुः ।
एष कश्चित्सर्वसमरसभावाविनिर्णयः ॥

(110) मुक्तात्मविकल्पः.

1 आत्मनः खलु वै मोक्षोऽथात्मचिन्ता प्रवर्तते ।
आत्मतत्त्वानुसारेण मोक्षतत्त्वं विभिद्यते ॥
तथाच लोकायातिकाः परलोकापवादिनः ।
चैतन्यखचितात्कायान्नात्माऽन्योऽस्तीति मन्वते ॥

2 अथो तथागताः प्राहुः किं पुंसा कल्पितेन वा ।
ज्ञानमात्रेण सर्वोऽपि व्यवहारोऽवकल्पते ॥
ज्ञानस्यैव प्रभेदोऽयमिच्छाद्वेषसुखादिकः ।
न वस्त्वन्तरमित्येवं न ततोऽन्यप्रकल्पनम् ॥
गुणत्वमपि नास्त्यस्य यतोऽधिष्ठानकल्पना ।
न गुणव्यतिरिक्तश्च गुणी नामास्ति कश्चन ॥
तद्विज्ञानस्कन्ध एषः क्षणिकश्च ध्रुवान्तकः ।
कर्तृभोक्तृप्रत्यभिज्ञाव्यवस्था वासनानुगा ॥

ज्ञानसंततिरुच्छिन्ना शून्यताऽद्वयलक्षणा ।
मुक्तात्मेति विदुः केचित् परे तां शुद्धलक्षणाम् ॥

3 केवलं चापि कूटस्थं पुरुषं कापिला विदुः ।
चैतन्यं चेतनश्चासावभेदो धर्मधर्मिणोः ॥
न कर्तृताभोक्तृताद्याश्चितस्स्वाभाविका गुणाः ।
असंसर्गाग्रहाद्बुद्धिवृत्तयोऽध्यासगोचराः ॥
परेतु सांख्याः पुरुषे भोक्तृतामनुजानते ।
चिद्रूपेण विकारोऽसौ स्यात्सजातीयलक्षणः ॥
यस्मिन् विक्रियमाणेऽपि तदेवेदमिति प्रमा ।
न विहन्येत तन्नित्यं निर्विकारं च मन्वते ॥

4 चैतन्यदृक्क्रियारूपं तदस्त्यात्मनि सर्वदा ।
तत्सर्वतोमुखं मुक्ताविति पाशुपता विदुः ॥

5 वैशेषिकादयः ज्ञातृकर्तृभोक्तृत्वलक्षणान् ।
गुणानागन्तुकानात्मन्युपयन्तोऽपि नित्यताम् ॥
विभुत्वं निर्विकारत्वमिच्छन्त्युच्छित्त्यसंभवात् ।
न प्रकाशात्मतां नापि स्वप्रकाशात्मतां विदुः ॥

6 कौमारिलादिसिद्धान्ते कर्ता भोक्ता मतः पुमान् ।
ज्ञानशक्तिस्वभावश्च नित्यः सर्वगतः स्वतः ॥
नानित्यशब्दवाच्यत्वमात्मनो विनिवार्यते ।
विक्रियामात्रवाचित्वे न ह्युच्छेदोऽस्य तावता ॥

स्यातामत्यन्तनाशेऽस्य कृतनाशाकृतागमौ ।
न त्ववस्थान्तरप्राप्तौ लोके बाल्युवादिवत् ॥
विक्रियात्मस्वभावोऽपि व्यावृत्त्यनुगमात्मकः ।
पुरुषोऽभ्युपगन्तव्यः कुण्डलादिषु सर्पवत् ॥
सर्वावाप्तिसमर्थश्च प्रकृत्याऽऽत्मा सदेष्यते ।
कश्चित्तु प्रतिबन्धोऽस्य कर्मभिस्सोऽपनीयते ॥

7 विशुद्धाद्वैतिनोऽविद्यावशात्सर्वस्य संगतेः ।
विद्यया तन्निवृत्तेश्च कौटस्थ्यं प्रतिपेदिरे ॥
ज्ञातृज्ञानज्ञेयभेददर्शनं दोषबन्धनम् ।
दोषहानौ सदद्वैतं आनन्दमजरामरम् ॥

8 विशिष्टाद्वैतिनो धर्मभूतज्ञानगतं विदुः ।
विकारजातमात्मानं निर्विकारं प्रचक्षते ॥
तदेवं चित्स्वभावस्य पुंसः स्वाभाविकी चितिः ।
तत्तत्पदार्थसंसर्गात्तत्तद्वित्तित्वमश्नुते ॥
स विकारः कर्ममूलः तस्मादौपाधिकस्तु सः ।
स्वाभाविको मोक्षदशाविकासः न स दुष्यति ॥
ज्ञानात्मको ज्ञानधर्मा शेषतैकरसः पुमान् ।
निरञ्जनस्तु परमं साधर्म्यमुपगच्छति ॥

9 विशुद्धद्वैतिनः कर्तृभोक्तृत्वप्रमुखान् गुणान् ।
रूपगन्धरसस्पर्शप्रभृतींश्चात्मनो विदुः ॥

सर्वे स्वरूपभूताः स्युः ते यावद्द्रव्यभाविनः ।
अन्तःकरणधर्मांश्च ज्ञानादीन् सांख्यरीतितः ॥
विदुस्स्वरूपातिरिक्तान् सुखादीन् साक्षिगोचरान् ।
सर्वेऽप्यौपाधिकाः कर्मनाशे नश्यन्ति केवलम् ॥
सांशोऽपि सविकारोऽपि साकारोऽपि परस्परम् ।
विलक्षणोऽपि जीवात्मा नित्य एवेति निर्णयः ॥

10 द्रव्यात्मा निर्विकारस्स्यात् पर्यायात्मा विकार्यपि ।
नातो विरोध इत्याहुर्भेदाभेदविशारदाः ॥
सत्योपाध्युपधानेन कर्तृभोक्त्रादिलक्षणः ।
पुरुषो भास्करमते निर्विकारः स्वतः पुमान् ॥

11 स्याद्वादिनो विकारित्वं सांशत्वं द्रव्यतां तथा ।
पर्यायत्वं च मूर्तत्वं परिच्छिन्नत्वमेवच ॥
अनादित्वमनन्तत्वं आत्मरूपं प्रचक्षते ।
आनन्दरूपं सार्वज्ञ्यं स्वातन्त्र्यं सदनुग्रहम् ॥

12 अविद्ययोपाधिना वा शक्त्या धर्मेण वा पुनः ।
स्याद्वादाद्वा वासनया विरोधाभावसंग्रहः ॥

13 चतुर्विधाः पुरा प्रोक्ताः ह्यात्मानित्यत्ववादिनः ।
चतुर्ष्वपि मतेष्वेतान् क्रमाद्दोषान् विदुः परे ॥
आद्ये मते त्वैहिकार्थप्रवृत्तिर्दुर्घटा भवेत् ।
देहान्तत्वे विश्ववृत्तिर्धर्म्ये पथि न सिद्ध्यति ॥

आकल्पस्थायिपक्षे तु मोक्षशास्त्रं हि निष्फलम् ।
आमोक्षस्थायितायां तु मोक्षस्य न पुमर्थता ॥
तस्माच्चतुर्विधैरेष पुरुषार्थैर्यथायथम् ।
समन्वयं प्राप्तुमर्हः स्वीकर्तव्य इति स्थितम् ॥
मद्विनाशात्फलं न स्यात् मत्तोऽन्यस्याथवा भवेत् ।
इति नैव प्रवृत्तिस्स्यात् आत्मानश्चेद्विनाशिनः ॥
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराट् ।
भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ।
अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥
मयि नष्टेऽपि मत्तोऽन्यस्स्तम्भः कुम्भश्च तिष्ठति ।
इति स्वस्य शिरश्छेदः पुरुषार्थो न कस्यचित् ॥
ननुचात्महनो लोके पुरुषास्सन्ति चेन्न ते ।
विवेकिनः किन्तु मूढाः क्रोधान्धहृदया इति ॥
आत्मानो यद्यनित्यास्स्युः कृतहानाकृतागमौ ।
स्यातामिति मतं तेषामात्मनित्यत्ववादिनाम् ॥
स्योदन्यथा पापपुण्यविप्लवश्शास्त्रविप्लवः ।
प्रपञ्चविप्लवस्तस्मात्सर्वेषामात्मनित्यता ॥
सर्वथा साधनीयेति सर्वशास्त्रार्थसंग्रहः ।
इदमेव ह्यास्तिकत्वं नास्तिकत्वं त्विपर्ययः ॥

(111) कर्मनिवृत्तिवादः.

1 मुक्तिर्हि कर्मणो मोक्षः कर्मतत्त्वं विबुद्ध्यताम् ।
पुण्यं पापमिति द्वेधा लोके कर्म हि विश्रुतम् ॥
पुण्यं विहितजन्यं स्यात् पापं तु प्रतिषिद्धजम् ।
सुखस्य साधनं पुण्यं पापं दुःखस्य साधनम् ॥
इति सामान्यतस्सिद्धं तद्विकल्पोऽवधार्यताम् ।
शाबरा ब्रुवते धर्मं कर्म यागादिलक्षणम् ॥
अपूर्वं कर्मनिर्वर्त्यं वृद्धमीमांसका विदुः ।
प्राभाकरास्तु वाक्यार्थं नियोगं तत्प्रचक्षते ॥
स भावनाविशेषस्स्यादात्मस्थ इति निर्णयः ।
कौमारिलास्तु संस्कारं धर्माधर्मौ पुमाश्रितम् ॥
बुद्धिवृत्तिविशेषो यः तं धर्मं कापिला विदुः ।
धर्मत्वेन व्यपदिशन्त्यार्हताः पुण्यपुद्गलान् ॥
आराध्यदेवताप्रीतिं बादरायणवर्त्मगाः ।
आचक्षते धर्मगिरा सौगताश्चित्तवासनाम् ॥

2 इत्थं तत्त्वे विनिर्ज्ञाते धर्माधर्मपदार्थयोः ।
तन्निवृत्तौ विवादोऽयं प्रवृत्तस्त्ववगम्यताम् ॥
नन्वात्मदर्शनं मोक्षहेतुस्स्यादित्यसाम्प्रतम् ।
अनादित्वादनन्तत्वात्कर्मणां संततात्मनाम् ॥
अथ दोषक्षयान्मा भूदुत्तरः कर्मसंग्रहः ।
कथं फलमदत्त्वैव प्रक्तनं कर्म शाम्यति ॥

कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणकम् ।
तथाऽल्पफलदानं च राजपुत्रापराधवत् ॥
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
इत्यादीनि वचांस्यत्र प्रमाणमुपलभ्यते ॥

3 तत्र ये त्वात्मनो नाशं स्वरूपेण विदुर्बुधाः ।
तेषामाश्रयनाशेनाशेषबन्धपरिक्षयः ॥
बन्धश्चित्तगतो येषामात्मा कूटस्थलक्षणः ।
तेषां तु कापिलादीनां चित्तनाशेन मोक्षणम् ॥
दृग्दृश्यभाव एव स्यात्संयोगः पुंप्रधानयोः ।
भोगापवर्गार्थतायां कृतायां तन्न दृश्यते ॥
आविद्यकं कर्म येषामविद्यावादिनां मतम् ।
स्वप्नप्रबोधन्यायेन विद्यायां तत्परिक्षयः ॥
तां विद्यां केचिदिच्छन्ति विबुधा भावनामयीम् ।
साक्षात्कारवतीं केचित् केचिच्चिन्तामयीं बुधाः ॥
केचित् श्रुतिमयीं केचिदाहुर्वाक्यार्थधीमयीम् ।
एवं बहुविधा वादाः मायामभ्युपगच्छताम् ॥

4 कणादमुनिसिद्धान्ते मार्गद्वयमिदं पुनः ।
प्रशस्तपाददेवेन सूचितं भाष्यसागरे ॥
केषांचिद्योगिनां शान्तिसंतोषस्सुखलक्षणः ।
दुःखात्मकं तपश्चैव पुण्यपापफलं त्विति ॥

सौभर्यादिनयाद्वाऽपि नानादेहपरिग्रहात् ।
सर्वं कर्मानुभूयान्ते मुक्तास्स्युरिति केचन ॥
नित्यं नैमित्तिकं कर्म कर्तव्यं ज्ञानिनामपि ।
अनुष्ठानायासमाहुः फलं प्राक्कर्मणां परे ॥
5 नित्यं नैमित्तिकं कर्म प्राक्तनं कर्म नाशयेत् ।
प्रायश्चित्तनयाच्चेति बृहट्टीकाकृतां मतम् ॥
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासाच्च क्वचित् ज्ञानात्कैवल्यं लभते नरः ।
धर्मेणापनुदेत्पापं प्रायश्चित्तेन वा सुधीः ॥
इत्यादीनि वचांस्यत्र प्रमाणानि परश्शतम् ।
प्रतिपद्य विनिर्णीतः मुक्त्यै कर्मपरिक्षयः ॥
6 तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ।
उत्तरप्रचयाभावात् विदुर्मुक्तिं कुमारिलाः ॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ॥
7 सर्वाणि पूर्वकर्माणि संभूयैकं शरीरिणाम् ।
शरीरमारभन्तेऽतः प्रारब्धान्नास्ति संचितम् ॥
स चैकभविकः पक्षः पातञ्जलमताद्दृतः ।
तं नाद्रियन्ते बहवः कर्मशेषवचश्शतैः ॥

8 ज्ञानाग्निना कर्मनाशः वासुदेवस्य सम्मतः ।
नानुयोगस्यात्रकाशः पुमर्थे शास्त्रलक्षणे ॥
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन ।
नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥

9 मिथ्याज्ञानं च दोषाश्च कर्मणस्सहकारिणः ।
तद्वैकल्येन सन्त्येव न फलन्तीति गौतमाः ॥

10 समाराध्योऽपराध्यो वा भगवान् सर्वकर्मणाम् ।
तस्मिन् प्रसन्ने किं साध्यं न भवेदिति सेश्वराः ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

11 एवमाद्यं सुप्रसिद्धमथ वैयासिके मते ।
माहात्म्यं ब्रह्मविद्यायाः फलाध्याये प्रदर्शितम् ॥
अश्लेषश्च विनाशश्च स्यातामुत्तरपूर्वयोः ।
तत्र पूर्वे अनारब्धकार्ये एवेति निर्णयः ॥
भोगेनैव क्षेपणीये प्रारब्धे कर्मणी इति ।
यत् श्रूयते शत्रुमित्रोपायनं कर्मणोरिदम् ॥
समानविषयं ज्ञेयं तदश्लेषविनाशयोः ।
कालभेदस्त्वेतदीयावस्थाभेदनिबन्धनः ॥
अनुग्रहो निग्रहो वा क्रमादेव हि लौकिकः ।
वर्धते क्षीयते तद्वदीश्वरीयोऽप्यलौकिकः ॥

(112) कर्मज्ञानसंबन्धः.

1 एवं कर्मनिवृत्तौ च विकल्पे परिनिष्ठिते ।
ये संबन्धविकल्पास्स्युस्त एते ज्ञानकर्मणोः ॥
कर्मैव केवलं काम्यं केषांचिन्मोक्षसाधनम् ।
कैश्चित्तु नित्यं कर्मैव मोक्षसाधनमिष्यते ॥
स चैकभविकः पक्षः कामकर्म हि जन्मनः ।
कारणं, तदभावे तु मुच्यते हेत्वभावतः ॥
केषां चिन्नित्यमेवैतत् कर्म पापविनाशकम् ।
पापक्षयादेव मुक्तिः अभावो मोक्षकारणम् ॥
कापिलाः ज्ञानमेवैकं मोक्षसाधनमभ्यधुः ।
ज्ञानं कर्म च केषांचिद्धेतुस्समलमुच्चितम् ॥
अनिष्टस्य निवृत्तिश्च तथेष्टप्राप्तिरित्यपि ।
यदि स्यात् द्विदळो मोक्षः द्वितयं साधनं भवेत् ॥
तच्च कर्म ज्ञानमिति क्रमात्साधनमिष्यते ।
इति भेदाभेदवादियादवप्रमुखा विदुः ॥
बृहट्टीकाकृतश्चेति राणके प्रतिपादितम् ।
उपवर्षादयोऽप्येवमितिचाद्वैतिनो विदुः ॥
यद्यनिष्टनिवृत्तिर्वा तथेष्टप्राप्तिरेव वा ।
मोक्षस्यैकप्रकारत्वे साधनं तादृशं भवेत् ॥
मोक्षो निरवधिः प्रीतिः स स्वर्ग इति ये विदुः ।
जरन्मीमांसकास्तेषां साधनं कर्म केवलम् ॥

अज्ञानादिह संसारं ज्ञानान्मोक्षं च ये विदुः ।
सर्वे ज्ञानैकसाध्यं तं मोक्षमाहुर्मनीषिणः ॥
तेषामनिष्टमज्ञानं तन्निवृत्तिरभीप्सिता ।
मोक्षः स्वतस्सिद्ध एव साध्यश्चेन्नश्यति ध्रुवम् ॥
परीक्ष्यलोकानित्यादिवेदान्ते प्रतिपादितम् ।
यामिमां पुष्पितां वाचमित्याद्यायां स्मृतावपि ॥
2 ज्ञानस्य चाङ्गं कर्मेति कर्मणोऽङ्गं च धीरिति ।
तत्रापि च विशेषांशः एषोऽयमवधार्यताम् ॥
कर्म ज्ञानं द्वयं चापि स्यादारात्सन्निपत्य च ।
क्रमादङ्गमिति प्राहोदयनः किरणावळौ ॥
ज्ञानाङ्गकं च कर्मैव केषांचित् मोक्षसाधनम् ।
क्रत्वङ्गकर्तृसंस्कारो ज्ञानमित्यपरं मतम् ॥
कर्माधिकारसिद्ध्यर्थं शरीरान्यस्थिरात्मनः ।
विज्ञानमिति केषांचिन्मतं ज्ञानाङ्गवादिनाम् ॥
भविष्यद्देहसंबन्धी वाक्यादात्मा न चेन्मितः ।
मानान्तराच्च कः कुर्याददृष्टार्थाः क्रियास्सुधीः ॥
वेदोपरास्स्युर्वेदान्ता इति केचित्प्रचक्षते ।
ते पुनर्निगमान्तानामुपच्छन्दनवादिनः ॥
शेषत्वादिति सूत्रेण सर्वमेतद्विवक्षितम् ।
कर्माङ्गकं ज्ञानमेव मोक्षहेतुं विदुः परे ॥

तत्रारादुपकाराङ्गं भास्करादिमतं विदुः ।
सन्निपत्योपकाराङ्गं प्राहू रामानुजादयः ॥
आरादेवोपकुर्वन्ति क्रियाश्चित्तविशुद्धितः ।
इति सौरेश्वरं वाक्यं श्रुतं संबन्धवार्तिके ॥
कर्मणां कामविलयद्वारा धीशेषतोदिता ।
स कामध्वंससिद्धान्तः प्रायः कापिलसंमतः ॥
प्रपञ्चविलयद्वारा धीशेषत्वं विदुः परे ।
काण्डद्वयाविरोधाय नानामार्गविकल्पना ॥
3 तमेतमिति शास्त्रेण वेदनाकामनार्थता ।
कर्मणामिति भामत्याचार्यसिद्धान्तपद्धतिः ॥
अथ स्याद्वेदनेच्छायां यज्ञानुष्ठानमिष्यते ।
अनुष्ठानाद्वेदनेच्छेत्यन्योन्याश्रयतेति चेत् ॥
इच्छा हि द्विविधा काचिद्विषयौन्मुख्यलक्षणा ।
उत्कटा रुचिरन्या स्यात् बुभुक्षादिषु दृश्यते ॥
अन्नद्वेषात्कृशो लोके तदौन्मुख्याच्चिकित्सने ।
प्रवर्ततेऽथ तद्रुच्या भोजनेऽपि प्रवर्तते ॥
येऽप्यत्र वेदनार्थत्वमाहुर्विवरणानुगाः ।
तैर्ज्ञानकामनान्तैव कर्मानुष्ठितिरिष्यते ॥
इयान्विशेषस्त्वनयोः संग्रहीतृनिरूपितः ।
विद्योत्पत्तेरानियमनियमाविति हि क्रमात् ॥

आद्यो विविदिषार्थस्स्यात् संस्कारार्थोऽपरो मतः।
स एव सान्निपत्योपकाराङ्गमिति कीर्त्यते ॥
सर्वज्ञात्ममुनिः कर्म काम्यमित्यपि मन्यते ।
नित्यमेवेति बहवः काम्यविद्वेषिणो हि ते ॥
विशिष्टाद्वैतसिद्धान्ते सिद्धान्ते द्वैतिनामपि ।
भास्कराणामपि तथा भेदाभेदविदामपि ॥
जरन्मायाविदां ध्याननियोगविदुषामपि ।
आप्रयाणं चाहरहः कर्मकर्तव्यतेष्यते ॥
तदेतत्सान्निपत्योपकाराङ्गे पर्यवस्यति ।
तत्त्वं करणनिष्पत्तिसाधनत्वात्मकं यतः ॥
तत्र भास्करसिद्धान्ते कर्मारादुपकारकम् ।
निष्पन्नं करणं यत्तु तस्य स्यात्सहकार्यदः ॥
फलोत्पत्ताविति ततश्चादृष्टद्वारकं तु तत् ।
तत्समुच्चयपक्षस्तु बृहट्टीकाकृता मतः ॥
तथा यादवभाष्येऽपि साध्यद्विदळशालिनि ।
नैयायिकादिसिद्धान्तोऽप्येतं पन्थानमाश्रितः ॥
परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ।
इत्यादिवचनं तत्त्वचिन्तामण्यादिषु स्फुटम् ॥
4 जरन्मायाविदश्चापि द्विविधाः परिकीर्तिताः ।
भर्तृप्रपञ्चादयः स्युस्ते प्राय इति निर्णयः ॥

एके ध्याननियोगस्य वादिनस्तत्र कीर्तिताः ।
निष्प्रपञ्चीकृतेरेव नियोगमपरे विदुः ॥
वेदान्तवाक्यं न परिनिष्पन्नब्रह्मगोचरम् ।
तथापि सिद्ध्यति ब्रह्म तद्ध्यानविधिशक्तितः ॥
तत्र ध्याननियोगेन तत्साक्षात्कारमार्गतः ।
अद्वितीयब्रह्मभावरूपो मोक्षः फलिष्यति ॥
5 निष्प्रपञ्चनियोगस्य वादिनामयमाशयः ।
यद्यप्युपनिषद्वाक्यं कार्यवस्त्वेकगोचरम् ॥
निष्प्रपञ्चं ब्रह्मवस्तु विशिष्टं साध्यमेव तत् ।
प्रपञ्चविलयद्वारा कार्यताऽस्योपपद्यते ॥
न दृष्टेरित्यादिवाक्यं विधिस्तत्र निदर्श्यते ।
निष्प्रपञ्चं ब्रह्म कुर्यात्सप्रपञ्चतया मतम् ॥
सर्वं नियोगनिष्पत्तिपर्यन्तं कर्मलक्षणम् ।
तत्राराादुपकाराङ्गं स्वीकुर्वन्तीति च स्थितम् ॥
6 सर्वः कर्मविधिः कैश्चित्स्वतन्त्रैर्ब्रह्मवादिभिः ।
आत्मविज्ञानाधिकारप्रयोजन इतीरितः ॥
तेषामाशयसारोऽयं ग्राह्यो विधिविवेकतः ।
स्वभावतस्तु पुरुषाः रागाद्याविष्टमानसाः ॥
विषयोपार्जने सक्ताः दृष्टोपायफलैः सदा ।
व्याक्षिप्तमानसा नालमात्मानमिह वेदितुम् ॥

उपदिष्ट मपिप्राज्ञैः परिभावयितुं कुतः ।
तस्मात्कर्मोपदेशाद्यैरनुशिष्टोऽष्टवर्षकः ॥
कर्मपद्धतिनिर्बद्धः स्वाभाविकपथाच्च्युत[illegible]ः ॥
उपदिष्टं चात्मतत्त्वं ग्रहीतुं ध्यातुमर्हति [illegible]भेः ।
तस्मात्कर्मविधिस्सर्वः प्रलोभः परमा[illegible] ॥
आत्मविज्ञानाधिकारसिद्ध्यर्थ इति नि[illegible]ामयाः ।
एष प्रच्छन्नचार्वाकमतसारांश इत्यपि ।
प्रदूषितः ब्रह्मकर्मवेदिभिः क्रान्तदर्शिभिः ॥

7 कामप्रध्वंससिद्धान्तः यः पूर्वोत्तरकाण्डयोः ।
विरोधपरिहाराय जरन्मायाविदां मतः ॥
निमित्तवादे प्राचीने प्रायशः पर्यवस्यति ।
फलसंयोगवादे तु काम एवाभिवर्धते ॥
स्वर्गकामो यजेतेति निमित्तं कामना मता ;
परस्वकामुकः प्रायश्चित्तं कुर्याद्यथा तथा ॥
धनधान्यसमृद्धिस्तु यदा पुंसां भविष्यति ।
तदा सुखेच्छा भवति तच्छान्त्यै यागशासनम् ॥
यागे च सर्वद्रव्याणि व्ययितानि भवन्ति हि ।
अतएव त्रिवर्षान्नैर्यष्टव्यामिति शिष्यते ॥
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यतृप्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥

त्रैवार्षिकाधिकान्नो यः स हि सोमं पिबेद्द्विजः ।
योऽनाहिताग्निश्शतगुः अयज्वा च सहस्रगुः ॥
वेदाग्नेरपि कुटुम्बाभ्यामाहरेदविचारयन् ।
तथापिं याज्ञवल्कीयं दृश्यते हि वचस्त्विदम् ॥
तत्र ध्वस्तपरता चैषा श्रुतिस्वारस्यशालिनी ।
अद्वितीत्परतायां तु कामना स्वरसा भवेत् ॥
8 द्रष्टव्योऽस्य न्यायरत्नमालायां विस्तरः कृतः ।
निमित्तवादिनः सर्वं कर्म नैमित्तिकं विदुः ॥
केचित्तु सकलं कर्म विदुः काम्यमितीरितम् ।
नित्यमेवेत्याहुरेके निषिद्धमपरे विदुः ॥
नित्यं नैमित्तिकं काम्यं निषिद्धं चेति कर्म तत् ।
चतुर्धा व्यभजन् धीराः जैमिनिप्रमुखाः परे ॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ॥
इति कौमारिलाः प्राहुः काम्यमेकेऽनुजानते ।
निषिद्धवर्जितं सर्वं फलसङ्गविवर्जितम् ॥
चित्तस्य शुद्धयर्थमिष्टं शुद्धौ त्याज्यं विदुस्ततः ।
जातायां वेदनेच्छायामधिकारो निवर्तते ॥
अधिकारिविभेदेन वेदप्रामाण्यरक्षणम् ।
कूटकार्षापणन्यायात् कैश्चित् तन्नानुमन्यते ॥

(113) मोक्षसाधनम्.

1 लोकायतमते देहविच्छेदे मोक्षलक्षणे ।
स्वभावस्साधनं यस्मात्ते ह्याकस्मिकताविदः ॥
आत्मानं पूजयेन्नित्यं भूषणाच्छादनादिभिः ।
स्वदेह एव दैवं स्यादन्यद्दैवं न विद्यते ॥
देवादिपदवाच्यास्स्युः प्रतिमा मृच्छिलामयाः ।
अतएवहि देवास्स्युरमरा निर्जरा अपि ॥
अस्वप्ना नित्यतृप्ताश्च नाश्नन्ति न पिबन्त्यपि ।
अपुत्राश्चाप्यनिमिषाः त्रिदशा अपि विश्रुताः ॥
देवालयः स्थानमपि सदा सुमनसश्च ते ।
महान् चतुर्भुजादिस्स्याद्विग्रहः परमेश्वरः ॥
तथैव लौकिको राजा परमेश्वर उच्यते ।
तस्यानुवर्तनं कार्यं उत्तमां भूतिमिच्छता ॥
अरोगदृढगात्रत्वं सुखस्योत्तमकारणम् ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥
इति चार्वाकसिद्धान्तः प्रत्यक्षस्सार्वलौकिकः ।
अथार्हतानां सिद्धान्ते मोक्षसाधनसंग्रहः ॥

2 सम्यग्दर्शनचारित्रश्रद्धानं मोक्षसाधनम् ।
इत्यर्हदुक्तिसंक्षेपपरमागमसंग्रहः ॥
यथाऽवस्थिततत्त्वानां संक्षेपाद्विस्तरेण वा ।
योऽवबोधस्तमत्राहुः सम्यज्ज्ञानं मनीषिणः ॥

सर्वथाऽवद्ययोगानां त्यागश्चारित्रमुच्यते ।
कीर्तितं तदहिंसादिव्रतभेदेन पञ्चधा ॥
रुचिर्जिनोक्ततत्त्वेषु सम्यक्श्रद्धानमुच्यते ।
जीवात्मानस्तु सहजचिद्रूपपरिणामिनः ॥
स्वरूपस्फुरणं सर्वेऽप्यजाड्यं प्रायशो विदुः ।
परिणामि भवेत् ज्योतिः पौरुषं विषयांस्पृशत् ॥
रूपादिज्ञानरूपेण स चास्रव इतीर्यते ।
आस्रवस्य निरोधो यः संवरो गुप्तिलक्षणः ॥
आस्रवस्स्रोतसो द्वारं संवृणोतीति संवरः ।
आस्रवो भवहेतुस्स्यात् संवरो मोक्षकारणम् ॥
लुञ्छिताः पिञ्छिकाहस्ताः पाणिपात्रा दिगम्बराः ।
श्वेताम्बराः क्षमाशीलाः निस्सङ्गाः भैक्षभोजिनः॥
एवंरूपाः कायशोषनिरता जैनसाधवः ।
अद्यापि न निवर्तन्ते त्वलोकाकाशमागताः ॥
ज्ञानं तपःप्रधानं स्यादेतेषां मोक्षसाधनम् ।
प्रायेण भौतिको बन्धः तपसैव हि शुद्ध्यति ॥
3 तथा माहेश्वरे तन्त्रे मोक्षमार्गो निरूपितः ।
चतुर्विधा हि ते सिद्धचर्यामार्गानुसारिणः ॥
यथा कापालिकाः कालामुखाः पाशुपतास्तथा ।
शैवास्तत्रच कापालं मतमेवं प्रचक्षते ॥

मुद्रिकाषट्कविज्ञानात् पुनस्तस्यैव धारणात् ।
अपवर्गफलप्राप्तिर्न ब्रह्मावगमादिति ॥
मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ॥
कर्णिकां रुचकं चैव कुण्डलं च शिखामणिम् ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥
कपालमथ खट्वाङ्गमुपमुद्रे प्रकीर्तिते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते ॥
4 गीतशास्त्रं मोक्षहेतुरित्यप्याहुर्मुनीश्वराः ।
याज्ञवल्क्यादयस्तत्र वचनं त्ववधार्यताम् ॥
अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम् ।
ध्येय आत्मा स्थितो योऽसौ हृदये दीपवत्प्रभुः ॥
यथाविधानेन पठन् सामगानमविच्युतम् ।
सावधानस्तदभ्यासात्परं ब्रह्माधिगच्छति ॥
अपरान्तकमुल्लोप्यं मद्रकं प्रकरीं तथा ।
औवेणुकं सरोबिन्दुमुत्तरं गीतकानि च ॥
ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ।
गेयमेतत्तदभ्यासकरणान्मोक्षसंज्ञितम् ॥
वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥

गीतज्ञो यदि योगेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥
इमं सिद्धान्तमालम्ब्य नृत्तगीतैरलंकृतम् ।
इति पाराशरं वाक्यं व्याख्यातं माधवैर्यथा ॥
मुमुक्षवो हि यक्षाद्याः नृत्तगीतादिभिः पुनः ।
ईश्वरं भजमानाश्च यत्र तिष्ठन्ति चाश्रमे ॥
इत्यतो गीतिशास्त्रं हि चित्तैकाग्र्यं च साधयत् ।
अनायासेन मोक्षस्य मार्ग इत्यृषयो विदुः ॥
5 अथ सौगतसिद्धान्ते मोक्षसाधनमुच्यते ।
आत्मनो नित्यतायां तु नैवास्थायाः परिक्षयः ॥
दुःखं स्वलक्षणं शून्यं सकलं क्षणिकं जगत् ।
एवं भावयतः तत्त्वसाक्षात्कारोदयः स्वयम् ॥
अनुकूलं चानुगतं सत्यं स्थिरमिति भ्रमाः ।
निरुक्तभावनानाश्याः भवबन्धस्य हेतवः ॥
सोऽयं विमलविज्ञानमहोदय इतीर्यते ।
रागादिज्ञानसंतानवासनोच्छेदसंभवा ॥
तदवान्तरभेदाश्च मोक्षतत्त्वे निरूपिताः ।
मोक्षभेदानुगुण्येन तत्साधनविकल्पना ॥
कृत्तिः कमण्डलुः मौण्ड्यं चीरं पूर्वाह्णभोजनम् ।
सङ्घो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः ॥

अज्ञानादिह संसारः ज्ञानादेव परिक्षयः ।
प्रधानसाधनं मोक्षे ज्ञानमेते प्रचक्षते ॥
तत्तु साक्षात्काररूपमित्यत्र न विकल्पना ।
बन्धस्य कारणं यस्मात्साक्षात्कारात्मको भ्रमः ॥

6 तत्सत्त्वपुरुषान्यत्वख्यातिस्स्यादिति कापिलाः ।
ईश्वरप्रणिधानं वा तत्तु पातञ्जला विदुः ॥
स तत्त्वनिर्णय इति गम्भीरन्यायवेदिनः ।
ईश्वरोपासनं वा स्यात्साहृद्ययादिति केचन ॥
तत्त्वदृष्टिर्मुक्तिहेतुस्स्यान्निरीश्वरवादिनाम् ।
तत्त्वधीमूलकोपास्तिः स्वतन्त्रेश्वरवादिनाम् ॥

7 अविद्यया तु संसारो विद्यया मोक्षसंभवः ।
इति सामान्यतस्सिद्धेऽप्यत्र सूक्ष्मं विदुर्विदः ॥
तत्त्वनिर्णयमात्रेण नाविद्या विनिवर्तते ।
अविद्ययेश्वरस्याज्ञामातिवर्त्य प्रवर्तनात् ॥
तन्निग्रहोपशान्त्यर्थं तदुपासनमिष्यते ।
तस्यैव साधनं तत्त्वनिर्णयो न तु मुक्तये ॥

8 सामान्यतस्तत्करणविकल्पोऽत्र विविच्यते ।
प्रसंख्यानं विदुः केचित्प्रत्ययाभ्यासलक्षणम् ॥
तच्च ध्यानं भावना सा सैवोपास्तिः ध्रुवा स्मृतिः।
प्रसंख्यानेन सहितं मन एवेति के चन ॥

वाक्यमेवापरोक्षस्य करणं केचिदब्रुवन् ।
तत्र ध्यानापूर्वयुक्तं वाक्यं केचन मन्वते ॥
ध्यानयुक्तं वाक्यमेव नापूर्वमिति केचन ।
विषयस्यापरोक्षत्वात्तादृग्वाद इतीतरे ॥
भावनायाः प्रकर्षेण परे ध्यानं तु तादृशम् ।
वैशद्यातिशयात्साक्षात्कारवाग्गोचरं विदुः ॥
अन्ये तु तद्दिव्यदृष्टिलाभात्साक्षात्कृतिं विदुः ।
श्रवणं मननं ध्यानमथ दर्शनमेववा ॥
अधिकारानुरोधेन विकल्प इति यादवाः ।
अतश्श्रुतिमयी चिन्तामयी वा भावनामयी ॥
साक्षात्कारवती चेति प्रतिपत्तिर्विकल्पिता ।
कथेयं महती सर्वशास्त्रेष्वस्यास्ति विस्तरः ॥
९ मोक्षस्य साधनं सर्वसम्मतं तत्त्वदर्शनम् ।
तत्तत्त्वदर्शनं यावदात्मभावीति ये विदुः ॥
ते सन्तु ये तु तस्यापि ज्ञानस्योपशमं विदुः ।
तेषां मतविकल्पोऽयं संक्षेपादवधार्यताम् ॥
यथाच कातको रेणुः यथा दग्धायसोदकम् ।
यथावा दग्धदहनः त्रिवृत्पानं यथाऽपिवा ॥
यथाच कनकारूढं रजतं कल्मषापहम् ।
स्वयं निवर्तते तद्वत् ज्ञानशान्तिं विदुर्बुधाः ॥

अन्ये तु ब्रह्मविज्ञानमज्ञानस्य निवर्तकम् ।
उपादानविनाशेन प्रपञ्चोऽपि विनश्यति ॥
ब्रह्मज्ञानं तदन्तःस्थं तत एव विनश्यति ।
साक्षात्पारंपर्यतो वा मिथ्यात्वं ज्ञानबाध्यता ॥
वेदान्तवाक्यजनितं नियमादृष्टसंयुतम् ।
ब्रह्मज्ञानं तदज्ञाननिवर्तकमितीतरे ॥
अन्यैस्तु तत्त्वमस्यादिवाक्यजात्मैक्यशेमुषी ।
बाधते भेदविषयं मूलाज्ञानमितीर्यते ॥
प्रकाशनाश्यं ह्यज्ञानं जडरूपान्न नश्यति ।
इतीतरे तदारूढचैतन्यान्नाशमभ्यधुः ॥
तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिः तृणं दहेत् ।
सूर्यकान्तमुपारुह्य तन्न्यायं योजयन्त्यपि ॥
10 जातेऽपि ब्रह्मविज्ञाने प्रतिभासोऽनुवर्तते ।
अविद्योपादानलेशात् जीवन्मुक्तिस्ततः स्मृता ॥
तत्र लेशपदार्थस्तु बुधैरेवं विकल्प्यते ।
विक्षेपशक्तेरंशोऽयमिति केचित्प्रचक्षते ॥
अविद्यासंस्कार इति परे लशुनगन्धवत् ।
दग्धवस्त्रनयान्मूलाविद्यैवेत्यपरे विदुः ॥
सर्वज्ञात्ममुनिर्जीवन्मुक्तिपक्षं निषेधति ।
स्याच्चेज्जीवन्मुक्तिशास्त्रं अर्थवादो भवेदपि ॥

श्रवणादिविधेरेवेत्याशयं वर्णयत्यसौ ।
अथाविद्यानिवृत्त्यंशे विकल्पोऽप्यवधार्यताम् ॥

11 अविद्याया निवृत्तिस्तु ब्रह्मेति ब्रह्मसिद्धिकृत् ।
आनन्दबोधाचार्यास्तु ब्रह्मान्येति प्रचक्षते ॥

न सन्नासन्न सदसन्नानिर्वाच्यश्च तत्क्षयः ।
यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपदन् ॥

न सती साऽद्वैतहानेः नासती ख्यातिसंभवात् ।
विरोधान्नोभयात्मेयं नानिर्वाच्याऽनवस्थितेः ॥

उक्तप्रकारोत्तीर्णेयं अवस्था पञ्चमी मता ।
चतुष्कोटिविनिर्मुक्तशून्यतत्त्वविलक्षणा ॥

अविद्यां विश्वजननीमर्धपञ्चमरूपिणीम् ।
निवृत्तिपञ्चमाकारां कल्पयन्ति विपश्चितः ॥

अद्वैतविद्याचार्यास्तु साऽनिर्वाच्येति मन्वते ।
सच भावविकारोऽन्यः क्षणिकः नानुवर्तते ॥

प्रथमक्षणसंबन्धो यथोत्पत्तिः तथैव सा ।
चरमक्षणसंबन्धः क्षणिकः नानुवर्तते ॥

12 जीवैक्यपक्षे मुक्तिस्तु शुद्धब्रह्मैकरूपता ।
अनेकजीववादेऽपि प्रतिबिम्बो यदीश्वरः ॥

मुक्तस्य शुद्धचैतन्यरूपैवावस्थातिर्मता ।
ईश्वरो यदि बिम्बात्मा प्रतिबिम्बः पुमान्यदि ॥

उभयानुगतं शुद्धचैतन्यमिति सिद्ध्यति ।
तदा यावत्सर्वमुक्ति चितिमात्राविरोधि यत् ॥
बद्धान्तराज्ञानकृतमैश्वर्यं निरवग्रहम् ।
गुणाष्टकं च निरतिशयानन्दप्रकाशनम् ॥
तैर्युक्ता निस्सन्धिबन्धेश्वरतापत्तिलक्षणा ।
मुक्तिस्संपद्यत इति सूत्रभाष्यादिसम्मता ॥
सैषा विशुद्धचिन्मात्रभावेऽन्ते पर्यवस्यति ।
इत्यद्वैतमते सूक्ष्मविचारोऽन्यत्र विस्तृतः ॥

(114) भक्तिः.

1 विशिष्टाद्वैतसिद्धान्ते नारायणकटाक्षतः ।
विनश्यत्यखिलं कर्माविद्यानिग्रहलक्षणम् ॥
वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवास्मृतौ ।
सा च दृष्टित्वमभ्येति दृष्टिः भक्तित्वमृच्छति ॥
स्मृतिसन्ततिधारेयं ध्यानमित्यभिधीयते ;
विजातीयप्रत्ययाव्यवहिता सा ध्रुवा स्मृतिः ॥
तैलादिधारावदविच्छिन्ना सन्ततिरेव सा ।
सा दर्शनसमाकारा दृष्टिरित्यभिधीयते ॥
वैशद्यातिशयश्चैषः भवेदाकारशब्दितः ।
एवंरीत्युपचारस्य निदानं स्यादिदं यथा ॥

शास्त्रैकसमधीगम्यं ब्रह्मौपनिषदं मतम् ।
अतश्च शास्त्रयोनीति संरम्भेण निरूपितम् ॥
तदन्तःकरणाध्यक्षवेद्यत्वे हि विरुध्यते ।
भावनाबलजाध्यक्षवेद्यत्वेऽपि तथैव हि ॥
अतः प्रत्यक्षशब्दस्स्यात्समानाकारगोचरः ।
वृक्षेवृक्षे च पश्यामीत्यादिभूरिप्रयोगतः ॥
2 सा स्मर्यमाणस्यात्यर्थप्रियत्वेन स्वयं तथा ।
अत्यर्थप्रीतिरूपत्वमापन्ना भक्तिरुच्यते ॥
भज इत्येष धातुर्वै सेवायां परिकीर्तितः ।
तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसा ॥
इति बोधायनवचः प्रस्पष्टं समुदाहृतम् ।
प्रकाशिकादीपिकयोः श्रीसुदर्शनसूरिभिः ॥
प्रीतिरूपमनुध्यानं भक्तिरित्यभिधीयते ।
भक्तिस्सेवोपास्तिरिति यास्कोऽपि निरघण्टयत् ॥
परभक्तिः परं ज्ञानं परमा भक्तिरित्यपि ।
पर्वक्रमेणोपचितं विज्ञानं मुक्तिसाधनम् ॥
साक्षात्कृतस्यानुभवाभिनिवेशस्तु सा परा ।
या फलस्याव्यवहितपूर्वावस्थेति कीर्त्यते ॥
तत्संबन्धाद्भक्तिशब्दः स्तुत्यादावुपचारतः ।
साऽनेकधा सद्दहरभूमविद्यादिभेदतः ॥

अविशिष्टफलत्वेन विकल्पश्च व्यवस्थितः ।
प्रपत्तिरपि च ब्रह्मविद्यैवेदि पुरः स्थितम् ॥
यैवैषा परभक्तिस्स्यात्तदेव परमं सुखम् ।
उपायश्च स एवायमीशानिग्रहशान्तये ॥
ज्ञानस्यैव विकारोऽयमिच्छाद्वेषसुखादिकः ।
अनुकूलतया वेद्यं सर्वं सुखमितीष्यते ॥
कार्यं नियोगश्चापूर्वं धर्मो वेदार्थ इत्यपि ।
यद्वचः सकलं प्राह कृष्णं धर्मं सनातनम् ॥
देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसंपदा ।
इति वामनकाव्यालंकारसूत्रेऽप्यनूदितम् ॥
ज्ञानमार्गो भक्तिमार्गः विभिन्नः मोक्षसाधनम् ।
इति सिद्धान्तयोरैक्यं विशिष्टाद्वैतसम्मतम् ॥
3 मोक्षप्रभेदं कैवल्यं केचिदिच्छन्ति सूरयः ।
तत्र स्वात्मानन्दलाभः पुनरावृत्तिवर्जितः ॥
केश्चित्तु कैवल्यभोग्यः स्वात्मा ब्रह्मापृथक्स्थितः ।
विशेषणतया भानमात्रं ब्रह्मण इष्यते ॥
केषांचित्स्वात्मसंतोषः कैवल्यमिति निर्णयः ।
पुनरावृत्तिरस्यास्ति स्थितिः प्रकृतिमण्डले ॥
परिपूर्णपरब्रह्मानुभवे मोक्षलक्षणे ।
प्रभेदं केचिदिच्छन्ति तत्तत्त्वमवधार्यताम् ॥

परब्रह्मोपासनया ये मुक्तास्ते तु केवलम् ।
परिपूर्णपरब्रह्मानुभवैकपरायणाः ॥
कैङ्कर्यलिप्सया ये तु मुक्तास्ते किङ्कराः पुनः ।
परार्थस्वार्थभेदेन द्विविधाः परिनिष्ठिताः ॥
एवं मोक्षे विधाभेदं केचिन्नेच्छन्ति सूरयः ।
कैवल्यनिष्ठया मुक्ताः न मुक्ता इति तैर्मताः ॥
स्वरूपतो मुक्तभेदं द्वैतसिद्धान्तिनो विदुः ।
आनन्दतारतम्येन मुक्तिभेदो व्यवस्थितः ॥
नित्यमुक्तो नित्यबद्धः आर्हतैर्नोपगम्यते ।
आद्यो विशिष्टाद्वैतेष्टः द्वितीयो द्वैतसम्मतः ॥
4 अथ वृत्तिकृतां मार्गं पाञ्चरात्रमतानुगम् ।
समाश्रयन् बुधा एते तत्तत्त्वमवधार्यताम् ॥
द्वापरान्ते वासुदेवः भगवान् स हरिस्स्वयम् ।
अवातरदिति प्रायः सर्वैरभ्युपगम्यते ॥
तस्य संकर्षणो नाम भ्राताऽऽसीदिति च श्रुतम् ।
प्रद्युम्नस्तनयः पौत्रोऽनिरुद्ध इति च श्रुतः ॥
सैषा परंपरा पाञ्चरात्रशास्त्रप्रवर्तिका ।
एते हि सात्त्वताः प्रोक्ताः शास्त्रं चापिहि सात्त्वतम्
5 सत्त्वच्छब्दो हि भगवच्छब्दवद्विष्णुतत्परः ।
अणप्रत्ययश्च भक्तार्थः ते भागवतसात्त्वताः ॥

एवंहि श्रीयामुनेयागमप्रामाण्यनिर्णयः ।
वैश्यात्तु जायते व्रात्यात् मैत्रस्सात्त्वत एवच ॥
पञ्चमस्सात्त्वतो नाम विष्णोरायतनानि सः ।
पूजयेदाज्ञया राज्ञां स तु भागवतः स्मृतः ॥
इत्यादिवचनैर्हीनजातिशङ्का न युज्यते ।
मा भूदाचार्यशब्दत्वाद्ब्राह्मणस्य निकृष्टता ॥
विष्णुपूजादिसंबन्धाज्जात्यन्तरभवा अपि ।
प्रसिद्धास्सात्त्वताश्चेति तथा भागवता इति ॥
6 एवं शास्त्रं संप्रदायं कर्तारं विषयं तथा ।
आचष्ट भगवान् व्यासः भारते शान्तिपर्वणि ॥
सांख्यस्य वक्ता कपिल इत्यारभ्य हि पठ्यते ।
पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ॥
वेदान्तेषु यथा सारं संगृह्य भगवान् हरिः ।
भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम् ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥
सात्त्वतं विधिमास्थाय गीतस्संकर्षणेन यः ।
द्वापरस्य युगस्यान्ते ह्यादौ कलियुगस्य च ॥
नारदेन तु संप्राप्तस्सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात् साक्षान्नारायणान्नृप ॥

एवमेष महान् धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥
नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
सहोपनिषदान् वेदान् ये विप्रास्सम्यगास्थिताः ॥
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ।
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ॥
समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम् ॥
आगतिश्च गतिश्चैव पूर्वं ते कथितं मया ।
गहनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ॥
7 एवमेकं सांख्ययोगं वेदारण्यकमेवच ।
परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥
इत्यादीनि प्रमाणानि प्रसिद्धानि विपश्चिताम् ।
तत्र चान्तिमपद्येन शास्त्रसारार्थ उद्धृतः ॥
तस्यायमर्थश्श्रीभाष्ये तर्कपादे निरूपितः ।
पञ्चविंशतितत्त्वानि सांख्योक्तानीति विश्रुतम् ।
योगोक्तश्चापि साष्टाङ्गयोगस्संयमलक्षणः ।
वेदोदितं च कर्मापि यागहोमादिलक्षणम् ॥
आरण्यकं परं ब्रह्म प्रतिपादयति स्फुटम् ।
परस्पराङ्गता तावत् तत्त्वं ब्रह्मात्मकं स्वतः ॥

ब्रह्मोपासनरूपश्च योगः कर्मापि कृत्स्नशः ।
तदाराधनरूपं चेत्येतदत्राभिधीयते ॥
तत्पञ्चरात्रे प्रख्याते शास्त्रेऽस्मिन्विशदीकृतम् ।
इति नारायणेनैव स्वयं हि कथितं त्विति ॥

8 एवमेतच्छास्त्रतत्त्वं संग्रहादिह सूचितम् ।
तच्छास्त्रमनुरुद्ध्यैव कर्मब्रह्मात्मनोरपि ॥
शास्त्रयोस्संधिरुदितस्सांकर्षे चात्र मन्यमे ।
प्रतिपाद्यमिदं तत्र पूर्वाचार्यनिरूपितम् ॥
स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ।
ततश्च संहितं शास्त्रमेतद्विंशतिलक्षणम् ।
इति वृत्तिकृतां वाक्यमेतत्तात्पर्यगर्भितम् ॥
एतेन कर्ममीमांसासिद्धान्ते जडविश्रुतः ।
निर्दैववादो निस्संविद्दैववादोऽप्यपाकृतः ॥
तं च संकर्षकाण्डं तु काशकृत्स्नविनिर्मितम् ।
प्राहुः केचिद्बुधास्त्वन्ये विदुः जैमिनिनिर्मितम् ॥
समाख्ययोल्लिखन्त्यन्ये संकर्षणविनिर्मितम् ।
सर्वथा पाञ्चरात्रस्य सिद्धान्तमनुवर्तते ॥
स्पन्दप्रदीपिका नाम भट्टोत्पलविनिर्मिता ।
तत्र चोदाहृतं ग्रन्थजातमेतन्निशम्यताम् ॥

पाञ्चरात्रश्रुतिः पाञ्चरात्रोपनिषदोऽपि च ।
संकर्षणस्य सूत्राणीत्यादिकं विविधं तु तत् ॥
तत्सूत्रस्थं वाक्यमेकमिदं तावदुदाहृतम् ।
येनेदं दृश्यते विश्वं द्रष्टा सर्वस्य यस्सदा ॥
दृश्यश्चराचरत्वे यः स विष्णुरिति गीयते ।
एतेन विष्णुपारम्यसिद्धान्तोऽयमिति स्थितम् ॥
तत्सूत्रमनुसृत्यैव काशकृत्स्नेन वाऽथवा ।
कृतं जैमिनिना सूत्रं देवताकाण्ड इष्यते ॥
पूर्णप्रज्ञैरनुव्याख्याप्रबन्धे देवकाण्डगः ।
द्वितीयलक्षणश्शेषप्रणीत इति भाषितम् ॥
स एष संकर्षकाण्डः मीमांसाभाष्यकर्तृभिः ।
आचार्यशबरैः पूर्वाचार्यैश्च समुदाहृतः ॥
अन्ते हरौ स विष्णुश्च तं ब्रह्मेति च सूत्रणात् ।
अथातो ब्रह्मजिज्ञासा चेति शास्त्रं सुसङ्गतम् ॥
९ तत्र शारीरकं शास्त्रं बादरायणनिर्मितम् ।
स बादरायणो व्यास इत्याहुर्बहवो बुधाः ॥
श्रीमद्रामानुजाचार्यः बादरायणनिस्वनम् ।
भाष्ये स्वे सूत्रकृत्त्वेन व्यासत्वेनाप्यभाषत ॥
तथा श्रीयामुनाचार्यस्सिद्धित्रयनिबन्धने ।
उपक्रमे प्राह सूत्रं बादरायणनिर्मितम् ॥

श्रीशाङ्करे भास्करेऽपि चान्त्यसूत्रावतारणे ।
सूत्रकर्तेति विस्पष्टो भगवान् बादरायणः ॥
स्मरन्ति चेत्यादिसूत्रे व्यासादय इतीरणात् ।
कृष्णद्वैपायनो नासाविति भङ्ग्याऽत्र सूच्यते ॥
स्मृतेश्चेत्यादिसूत्रेषु गीतावचनलेखनात् ।
ब्रह्मसूत्रपदैश्चेति गीतायामपि दर्शनात् ॥
परस्परगृहीतिस्तु विरोधायेति दूषितः ।
ब्रह्मसूत्रपदं वेदमौळिवाक्यपरं कृतम् ॥
इत्युल्लिखन्ति कतिचित् न तत्तु विदुषां मतम् ।
कृष्णद्वैपायनस्सूत्रकर्ता भारतकृच्च सः ॥
द्वीपे बदरिकामिश्रे बादरायणमच्युतम् ।
पराशरात्सत्यवती लेभे पुत्रं परंतपम् ॥
तस्यैव सूत्रकर्तृत्वं पूर्णप्रज्ञैरुदाहृतात् ।
स्कान्दवाक्यादपि स्पष्टं निर्णयन्ति यथा पुनः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदान् उज्जहार हरिस्स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैवच सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥

श्रुतप्रकाशिकातत्त्वटीकयोरप्युदाहृतम् ।
वचस्त्विदं तथा वाचस्पतिवाक्यं निशम्यताम् ॥
ब्रह्मसूत्रकृते वेदव्यासायापरवेधसे ।
ज्ञानशक्त्यवताराय नमो भगवते हरेः ॥
इत्यन्यत्र प्रपञ्चोऽथ गीताकर्ताऽप्यसौ मतः ।
यतो भारतकर्ता सः, यद्गीतासूत्रयोर्मिथः ॥
ग्रहणं ब्रह्मसूत्रेति स्मृतेश्चेत्यातिशङ्कितम् ।
तत्रेदमवधातव्यं निर्णीतं तत्त्वटीकया ॥
ब्रह्मसूत्रपदैश्चेति भाविदृग्भगवद्वचः ।
सूत्रपश्चाद्भावि वा स्यात् न्यबध्नाद्भारते स्वयम् ॥
सूत्रस्य विषयत्वेन वाक्यरूपा कृतिः पुनः ।
प्राक्तनी भाविनी वाऽत्रचोदाह्रियत इत्यतः ॥
न परस्परसंबाधः न प्रसिद्धार्थनिह्नवः ।
अथवाऽनादिसिद्धत्वात् स्मृतिसूत्रप्रवाहयोः ॥
परस्परगृहीतिस्तु न विरोधाय कल्पते ।
प्रवाहानादिवादोऽयं यं शास्त्रशरणा विदुः ॥
10 परीक्षकमतिस्त्वेषा यादृगद्योपलभ्यते ।
शास्त्रमेतत्तथैवादेः कालादिति न निश्चयः ॥
सर्वे भावाः प्रतिकल्पं परिणामिन इत्यपि ।
श्रूयते दृश्यते चापि प्रबन्धे तु विशेषतः ॥

कर्त्रैव हि स्वकं ग्रन्थं आवपत्युद्वपत्यपि ।
बहोः कालात्प्रवक्तॄणां संप्रदाये तु किंपुनः ॥
प्रवक्तारस्तत्रतत्र जैमिन्यादिपदैरपि ।
प्रकाशयन्ति तत्रत्याभिप्रायानिति युज्यते ॥
तथाच सर्वैराचार्यैः सम्प्रदायप्रवर्तने ।
परिष्कृतिप्रभेदेन व्यवहारो विकल्पताम् ॥
स्मृतिसूत्रप्रवाहोऽयमनादिरिति वर्णितम् ।
कालेकाले संभवतां प्रायस्संकोचविस्तरौ ॥
कर्मकाण्डः देवकाण्डः ब्रह्मकाण्ड इति त्रयम् ।
कृतं जैमिनिनैवेति चोल्लिखन्ति परे बुधाः ॥
प्रसिद्धिराद्ययोरस्ति तृतीयस्य पुनर्यथा ।
नैष्कर्म्यसिद्धौ नवतितमश्लोकस्थभारती ॥
जैमिनिस्सामगाचार्यस्सामवेदप्रवर्तकः ।
व्यासशिष्य इति स्पष्टं श्रूयते भारतादिषु ॥
कर्मकाण्डे सामवेदविचारः प्रायशस्ततः ।
छान्दोग्योपनिषत्सामशाखीयेति च विश्रुता ॥
प्रायस्तदीयवाक्यानि सूत्राणां विषया इति ।
सूत्रभाष्यसमध्येतृविदुषामातिरोहितम् ॥
जैमिनीयं ब्रह्मसूत्रमावापोद्वापतः पुनः ।
पर्यष्कार्षीद्व्यास इति संदर्भेणोहितुं क्षमम् ॥

अनेकेषां मतं ब्रह्मसूत्रेषूदाहृतं ततः ।
ब्रह्मसूत्राण्यप्यनेकान्यासन्निति च कल्प्यते ॥
एवं प्रकल्पने प्रायः भाति सर्वं सुसंगतम् ।
किंकिं नसंभाव्यतेऽत्र संसारेऽनादिवाहिनि ॥
11 अथात्रैवेश्वरे वादिविकल्पोऽपि विविच्यते ।
निर्दैववादो निस्संविद्दैववादः पुरोदितः ॥
निरीश्वरो निर्विशेषेश्वरो वेति विकल्पना ।
कालं ब्रह्म विदुः केचित् स्फोटं ब्रह्म विदुः परे ॥
कर्म ब्रह्म विदुः केचित् परेऽथ प्रकृतिं विदुः ।
प्रतिबिम्बैश्वर्यवादः प्रतिभासेश्वरस्तथा ॥
निर्व्यापारेश्वरः कश्चित् तथाऽन्यो निरनुग्रहः ।
प्रवाहेश्वरवादोऽन्यः नानेश्वर इतीतरः ॥
मूर्तित्रयेश्वरः कश्चित् तदन्यतम इत्यपि ।
तदुत्तीर्णविवादोऽन्यः शाक्तसौरादिकल्पनी ॥
कल्पना काचिदन्योन्यविभिन्नास्त्रय ईश्वराः ।
ये सत्त्वादिगुणोन्मेषभिदुरेष्वधिकारिणः ॥
कल्पेषु ते चक्रनेमिनीत्या निम्नोन्नतश्रियः ।
एवं बहुविधा वादाः दृश्यन्ते खल्वपीश्वरे ॥
द्विलिङ्गो द्विविभूतिश्च विष्णुर्नारायणो हरिः ।
श्रीपाञ्चरात्रसिद्धान्ते ह्येष ईश्वरनिर्णयः ॥

प्राप्यः परमभोग्यत्वात् निषेव्यः स्वामिभावतः ।
शक्तिकारुण्यभूम्ना च शरण्यस्सीदतां प्रभुः ॥
बहिरन्तश्च तद्व्याप्तिः तत्र यत्रोभयं भवेत् ।
विभोरणोश्च न बहिर्नान्तिः तस्मान्न सा तयोः ॥
प्रयोजनस्य विरहान्न कर्तेश इति ब्रुवन् ।
तस्य सिद्धावसिद्धौ च व्याघातादिपराहतः ॥
निरपेक्षस्वतन्त्रस्य सहकारिमतस्सदा ।
अप्रवृत्तिः प्रवृत्तिर्वा नित्यं स्यादिति चेन्न तत् ॥
तत्तदिच्छाविशेषेण तत्क्रमस्योपपत्तितः ।
इच्छासंतत्यनादित्वात् न च मूलक्षयः क्वचित् ॥
12 सर्वात्मैक्यं विदुः केचिद्देवतैक्यं परे विदुः ।
मूर्तित्रयैक्यं कतिचित् साम्यमेके प्रचक्षते ॥
तेष्वेवान्यतमस्यान्ये विबुधाः परतां विदुः ।
त्रिमूर्त्युत्तीर्णपरतावादिनोऽप्यपरे बुधाः ॥
स हि व्योमातीतवाद इति शास्त्रात्प्रतीयते ।
तत्स्वरूपं किंचिदत्र प्रसङ्गात्प्रतिपाद्यते ॥
उपादानं तु भगवान्निमित्तं तु महेश्वरः ।
इति व्योमातीतवादः दहरविद्यानिरूपितः ॥
तस्मिन्यदन्तरित्यादौ तच्छब्दो व्योमतत्परः ।
स चाकाशो नामरूपनिर्वोढा विष्णुरुच्यते ॥

तदतीतस्तदन्तस्स्थः स सदाशिव उच्यते ।
इति वादो निराकारि श्रीभाष्यादिषु सूरिभिः ॥
अतएव निमित्तत्वमुपादानत्वमित्यपि ।
नारायणस्यैवैकस्य श्रुत्याद्येषूपपादितम् ॥
वेदान्तवेद्यो भेदो वाऽभेदो वा द्वयात्मताऽपिवा ।
कोऽर्थस्समार्थित इति चेत्सर्वं च समर्थितम् ॥
सर्वप्रकारं ब्रह्मैवावास्थितं देहिभावतः ।
अभेदोऽतो रक्षितस्स्यात् एवं ब्रह्मैकवस्त्वपि ॥
नानात्मचिदचिद्वस्तुप्रकारत्वादनेकधा ।
अवस्थितमतो भेदाभेदश्चापि समर्थितः ॥
चिदचिद्वस्त्वीश्वराणां वैलक्षण्यादसंकरात् ।
स्वरूपेण स्वभावेन भेदश्चापि समर्थितः ॥
वेदार्थसंग्रहे त्वस्य विस्तरः प्रतिपादितः ।
स व्योमातीतवादोऽपि तत्रैव सुनिरूपितः ॥

(115) प्रपत्तिः

1 श्रुतिस्मृतीतिहासेषु प्रपत्तिर्नाम विश्रुता ।
तेषां तु तपसां न्यासमतिरिक्तं ततः श्रुतम् ॥
ब्रह्मणे त्वा महस ओमित्यात्मानं नियोजयेत् ।
अहं मुमुक्षुश्शरणं प्रपद्य इति च श्रुतम् ॥

प्रपन्न इन्द्रं शरणं सर्वस्य शरणं सुहृत् ।
इत्यादयः श्रुतिशतं विश्रुतं शरणागतौ ॥
स्मृतीतिहासवचनमनन्तं प्रथितं विदाम् ।
अतस्त्रैवर्णिकत्वादेः भावोऽभावोऽपि कस्य चित् ॥
नाधिकारः प्रपत्तौ स्यादाकिंचन्यमनाश्रितः ।
येषां तु भगवद्गीता प्रमाणमिति सम्मता ॥
प्रपत्तिस्साधनं मुक्तेरिति तैरखिलैर्मता ।
सा परंपरया हेतुरिति सर्वैर्विनिश्चिता ॥
साक्षादपि भवेद्धेतुरिति श्रीवैष्णवा विदुः ।
प्रपत्तिः द्विविधा तस्मात् स्वतन्त्राङ्गविभेदतः ॥
यद्येन कामकामेन न साध्यं साधनान्तरैः ।
तेनतेनाप्यते तत्तन्न्यासेनैव महामुने ॥
परमात्मा च तेनैव साध्यते पुरुषोत्तमः ।
भक्त्या परमया वाऽपि प्रपत्त्या वा महामुने ॥
प्राप्योऽहं नान्यथा प्राप्यः मम कैङ्कर्यलिप्सुभिः ।
इत्यादिकं वचोऽनन्तं भगवच्छास्त्रविश्रुतम् ॥
2 अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।
तदेकोपायतायाञ्चा प्रपत्तिश्शरणागतिः ॥
मुनिना भरतेनेत्थं प्रपत्तेर्लक्षणं कृतम् ।
त्वमेवोपायभूतो मे भवेति प्रार्थना मतिः ॥

शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ।
आत्मात्मीयभरं सर्वं स्वात्मानं च समर्पयेत् ॥
इत्यादिवचनानां च परामर्शेन देशिकैः ।
निष्कृष्यात्रायमेषोऽर्थः विशदीक्रियते यथा ॥
आकिंचन्यभरन्यासोपायत्वप्रार्थनात्मनाम् ।
त्रयाणां सौहृदं सूक्ष्मं यः पश्यति स पश्यति ॥
मुमुक्षुमात्रसामान्यं स्वरूपादिसमर्पणम् ।
अकिंचने भरन्यासस्त्वधिकोऽङ्गितया स्थितः ॥
अत्र रक्षाभरन्यासस्समस्सर्वफलार्थिनाम् ।
स्वरूपफलनिक्षेपस्त्वधिको मोक्षकाङ्क्षिणाम् ॥
स्वनिर्भरत्वपर्यन्तरक्षकैकार्थ्यभावनम् ।
त्यक्तरक्षाफलस्वाम्यं रक्ष्यस्यात्मसमर्पणम् ॥
भरन्यासप्रधानो यस्सर्वान्वयविवर्जितः ।
तच्छेषत्वानुसंधानविशेषः शरणागतिः ॥
3 साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः ।
साध्यभक्तिस्थता चैव प्रपत्तिरिति गीयते ॥
उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः ।
उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी ॥
उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी ।
साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥

प्रारब्धकर्मावधिको मोक्ष उक्त उपासितुः ।
दृप्तस्य देहावधिकः आर्तस्यार्त्यवधिर्मतः ॥
इयं केवललक्ष्मीशोपायत्वप्रार्थनात्मिका ।
स्वहेतुत्वधियं रुन्धे किंपुनस्सहकारिणाम् ॥
शास्त्रार्थज्ञानवेलायामुपायत्वेन निश्चितः ।
अनुष्ठानदशायां तूपायबुद्धिं परित्यजेत् ॥
4 फलं संगं च कर्तृत्वमुपायत्वं च संत्यजेत् ।
सात्त्विकत्याग एष स्यात् इति श्रीभगवान् जगौ॥
साङ्गं ससात्त्विकत्यागं कुर्याद्भरसमर्पणम् ।
अन्यथा विधिकोपस्स्यात् चेतनोऽचेतनो भवेत् ॥
सर्वज्ञोऽपि हि विश्वेशस्सदा कारुणिकोऽपि सन् ।
संसारतन्त्रवाहित्वात् रक्ष्यापेक्षां प्रतीक्षते ॥
आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम् ।
रक्षिष्यतीति विश्वासः गोप्तृत्ववरणं तथा ॥
कार्पण्यं चेति पञ्चाङ्ग आत्मनिक्षेप इष्यते ।
पञ्चानामपिचाङ्गानामिदं विवरणं मतम् ॥
चराचराणि भूतानि सर्वाणि भगवद्वपुः ।
अतः तदानुकूल्यं मे कर्तव्यमिति निश्चयः ॥
अन्तःस्थितस्स भगवान् सर्वेषामिति निश्चयात् ।
सर्वभूतेषु च सदा प्रातिकूल्यं विवर्जयेत्॥

कार्पण्येनाप्युपायानां विनिवृत्तिर्विवक्षिता ।
रक्षिष्यतीतिविश्वासात् अभीष्टोपायकल्पना ॥
गोप्तृत्ववरणं नाम स्वाभिप्रायनिवेदनम् ।
शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत् ॥
पुरुषं परमुद्दिश्य न मे सिद्धिरितोऽन्यथा ।
प्रपत्तिसंग्रहास्त्वित्थं अनुष्ठानक्रमस्त्वसौ ॥
5 अहं मद्रक्षणभरः मद्रक्षणफलं तथा ।
न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः ॥
न्यस्याम्यकिंचनः श्रीमन् अनुकूलोऽन्यवर्जितः ।
विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥
स्वामिन् स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन्नयस्यसि मां स्वयम्
श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥
त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्येकप्रयोजनम् ।
निषिद्धकाम्यरहितं कुरु मां नित्यकिङ्करम् ॥
देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥
मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैङ्कर्योपकरणं वरद स्वीकुरु स्वयम् ॥

त्वदेकरक्ष्यस्य मम त्वमेव करुणाकर ।
न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥
अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥
श्रीमान् नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् ।
अचीकरत् स्वयं स्वस्मिन् अतोऽहमिह निर्भरः ॥
वेदान्तदेशिकन्यासदशकं लिखितं न्विदम् ।
रहस्यत्रयसारे तु महीयान् न्यासविस्तरः ॥

(116) न्यायसिद्धान्तः.

1 प्रायः प्रपञ्चितस्सर्वेतरासिद्धान्तसंग्रहः ;
अथ नैयायिकोक्तीनां संग्रहोऽपि निशम्यताम् ॥
न तद्व्यवसितं पुंसां न तत्कर्म न तद्वचः ।
न तद्भोग्यं समस्तीह यन्न दुःखाय जायते ॥
तत्त्वतश्चिन्त्यमानं हि सर्वं दुःखं विवेकिनः ।
विषसंपृक्तमधुमत् सर्वं दुःखीभवत्यदः ॥
सुखाधिगमलोभेन यतमानो हि पूरुषः ।
सहस्रशाखमाप्नोति दुःखमेव तदर्जने ॥
2 एवं सर्वमिदं दुःखमिति भावयतोऽनिशम् ।
सर्वोपपत्तिस्थानेषु निर्वेदोऽस्य प्रवर्तते ॥

निर्विण्णस्य च वैराग्यं विरक्तस्य च देहिनः ।
क्लेशकर्मप्रहाणादिद्वारो निश्श्रेयसोदयः ॥
यावदात्मगुणास्सर्वे नोच्छिन्ना वासनादयः ।
तावदात्यन्तिकी दुःखनिवृत्तिर्नावकल्पते ॥
धर्माधर्मौ निमित्तं हि संभवे सुखदुःखयोः ।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥
तदुच्छेदे तु तत्कार्यशरीराद्यनुपप्लवात् ।
नात्मनस्सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥
अनिष्टोपरमार्थास्स्युरपवर्गप्रवृत्तयः ।
सन्तः प्रयतमाना हि दृश्यन्ते व्याधिशान्तये ॥
चिरज्वरशिरोत्यादिव्याधिदुःखेन खेदिताः ।
सुखिनो वयमद्येति तदपाये प्रयुञ्जते ॥
3 मोक्षे नित्यसुखं येषां कामं देहेन्द्रियाद्यपि ।
नित्यं प्रकल्प्यतां तेषां मोक्षो रम्यतरो भवेत् ॥
यदत्र किरणावल्यामुक्तं तदवधार्यताम् ।
सत्त्वशुद्धिमुखात्कर्म स्याद्दारादुपकारकम् ॥
ज्ञानं तु सन्निपत्योपकारकाङ्गमितीष्यते ।
तुल्यकक्षतया कर्मज्ञानयोर्न समुच्चयः ॥
4 इत्युक्तं, दुःखजन्मादेरुत्तरोत्तरनाशतः ।
अनन्तरापायमार्गादपवर्गसमुद्भवः ॥

तत्त्वज्ञानेन मिथ्याधीवासनानाशसंभवः ।
तन्नाशेन विनश्यन्ति रागादिदोषलक्षणः ॥
पुण्यापुण्यात्मिका नश्येत्प्रवृत्तिस्तद्विनाशतः ।
अप्रवृत्तौ नैव जन्म देहसंबन्धलक्षणम् ॥
जन्माभावे च दुःखानामनुत्पाद इति स्थितम् ।
प्रशस्तपादभाष्यस्थसारांशोऽप्यवधार्यताम् ॥
फलाभिसन्धिरहितज्ञानपूर्वकधर्मतः ।
विशुद्धे हि कुले जन्म जिज्ञासा दुःखगोचरा ॥
ततश्चाचार्योपसत्तिः ततस्तत्त्वविनिर्णयः ।
मिथ्याज्ञाननिवृत्तेस्तु रागद्वेषविहीनता ॥
ततः प्रवृत्त्यनुत्पादः भोगात्संचितसंक्षयः ।
शरीरपरिखेदश्च सन्तोषसुखमेव च ॥
भोगस्स्यादैकभविकपक्षः प्रायोऽत्र सम्मतः ।
अनैकभाविके पक्षे वैकल्यं सहकारिणः ॥
निवृत्तिलक्षणो धर्मः केवलः परमार्थजात् ।
दर्शनात्सुखमुत्पाद्य स्वयमेव निवर्तते ॥
शरीरादिनिवृत्तौ तु निर्बीजस्यात्मनस्तदा ।
पुनश्शरीरानुत्पत्तौ दग्धेन्धनकृशानुवत् ॥
दुःखस्योपशमो मोक्षः स्वयमेव भविष्यति ।
आत्मा विभुत्वद्रव्यत्वस्वरूपेणावतिष्ठते ॥

5 एकविंशतिधा दुःखं शरीरं प्रथमं मतम् ।
षडिन्द्रियाणि विषयाः षट् तथैव च बुद्धयः ॥
सुखं दुःखं चेति, तत्र श्रोत्रं नित्यं मनस्तथा ।
तथापि यादृग्रूपस्य दुःखता ध्वंसते हि तत् ।
दुःखासमानकालीनदुःखध्वंसोऽमृतं मतम् ।
विशेषणांशे तु तत्त्वसाक्षात्कारः प्रयोजकः ॥
तत्र नव्याः दुःखपदं दुःखसाधनतत्परम् ।
तत्साधनं च दुरितं तद्ध्वंसो ज्ञानसाधनः ॥
इत्याहुः दुःखविध्वंसस्तत्कारणनिबन्धनः ।
न तत्त्वज्ञानहेतुस्स्यादित्यन्येऽन्यत्र विस्तरः ॥

(117) भाट्टसिद्धान्तः.

1 भट्टपादीयसिद्धान्तः यः पुनस्तन्त्रवार्तिके ।
निरूपितो व्याकरणाधिक्रियायां निशम्यताम् ॥
सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारणा ॥
आत्मज्ञानं पुमर्थं च स्यात्संयोगपृथक्त्वतः ।
विना तेनामुष्मिकेषु प्रवृत्त्यादेरसंभवः ॥
2 आत्माऽपहतपाप्मेति तथा मन्तव्य इत्यपि ।
तथाऽऽत्मानमुपासीतेत्यात्मज्ञानं विधीयते ॥

जिज्ञासामननोपास्तिभेदेन त्रिविधं त्विदम् ।
ज्ञायते फलसंबन्धः त्रिविधस्तदपेक्षितः ॥
3 स सर्वलोकानाप्नोति स संपन्नो महीयते ।
एष सर्वोऽप्यभ्युदयः तथा निश्श्रेयसं पुनः ॥
स खल्वेवं वर्तयन्नित्याद्याभिश्च प्रतीयते ।
परमात्मप्राप्त्यवस्था पुनरावृत्तिवर्जिता ॥
4 कर्मणामुपयोगोऽपि तत्र त्वेवं भविष्यति ।
नित्यनैमित्तिकाभ्यां स्यादुपात्तदुरितक्षयः ॥
अथवाऽकरणाधीनप्रत्यवायपराभवः ।
5 नच ज्ञानविधानेन कर्मसंबन्धवारणम् ॥
नच तेषां फलं भिन्नं विभिन्ना पदवीत्यपि ।
न विकल्पोऽथ बाधो वा नाङ्गाङ्गित्वं मिथोऽथवा॥
संभावनापदं यस्मात् श्रुतिस्स्पष्टोपरुध्यते ।
तस्मात्समुच्चयो न्याय्यः प्रामाण्याच्छास्त्रयोर्द्वयोः॥
इत्थमत्र बृहट्टीकावाक्यं राणक उद्धृतम् ॥
ननु निश्श्रेयसं ज्ञानात्, बन्धहेतोर्न कर्मणः ॥
नैकस्मादपि तत्किंतु ज्ञानकर्मसमुच्चयात् ।
नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ॥
ज्ञानं च विमलीकुर्वन् अभ्यासेन च पाचयेत् ।
वैराग्यात्पक्वविज्ञानः कैवल्यं च व्रजेदिति ॥

निषिद्धकाम्यकर्मभ्यः सम्यग्व्यावृत्तचेतसः ।
नित्यनैमित्तिकप्रायश्चित्तप्रध्वस्तदुष्कृतेः ॥
सुखदुःखानुभूतिभ्यां क्षीणप्रारब्धकर्मणः ।
ध्यायतः परमात्मानं मुक्तिस्स्यादिति निर्णयः ॥

6 इत्थं सिद्धान्तकर्तॄणामेतेषां श्लोकवार्तिके ।
योऽसावभिप्रायभेदः तत्संक्षेपोऽवधार्यताम् ॥
आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं नच चोदितम् ।
कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ॥
विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः ।
साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥
कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणकम् ।
फलस्याल्पस्य दानं वा राजपुत्रापराधवत् ॥
सुखोपभोगरूपश्च यदि मोक्षः प्रसज्यते ।
स्वर्ग एव भवेदेषः पर्यायेण क्षयी च सः ॥
नहि कारणवत्किंचिदक्षयित्वेन गम्यते ।
तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ॥
नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ।
नच क्रियायाः कस्याश्चिदभावः फलमिष्यते ॥
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ।
उत्तरप्रचयाभावाद्देहो नोत्पद्यते पुनः ॥

कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते ।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ॥
प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति ।
आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ॥
सर्गप्रलयविज्ञानं समस्तजगदाश्रयम् ।
दैवप्रभावज्ञानार्थं धर्मानुष्ठानसिद्धये ।
तत्परत्वेऽप्युपाख्यानेष्वतीव विबुधोत्तमैः ।
नचैव कार्यस्तत्त्वाभिनिवेश इति निर्णयः ॥
तस्मादद्यवदेवात्र सर्गप्रळयकल्पना ।
समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका ॥
सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना ।
नच धर्मादृते तस्य भवेल्लोकाद्विशिष्टता ॥
नचाननुष्ठितो धर्मः नानुष्ठानमृते मतेः ।
नच वेदादृते सा स्यात् वेदो नच पदादिभिः ॥
तस्मात्प्रागपि सर्वेऽमी स्रष्टुरासन् पदादयः ।
स्यात्तत्पूर्वकता चास्य चैतन्यादस्मदादिवत् ॥
एवं ये युक्तिभिः प्राहुः तेषां दुर्लभमुत्तरम् ।
अन्वेष्यो व्यवहारोऽयमनादिर्वेदवादिभिः ॥

तथाऽर्थवादाधिकृतौ सर्वोपनिषदामपि ।
नैराकाङ्क्ष्यं च कण्ठोक्तं क्रत्वर्थात्मोपपादनात् ॥

7 आपाततो विरोधोऽस्ति प्रबन्धे धीमतामपि ।
परिहाररहस्यं तु तैरेवात्रैव सूचितम् ॥

एवं ये युक्तिभिः प्राहुरित्युक्तया भावगर्भया ।
अत्रायमाशयः वेदानित्यतास्थापनाय हि ॥

अतिवादाः कृता युक्त्या परमार्थोऽन्य एव यः ।
सच प्रोक्तस्स्फुटः तन्त्रवार्तिके त्विति निर्णयः ॥

8 एवं परिहारयुक्तौ स्फुटायां राणके पुनः ।
आत्मज्ञाने विरोधो यः विधानप्रतिषेधयोः ॥

संसार्यसंसार्यात्मोपलब्धिभेदात्स चोद्धृतः ।
यश्चाप्यभ्युदयश्रेयःफलभेदविकल्पना ॥

प्रत्युक्ता साऽपि सगुणनिर्गुणोपास्तिभेदतः ।
रीतिरेषा स्वसिद्धान्तवासनैकनिबन्धना ॥

9 तत्र भाट्टाशयविदां पन्थानः बहुधा स्थिताः ।
तथाऽप्येकं सूचयामि किंचिद्विस्तरकातरः ॥

संसारादुद्विजन्ते ये दृष्टलोकपरावराः ।
तेषामेवाधिकारस्स्यात् मुक्तिशास्त्रे मनीषिणाम् ॥

तेनाभावात्मकत्वेऽपि मुक्तेर्नापुरुषार्थता ।
सुखदुःखोपभोगो हि संसार इति शब्द्यते ॥

तयोरनुपभोगं तु मोक्षं मोक्षविदो विदुः ।
श्रुतिरप्येवमेवाह भेदं संसारमोक्षयोः ॥
न ह वै सशरीरस्य प्रियाप्रियविहीनता ।
अशरीरं वाव सन्तं स्पृशतो न प्रियाप्रिये ॥
सुषुप्तावप्रकाशेन नात्मनस्स्वप्रकाशता ।
दुःखाभावाद्व्यवहृतिः सुखरूप इति स्थितम् ॥
आनन्दात्मकमात्मानं ये वदन्ति स्वयंप्रभम् ।
तन्मतेऽपि च संसारान्मुक्तेरेतावती भिदा ॥
आत्मा ह्यानन्दरूपोऽसौ संसारेऽपि प्रकाशते ।
तावानेव स मोक्षेऽपि नाधिक्यं तस्य किंचन ॥
अथ संसारवेलायामानन्दो न प्रकाशते ।
नह्यप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः ॥
यद्यसौ न प्रकाशेत किं तर्ह्यन्यत्प्रकाशते ।
आत्मस्वरूपमितिचेन्ननु चानन्द एव तत् ॥
तच्चेत्प्रकाशते नूनमानन्दोऽपि प्रकाशते ।
तेन शब्दादिविषयजन्ययोस्सुखदुःखयोः ॥
निवृत्तिरेव संसारादपवर्ग इतीर्यते ।
सुखदुःखविहीनस्तु मुक्तः स्वस्थोऽवतिष्ठते ॥
तस्मान्मोक्षो निरानन्दः दुःखलोपात्पुमर्थता ।
पार्थसारथिमिश्राणामाहैवं शास्त्रदीपिका ॥

(118) अधिकारी.

1 अथातो मोक्षशास्त्रस्य वर्णाश्रमविशेषतः ।
अधिकारिविकल्पोऽयं संक्षेपादवधार्यताम् ॥
अथात्र प्राञ्च आचार्याः बादरिप्रमुखाः पुनः ।
इच्छन्ति वेदशास्त्रादिं नरमात्राधिकारिकम् ॥
2 अपशूद्राधिकारास्तु वेदाः जैमिनिसम्मताः ।
तथैवचोपनिषदः बादरायणसम्मताः ॥
3 तमेतमिति शास्त्रे च ब्राह्मणग्रहणात्तथा ।
अथ ब्राह्मण इत्यत्र ब्राह्मणग्रहणादपि ॥
न कर्मणेत्यादिशास्त्रे त्यागसंन्यासकीर्तनात् ।
संन्यासिनो ब्राह्मणास्स्युरिह मोक्षाधिकारिणः ॥
तत्साधने मोक्षशास्त्रेऽप्येत एवाधिकारिणः ।
इति सिद्धान्तयामासुः प्राञ्चः केचन सूरयः ॥
4 सर्वेषां च द्विजातीनां तथैवाश्रमिणामपि ।
अधिकारं विदुर्धीराः सुरेश्वरमुखाः परे ॥
श्रुतिस्थब्राह्मणपदमुपलक्षणमित्यपि ।
व्याख्याय चापशूद्राणामधिकारं विदुर्हि ते ॥
ज्ञानमात्रे तु सर्वेषामधिकारोऽस्ति यद्यपि ।
संन्यासनिष्ठा विद्यैव मोक्षसाधनमिष्यते ॥
यल्लिङ्गं गृहिणां विद्यासंप्रदायादिकर्तृता ।
न तत् स्थितन्यायबाधं कर्तुमुत्सहते क्वचित् ॥

न हि शास्त्रशतेनापि क्वचिद्ध्वान्तप्रकाशयोः ।
संभवः शक्यते कर्तुं लिङ्गैः किमुत केवलैः ॥
इति मुण्डकभाष्यस्थः श्रीशाङ्करविनिर्णयः ।
अत्र श्रीरामकृष्णार्यवाक्यमेतन्निशम्यताम् ॥
केचित्तु भिक्षवः स्वीयमाश्रमं केवलं पुनः ।
मोक्षाश्रममिति भ्रान्ताः ख्यातिपूजापरायणाः ॥
गृहस्थादिकृताष्टाङ्गप्रणामाद्यैश्च केवलम् ।
आत्मानमधिकंमन्याः तेषु प्रद्वेषमात्रतः ॥
तेषां ब्रह्मविचाराधिकारो नास्तीति मन्वते ।
तथा वसिष्ठजनकैरेकाद्याख्यायिका अपि ॥
प्रच्छादयन्तो दृश्यन्ते इत्युक्तिरवलोक्यते ।
5 अथापि केचिद्विबुधाः धीरोदारा भवन्ति ये ॥
निर्गुणब्रह्मविद्यायां शूद्राणामपि ते स्फुटम् ।
स्ववर्णधर्मानुष्ठानादधिकारं प्रचक्षते ॥
इतिहासपुराणाभ्यामर्थितैतेषु युज्यते ।
अपित्वध्ययनोपात्तज्ञानमूला निषिध्यते ॥
विद्योत्पत्तिस्तु विमलदेहद्वारा भविष्यति ।
तस्माच्छूद्रोऽपि विद्यार्थं कर्म कर्तुमिहार्हति ॥
6 एवं संन्यासाश्रमोऽपि पापभेदविनाशकृत् ।
चित्तशुद्धिमुखात्कैश्चिद्विद्यायामङ्गमिष्यते ॥

जनकप्रमुखा ये तु विद्यावन्त इति श्रुताः ।
तेषां प्राग्जन्मसंन्यासाद्विद्यावाप्तिं विदुर्हि ते ॥
इच्छन्ति केचिच्छ्रवणाद्याधिकारिविशेषणम् ।
संन्यासमित्यतो विद्यासाधनत्वेन स श्रुतः ॥
अनन्यव्यापारतया श्रवणाद्यनुतिष्ठतः ।
दृष्टद्वारैव विद्यायामस्याङ्गत्वं विदुः परे ॥
संन्यस्य श्रवणं कुर्यादित्येष नियमे विधिः।
यतश्च श्रवणाद्यर्हः कर्मच्छिद्रेषु गृह्यपि ॥
द्विजानामविशेषेण संन्यासः श्रूयते ततः ।
श्रवणं निर्निरोधं स्यात् अत्र क्षत्रियवैश्ययोः ॥
केचित्तु ब्राह्मणस्यैव संन्यासाश्रमशास्त्रतः ।
विट्शूद्रयोस्तु श्रवणं तदनङ्गं प्रचक्षते ॥
अन्ये संन्यासिनां मुख्यमधिकारं प्रचक्षते ।
इतरेषां तु गौणं तं क्रामिकं विधुरादिवत् ॥
7 सर्वाश्रमपरित्यागो ब्राह्मण्यमिति केचन ।
नग्नचर्येषु संवर्तदुर्वासःप्रभृतिष्वपि ॥
विद्यासंदर्शनात्सर्वाश्रमिष्वत्याश्रमिष्वपि ।
अधिकारं विदुर्ब्रह्मविद्यायास्तत्र च स्मृतिः ॥
यं न सन्तं नवा सन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥

गूढधर्माश्रितो विद्वानज्ञानचरितं चरत् ।
अन्धवज्जडवच्चैव मूकवच्च महीं चरेत् ॥

8 इत्येवं मतभेदे च स्थिते केचिद्विपश्चितः ।
स्वातन्त्र्येण विचार्यैत्थमुल्लिखन्ति सिराग्रहाः ॥
छान्दोग्योपनिषन्निष्ठाः ये चैकाश्रम्यवादिनः ।
गृहस्थ एव विद्यायामधिकारीति तन्मतम् ॥
ये वाज्युपनिषन्निष्ठाः ते तु संन्यासिलक्षणः ।
ब्राह्मणस्सोऽधिकारीति यथाश्रुत्याऽभिमेनिरे ॥
इतरेषु प्रबन्धेषु परस्परविनिन्दया ।
सर्वेषामधिकारोऽपि ज्ञायते तत्रतत्र हि ॥
ज्ञानकर्मविवादोऽयं जगतस्सदसत्त्वतः ।
दृष्टिमूलः यतो बन्धोऽप्यास्ते सदसदात्मकः ॥

9 अथान्ये ब्रह्मविद्यायां सर्वेषां मोक्षसाधने ।
अधिकारं विदुर्धीराः तद्विशेषव्यवस्थया ॥
ब्रह्मविद्या द्विधा भक्तिः प्रपत्तिश्चेति शास्त्रतः ।
आद्यायामधिकारस्तु यज्ञदानाद्युपस्कृतः ॥
अपात्याश्रमिणां सर्वाश्रमिणां च द्विजन्मनाम् ।
अत्याश्रमी नग्नचर्यो बाह्य इत्येव तन्मतम् ॥
आनुकूल्याद्युपकृता प्रपत्तिर्या त्वनन्तरा ।
तस्यां हि प्राणिमात्रस्य स्यादसाविति निर्णयः ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥
अपिचेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
भक्त्या परमया वापि प्रपत्त्या वा महामुने ॥
प्राप्योऽहं नान्यथा प्राप्यो मम कैंकर्य लिप्सुभिः।
इत्याह भगवान् साक्षात्सर्वस्य शरणं सुहृत् ॥
प्रपत्त्या भजमानास्तु यादृशास्तादृशा अपि ।
भगवान् सर्वपापेभ्यो मोक्षयिष्यत्यसंशयम् ॥
भक्तिमार्गोऽपि सर्वेषां यद्यपि श्रूयते तथा ।
विशिष्टदेहावच्छिन्नप्रारम्भोऽसौ न दुष्यति ॥
धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते ।
वर्णावरत्वे संप्राप्तास्संसिद्धिमिति निर्णयः ॥
शूद्रार्चनादिप्रसङ्गे श्रीकृष्णमुनिभिः पुनः ।
उक्तैषा प्रतिबन्दीति वेदान्तार्यैरुदाहृतम् ॥

हविष्कृतो यथा शूद्रे यथा वा बहुयाजिनः ।
निर्वाहः क्रियते तद्वत् शास्त्रस्यास्यापि नान्यथा ॥

10 स्त्रीणां निर्वाणदीक्षा च स्थापिता जैनपण्डितैः ।
तथा मोक्षाधिकारश्च प्रयासेन समर्थितः ॥
स्त्रीणां च ब्रह्मविद्यायां वेदाचार्येण बोधितः ।
अधिकारश्श्रुतो ब्रह्मवादिनीनां क्वचित्क्वचित् ॥
स्त्रीणां तु परिव्रज्यायामधिकारो निरूपितः ।
बोधायनेनेति पुनः मस्करी प्राह धर्मवित् ॥
स्त्रीणां तथैव शूद्राणां दीक्षा आगमबोधिताः ।
तथाच सर्वे सर्वानुग्रहणैकधियो बुधाः ॥

11 एवंविचारे द्विविधो मार्गो निष्कृष्य लभ्यते ।
एकस्त्विदानीं सर्वेषां यथाशक्त्यधिकारकृत् ॥
विशिष्टदेहे विद्यायाः निष्पत्तिमभिधित्सति ।
अन्यो विशुद्धं जन्मैव विद्यारम्भेऽभिवाञ्छति ॥
समाप्तेः फलसिद्धेश्च नियमं नाभिधित्सति ।
अपि मार्गद्वयं सर्वानुग्रहैकप्रवृत्तिमत् ॥
अयं विशेषस्त्वनयोः कल्पयोरत्रधार्यते ।
तारतम्यव्यवस्थाऽऽद्ये प्रायस्साम्यमनन्तरे ॥

12 अत्र तत्त्वमिदं बोध्यमधिकारनिरूपणे ।
अधिकारनिषेधोऽयं न स्वभावनिबन्धनः ॥

आचार्यानुग्रहाभावमूलशास्त्रनिबन्धनः ।
इति प्राहुर्महाचार्याः पाराशर्यजये स्फुटम् ॥
मानं रहस्याम्नायस्थं असूयायाः परस्परम् ।
प्रादुर्भावप्रकरणं इति तत्त्वविदां मतम् ॥
तस्मिन् प्रकरणे सर्वाधिकारं ज्ञानमुच्यते ।
ज्ञानपर्युत्थानकर्मा शूद्र इत्यंशदर्शनात् ॥
न पर्युत्थास्याम इति यदाऽवोचन्नसूयया ।
न वो वक्ष्याम इतिच ब्राह्मणा अपिचाब्रुवन् ॥
पर्युत्थानं हि शुश्रूषा तत्तस्मादाभ्यसूयकम् ।
दूरीकरणमित्येवं रहस्यं प्रकटीकृतम् ।
अधिकारविचारोऽयं गम्भीरोऽपि निरूपितः ।
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥

(119) कर्मज्ञानतत्त्वम्.

1 अथ कर्मज्ञानतत्त्वं सूक्ष्मदृष्ट्या विचार्यते ।
लौकिका हि विदुः कर्मज्ञानयोर्महदन्तरम् ॥
परीक्षकास्तु तत्त्वज्ञाः प्रविवेकं न कंचन ।
परिभाषामन्तरेण न निरूपयितुं क्षमाः ॥
ज्ञानं कर्मैव सूक्ष्मं स्यादान्तरं स्फुरणं हि तत् ।
बाह्यं तु स्फुरणं लोके क्रिया कर्मेति कथ्यते ॥

2 आत्मनः परिणामोऽयं ज्ञानमित्याह जैमिनिः ।
आत्मनः स्रवणं ज्ञानमित्यर्हत्प्रमुखा विदुः ॥
अन्तःकरणवृत्तिस्स्यादिति कापिलपद्धतिः ।
आत्मनोऽनुभवो नाम तस्य स्फुरणमुच्यते ॥
स्फुरणं स्फुरतो धर्मः नित्यो वह्न्युज्ज्वलत्ववत् ।
तमेव मार्गं प्रायेण द्वैताद्वैतविदो विदुः ॥
आत्मनो धर्मभूतं च नित्यं द्रव्यान्तरं स्थितम् ।
तस्य च प्रसरः ज्ञानं विशिष्टाद्वैतसम्मतम् ॥
बुद्धिनित्यत्ववादश्च योऽसौ शाबरसंमतः ।
स पर्यवस्यत्यत्रेति प्रायो मीमांसका विदुः॥
ज्ञानं विषयभेदेन भिन्नं व्यापारलक्षणम् ।
तस्याश्रयो बुद्धिरेका नित्येति च समर्थिता ॥
सा च प्रमात्रात्मिकेति न्यायरत्नाकरोदिता ।
यदि बुद्धिः प्रमातृस्था शक्तिरेकेति कथ्यते ॥
तादात्म्यानभ्युपगमे विशिष्टाद्वैतनिर्णयः ।
अत्यन्ताभेदपक्षे तु स्याददैतविनिर्णयः ॥
तादात्म्यपक्षः भाट्टेष्टः शक्तिशक्तिमतोरपि।
सच भर्तृप्रपञ्चेष्टो वादस्स्यादिति निर्णयः ॥
एवं स्थिते विनाशं चाप्युद्भवं च निरन्वयम् ।
आहुर्ये न्यायनिपुणाः ते ज्ञानं गुणमब्रुवन् ॥

न तेन कश्चिद्विकृतिरात्मनामिति मेनिरे ।
अन्ये कर्मापि विकृतिर्न स्यादिति विदुर्बुधाः ॥
अतो भूतपरिस्पन्दं भूतचैतन्यवादिनः ।
ज्ञानधातुं विजानन्ति स स्पन्दः पारिणामिकः ॥
3 ज्ञानानां कर्मशब्देन ज्ञानशब्देन कर्मणाम् ।
प्रयोगस्य व्यतिकरः प्रायेणाभेदगोचरः ॥
प्रचोदयाद्धिय इति धीशब्दः कर्मवाचकः ।
जातवेदाश्चेति वेदशब्दः कर्मार्थको मतः ॥
जानात्यर्थः करोतिश्च सूत्रितश्शब्ददर्दुरे ।
गत्यर्थाश्चापि बुद्ध्यर्था इति न्यायोऽपि सम्मतः ॥
योऽश्वमेधेन यजते य एनं वेद चेत्यपि ।
समप्रधाननिर्देशस्स्थूलसूक्ष्मनिबन्धनः ॥
तं समन्वारभेते द्वे ये विद्याकर्मणी इति ।
वेदान्तवादोऽप्यत्रैव संधिमिच्छति तत्त्वतः ॥
प्राकट्यं व्यवहारो वा संवित्तिर्विषयस्य वा ।
तथाऽऽवरणभङ्गो वा ज्ञानस्य फलमुच्यते ॥
तथाच तदवच्छिन्नव्यापारो धातुबोधितः ।
ततश्च पाकादितुल्यं ज्ञानं स्यात्सर्वसंमतम् ॥
वाचिकैः पक्षिमृगता मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैः याति स्थावरतां नरः ॥

इत्यत्र मानसं कर्म ज्ञानं हि मनुनोदितम् ।
उपासनात्मके कर्मणीतिच क्वचिदुच्यते ॥
4 ततः कर्माङ्गकं ज्ञानं ज्ञानाङ्गं कर्म चेत्यपि ।
विवादोऽपि स्थूलसूक्ष्मभेदात्प्राधान्यलिप्सया ॥
ततश्च विस्तरस्तस्य स्फुट एवाहि धीमताम् ।
इत्थं तत्त्वं सूक्ष्मदृष्ट्या सूचितं बुद्धिकर्मणोः ॥
अनाग्रहदृशामत्र सामरस्यं निराकुलम् ।
परिज्ञानाद्भवेन्मुक्तिरेतदालस्यलक्षणम् ॥
आक्षिपात्रं भवेद्विद्वान् कर्मणामिति कीर्तनम् ।
प्राधान्यतोऽतिवादास्स्युरिति सर्वं समंजसम् ॥

## (120) प्रत्यक्षप्राबल्यवादः

1 प्रमाणानां विरोधो हि मिथस्संपरिदृश्यते ।
प्रत्यक्षयोरागमयोः तथाचैवानुमानयोः ॥
प्रत्यक्षागमयोश्चापि तथाऽध्यक्षानुमानयोः ।
तथाऽनुमानागमयोः अन्यत्राप्येवमूह्यताम् ॥
तत्र प्राबल्यदौर्बल्यचिन्तेत्थं तीर्थकृन्मता ;
तत्र प्रत्यक्षैकमानवादिसिद्धान्तसंग्रहः ॥
प्रत्यक्षं हि प्रमाणानां प्रथमं सर्वसम्मतम् ।
तत्रापि दुष्टकरणमूलं नार्हति मानताम् ॥

यादृच्छिकात्तु संवादाल्लिङ्गादौ मानताभ्रमः ।
वस्तुतस्तादृशी बुद्धिः प्रत्यक्षेऽन्तर्भवत्यपि ॥
औषधायस्सूर्यचन्द्रकान्तादिन्यायतोऽखिलः ।
विषघ्नमन्त्रयन्त्रादिफलसंवाद इष्यते ॥
प्रत्यक्षं तदधीनं चाप्यन्वयव्यतिरेकयोः ।
दर्शनं चावलम्ब्येत्थं शास्त्रं लौकायतं मतम् ॥
लोकसिद्धानुमानादौ क्वचित्प्रामाण्यमिष्यते ।
नैतावताऽतीन्द्रियाणामर्थानां सिद्धिसंभवः ॥
नीतिशास्त्रं स्तेयशास्त्रं कामशास्त्रं च तादृशम् ।
समन्वेत्यत्र सिद्धान्ते प्रत्यक्षैकावलम्बिनि ॥
नैवार्हतीदं प्रत्यक्षं बाधं केनापि हेतुना ।
प्रत्यक्षेण पुनर्बाधः प्रस्फुटस्सर्वसंविदाम् ॥
2 इति प्रत्यक्षसिद्धान्तेऽध्यक्षप्राबल्यनिर्णयः ।
ये पुनः कल्पनापोढनिर्विकल्पैकवादिनः ॥
तेषां तु निर्विकल्पस्य प्राबल्यं पूर्ववन्मतम् ।
तत्साधनं च लिङ्गेन निश्चयेनेत्यनूदितम् ॥
निर्विकल्पस्य विषयः स्वलक्षणमितीरितम् ।
शब्दलिङ्गेन्द्रियभवः विकल्पः दुर्बलो मतः ॥
निर्विकल्पस्य विषयं सन्मात्रं ये विदुर्बुधाः ।
शब्दादप्यस्य चोत्पत्तिं निर्बाधामुपयन्ति ते ॥

3 प्रत्यक्षाद्वैतसिद्धान्तेऽध्यक्षप्राबल्यवर्णनाम् ।
हसन्ति लौकिका यस्मात्स्वयं स्वकुचमर्दनम् ॥
सर्वेष्वपि प्रमाणेषु नूनमाभाससंभवः ।
तस्य मूलं च करणदोष इत्यपि निर्णयः ॥
तद्विज्ञानं तु बाधादिनिबन्धनमिति स्थितम् ।
क्वचित्स्वारसिको बाधः कुत्रचिद्यौक्तिको मतः ॥
प्रथमश्शुक्तिरूप्यादौ ज्वालाभेदे त्वनन्तरः ।
प्रायशो विभ्रमा एते सर्वेषामात्मसाक्षिकाः ॥
शुक्तिकारजतभ्रान्तिः मृगतृष्णाभ्रमस्तथा ।
पीतश्शङ्खः द्वौ च चन्द्रौ स्थाणुः पुरुष इत्यपि ॥
अयो दहति वक्त्रं च मालिनं स्फाटिकोऽरुणः ।
स्वप्नो माया च गन्धर्वनगरं चेति विभ्रमाः ॥
देहात्मविभ्रमः खे च तलमालिन्यविभ्रमः ।
रवीन्दुमण्डलादौ च ख्यातः प्रादेशिकभ्रमः ॥
प्रात्यक्षिकभ्रमा एते एवं मानान्तरेष्वपि ।
परीक्षकाणां विदिताः तत्रैवं निर्णयक्रमः ॥
इन्द्रियेण यथा ज्ञानं तथा लिङ्गादिना सदा ।
ज्ञानमुत्पद्यते पुंसां न विशेषोऽत्र कश्चन ॥
निमित्तशिल्पमन्त्रायुर्ज्योतिस्स्वप्नहृदादिषु ।
अन्वयव्यतिरेकादेरगम्ये विषये बुधाः ॥

संवाददर्शनात्प्राय: विषये पारलौकिके ।
अतिशङ्कां न कुर्वन्ति श्रद्दधाना: श्रुतिस्मृती: ॥
असत्यपि परे लोके त्याज्यं कर्माशुभं विदु: ।
यदि न स्यात्तदा किं स्यादस्तिचेन्नास्तिको हत: ॥
याद्दच्छिकश्चेत् संवाद: क्वचिद्बाधादिदर्शनात् ।
प्रत्यक्षेऽपि तथा ज्ञातुं शक्यते युक्तिचिन्तकै: ॥
तस्याप्यप्रामाण्यपक्षे व्यवहारो विलीयते ।
सर्वत्र भ्रान्तिक्लृप्तिश्चेत्कल्पको न विशिष्यते ॥
प्रत्यक्षमनुमानं च यथा मानं तथाऽऽगम: ।
उपजीव्यविरोधेन ज्येष्ठं ताभ्यां न हन्यते ॥
तत्र यत्सावकाशत्वात् अन्यथासिद्धिमश्नुते ।
तद्दुर्बलं स्यान्निरवकाशं तु प्रबलं मतम् ॥
अनन्यथासिद्धमेतत्, अवकाशस्त्वसौ मत: ।
विषयान्तरलाभाख्य: क्वचित्स्यात्पदहोमवत् ॥
अथाप्रमाणकोऽप्यन्तर्भाव: रज्जूरगादिषु ।
एवं प्रायेण विश्वस्य सत्यतावादिनो विदु: ॥
4 अथ प्रपञ्चमिथ्यात्ववाद्यविद्याविदां मते ।
प्राबल्यरीतिरेषोक्ता निर्विशेषपरश्रुते: ॥
दोषमूलप्रसूतत्वादन्यथासिद्धिसंभवात् ।
भेदावलम्बादध्यक्षं शास्त्रबाध्यमितीर्यते ॥

तत्र दोषोऽनादिभेदवासनेति विनिर्णयः ।
निषेद्धृशास्त्रप्रामाण्यमन्यथानोपपद्यते ॥
अनादिनिधनाच्छिन्नसंप्रदायसमागतम् ।
संभावनानर्हदोषगन्धं शास्त्रं प्रतीयते ॥
ज्योतिष्टोमेनेतिशास्त्रं यत्तु भेदावलम्बि तत् ।
बाध्यते मोक्षशास्त्रेण परेणापच्छिदानयात् ॥
मोक्षशास्त्रेऽपि सगुणब्रह्मणो बोधकं तु यत् ।
बाध्यते निर्गुणपरशास्त्रेणापि परेण तत् ॥
5 अथ प्रकारान्तरेण विरोधविनिवारणा ।
असन्निकृष्टविज्ञानं शब्दविज्ञानतश्च यत् ॥
तच्छास्त्रमित्यौपवर्षं लक्षणं शबरोदितम् ।
असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ॥
ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपिवा ।
इति कौमारिलव्याख्या पठ्यते श्लोकवार्तिके ॥
तद्विरोधात्सानुशयैः अन्यथा प्रोच्यते यथा ।
प्रत्यक्षादिविरोधे हि बलीयच्छास्त्रमिष्यते ॥
न विरोधं प्रपश्यामोऽध्यक्षं सन्मात्रगोचरम् ।
भेदे किंचिन्न प्रमाणं नैपुण्येन निरूपणे ॥
घटोऽस्तीतिपटोऽस्तीतिप्रतीतिव्यवहारयोः ।
अस्तित्वमध्यक्षभास्यं भ्रान्तिभास्यं घटादिकम् ॥

अस्तित्वमेव सामान्यं घटादिर्भेदलक्षणः ।
भिन्नकालज्ञानफलौ व्यवहारौ तयोर्मतौ ॥
शास्त्रं निषेधरूपेण तन्मात्रे पर्यवस्यति ।
नातः प्राप्तार्थत्वमूलमानर्थक्यं प्रसज्यते ॥
इत्यस्य विस्तरः प्रायश्श्रीभाष्यादावनूदितः ।
स निर्विकल्पैकमानवादसिद्धान्तवर्त्मगः ॥

6 विशेषमात्रविषयनिर्विकल्पकपद्धतौ ।
सामान्यमात्रविषयविदामाक्षेपसंग्रहः ॥
विचित्रवासनासिद्ध्यै विशेषोपगमो वृथा ।
विशेषाणां वासनासु हेतुताया असंभवात् ॥
तथात्वे शुक्तिरजतवासनादेरसंभवः ।
तत्तद्विषयविज्ञप्तिप्रवाहो हेतुरिष्यते ॥
आपणे सत्यरजतं यद्यप्यस्ति तथापि हि ।
मिथ्यार्थज्ञानहेतुत्वं वासनासूररीकृतम् ॥
पूर्वपूर्वभ्रमोपात्तैस्संस्कारैर्विविधैरिह ।
विकल्पवैचित्र्यसिद्धौ किं दृष्टैः कल्पितैश्च किम् ॥
अतो विकल्पविषयाः विचित्रा न स्वलक्षणाः ।
कल्पने वा लाघवाय विचित्राद्वैतमिष्यताम् ॥
नचानेकस्वभावत्वमेकस्यात्र विरोधकृत ।
रूपगन्धरसस्पर्शस्वभावाद्यणुवादिनाम् ॥

तस्माच्छुद्धं विचित्रं वाऽद्वैतं स्यात्तत्र गोचरः ।
विस्तरश्शतदूषण्यां वाद एकादशे कृतः ॥

(121) शास्त्रप्राबल्यम्.

1 अथेदानीमुक्तियुक्त्योः बलाबलविचिन्तना ।
केचिदुक्त्येकशरणाः केचिद्युक्त्येकसंश्रयाः ॥
ये पूर्वोत्तरमीमांसानिष्णाताः श्रुतिसंश्रयाः ।
शास्त्रानुकूलां युक्तिं ते मानमिच्छन्ति नान्यथा ॥
येतु वैशेषिकास्सांख्याः नैयायिकमुखाः परे ।
सर्वे ते युक्तिशरणाः युक्त्यधीनागमान्विताः ॥
उभयेषामपि मतं तत्तदुक्त्या प्रकाश्यते ।
तत्त्वं ततश्चोक्तियुक्त्योः स्पष्टमत्र भविष्यति ॥
चतुर्विधास्ते सुगताः दिक्षु तादृक्षु निष्ठिताः ।
ऊर्ध्वायां दिशि चार्वाकः सर्वेऽप्यन्तरवस्थिताः॥
तत्र प्रत्यवतिष्ठन्ते ये त्वेकादिशि संस्थितान् ।
समाक्रान्ता भविष्यन्ति ते ह्यन्यदिगवस्थितैः ॥
नहि शक्यं लङ्घयितुं पञ्जरान्तरवस्थितिः ।
केवलं युक्तिचातुर्यैरित्येके श्रुतिमाश्रिताः ॥
2 एतदेव वचः प्रोचुः पूर्वे पूर्वेभ्य इत्यपि ।
ब्राह्मणे श्रूयते चैवं तथैवोपनिषत्स्वपि ॥

अवरेण नरेणैष प्रोक्तो ज्ञातुं न शक्यते ।
अनन्यप्रोक्त एतस्मिन्गतिर्नास्त्यन्यतो यतः ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।
अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥
अस्तीत्येवोपलब्धव्यः तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥
एषा तर्केण न मतिरापनेयेति चाब्रवीत् ।
मृत्युः कठोपनिषदि शिष्याय नचिकेतसे ॥
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ।
इत्थं तलवकारीयैः श्रूयते चापि वाजिभिः ॥
चोदनालक्षणं धर्मं जैमिनिस्तदसूत्रयत ।
ब्रह्मापि शास्त्रयोनीति ह्यब्रवीद्बादरायणः ॥
3 ततस्तर्काप्रतिष्ठानादित्यप्याह स्वयं स्फुटम् ।
युक्तिस्त्वनिर्णीतबलाबलेति न्यायवित्तमाः ॥
यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥
बहुकृत्वोऽपि वस्त्वात्मा युक्त्यैव परिनिश्चितः ।
देशकालादिभेदेन ज्ञायते पुनरन्यथा ॥
वेदशास्त्राविरोधी च तर्कश्चक्षुरपश्यताम् ।
रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥

वाक्यात्प्रकरणादर्थादौचित्याद्देशकालतः ।
शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥
शब्दानामेव सा शक्तिः तर्को यः पुरुषाश्रयः ।
स शब्दानुगतो न्यायोऽनागमो ह्यनिबन्धनः ॥
इति भर्तृहरिः प्राह वाक्यपद्यां विचक्षणः ।
श्रुत्यर्थस्यानुकूलो यः स न्यायस्तदभीप्सितः ॥
तस्माच्छब्दः तर्कनिघ्न इति नैवावधारयेत् ।
तात्पर्यनिर्णयार्थो यस्तर्कोऽसौ शब्दलक्षणः ॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥
वाच्यर्था निहितास्सर्वे वाङ्मूला वाग्विनिस्सृताः ।
तां तु यस्स्तेनयेद्वाचं स सर्वस्तेयकृन्नरः ॥
तस्माद्विरोधे धर्मस्य निश्चित्य गुरुलाघवम् ।
यतो भूयस्ततो विद्वान् कुर्याद्धर्मविनिर्णयम् ॥
मनुव्यासप्रभृतयः क्रमादेवं वचोऽब्रुवन् ।
दुस्तर्को दूरतस्त्याज्यः विपरीतार्थबुद्धिकृत् ॥
तस्माद्विरुद्धसंस्कारशिक्षितानां परस्परम् ।
विवादो नहि विश्राम्येद्युगानामयुतैरपि ॥
अतो विरुद्धसंस्कारोपरोधायैव भावना ।
संप्रदायानुरोधेनाभ्यसनीयेति देशना ॥

यावद्यावद्विवादाय मुक्तकं दीयते मनः ।
अनवस्थादिदोषेण तावत्तावद्विहन्यते ॥
अतएवाग्रहाविष्टाः सहसा नोपदेशतः ।
स्वमतं न त्यजन्तीति संशयः प्राक्प्रदर्श्यते ॥
संदिग्धास्ते तु सुकराः परिवर्तयितुं नराः ।
इत्येवं रूढसंस्कारः शिथिलीक्रियते बुधैः ॥
4 ननु सर्वत्र सिद्धान्ते प्रायेण व्यवहारतः ।
लाघवन्यायसहितात्पदार्थपरिशुद्धयः ॥
स एव लाघवन्यायः लौकिकस्सर्वसम्मतः ।
पश्वादयोऽप्यार्जवेन धावन्ति ग्रासतत्पराः ॥
एकमात्रालाघवेन पुत्रोत्सवसुखं बुधाः ।
मन्यन्त इति सिद्धान्तः वैयाकरणसम्मतः ॥
तथा लाघवतर्कानुगृहीतो यः प्रवर्तते ।
विचारस्स हि मीमांसेत्याहुर्वैदिकसूरयः ॥
लाघवेनैव तर्केण पदार्थानां व्यवस्थितिम् ।
निरूपयन्ति धीमन्तः तार्किका अपि यौक्तिकाः ॥
सैषा लाघवबुद्धिस्तु वासनामनुवर्तते ।
वासना नाम संस्कारः स दृढो यत्र यादृशः ॥
तादृशस्तत्र फलति नहि निम्बो मधुद्रवः ।
तस्माद्वासनया वस्तुसिद्धिर्बौद्धेति सिध्यति ॥

5 अत्रोच्यते संप्रदायो नाम सर्वगुरुर्महान् ।
परंपरासमायातोपदेशस्सोऽभिधीयते ॥
आम्नाय इत्यादिशब्दाः तत्पर्यायाः प्रकीर्तिताः ।
सत्संप्रदायरहितशास्त्रैरर्थस्य निर्णयः ॥
दुष्करः तत्सदाचार्यसंप्रदायपरिग्रहः ।
शास्त्रामूलस्संप्रदायश्शास्त्राननुमतोऽपिवा ।
भ्रमादिसंभावनया बाह्यतुल्यो मतो बुधैः ॥
स च सन्नित्यसंश्चेति द्विविधः प्रथमोऽत्र नः ।
द्वितीयस्तु परेषां स्यात् नियमो हेतुदर्शनात् ॥
अधर्मेन्द्रियदोषाभ्यां दुस्तर्काभ्यासतोऽपिवा ।
दुर्व्याप्तेरनुसन्धानाद्विप्रलम्भकवाक्यतः ॥
तत्त्वाग्रहेण सहितात् अतत्त्वग्रहसम्भवः ।
स एव संप्रदायश्चेत् असंत्स्यादिति नः क्रमः ॥
परेषामथ सिद्धान्ते हेतुदर्शनमुच्यते ।
अनन्यगतिकाः स्वैररसिका जीविकार्थिनः ॥
तथा पाषण्डिसंसर्गाः कुतर्काभ्यासिनोऽलसाः ।
एवमादिप्रसिद्धास्ते सूरिभिः प्रकटीकृताः ॥
हेतवोऽनन्यथासिद्धाः वीक्ष्यन्तां तन्त्रवार्तिके ।
प्रतिमाजल्पनं शाखाभङ्गः पाषाणपाटनम् ॥
इत्यादिभिः कुत्सिताभिः सिद्धिभिर्वञ्चिताः परे ।

हेतुदर्शनशून्या ये ते सन्त्येव महाजनाः ॥
न महत्ता देशतो वा कालतो वापि शक्तितः ।
आकारतो वा संख्यातः नान्यस्मादपि कारणात् ॥
एवं विशेषं पश्यन्तः तुष्यन्तस्सन्ति वैदिकाः ।

(122) युक्तिप्राबल्यम्.

1 एवं वैदिकसिद्धान्तसंप्रदायस्य संग्रहः ।
अथ यौक्तिकसिद्धान्तहृदयं संप्रकाश्यते ॥
अभ्यासात्प्रतिभाहेतुः शब्दः सर्वैरपि स्मृतः ;
बालानां च तिरश्चां च यथार्थप्रतिपादने ॥
आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥
प्रमाणत्वेन तां लोकः सर्वः समुपगच्छति ।
व्यवहाराः प्रवर्तन्ते तिरश्चामपि तद्वशात् ॥
स्वरवृत्तिं विकुरुते मधौ पुंस्कोकिलः कथम् ।
जन्त्वादयः कुलायादेः करणे शिक्षिताः कथम् ॥
आहारप्रीतिविद्वेषप्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥
इतिहि प्रतिभावादिवार्ताक्षौदुम्बरायणाः ।
प्रतिभायास्तु माहात्म्यं वर्णयन्तीति विश्रुतम् ॥

वाक्यपद्यामपि विधिविवेके चाभिसूचितम् ।
हरिणा मण्डनेनापि सर्वसारार्थदृश्वना ॥
तस्मात्सर्वोऽभ्युपगमः प्रतिभामूल इष्यते ।
न शब्दः प्रतिभाहेतुः स्वातन्त्र्यमुपगच्छति ॥
शास्त्राणां चापि तात्पर्यनिर्णयोऽभ्यासमूलकः ।
तस्माद्यौक्तिक एवार्थः स्थापितश्शब्दमूर्धनि ॥
शब्दपृष्ठस्थितन्यायसहस्राधिक्रियात्मके ।
शास्त्रेऽपि न्यायलभ्योऽर्थः शास्त्रसिद्ध इतीष्यते॥
2 अथ शास्त्रेण सिद्धोऽर्थो यदि युक्त्या दृढो भवेत् ।
एवं स्यात्कृपणश्शब्दः नेष्टोऽसंप्लववादिनाम् ॥
अत्रोदाहरणं स्पष्टमेषोऽप्यर्थो भविष्यति ।
वेदान्तसिद्धान्ताक्षेपः तत्त्वटीकानिरूपितः ॥
स्वप्रकाशा मतिः धीत्वात् दृश्यत्वाद्विमतं मृषा ।
इत्याद्यैरेव सिद्धेऽर्थे कृतं त्रय्यन्तचिन्तया ।
ननुचोपासनादीनां सिद्ध्यै तच्चिन्तनं यदि ।
तच्चेदद्वैतधीसिद्ध्यै वृथा स्यात्तद्विरोधतः ॥
फलान्तरार्थं तच्चिन्ता यदीष्येत तथासति ।
मोक्षप्रधानशास्त्रत्वं गतं शारीरकस्य तत् ॥
श्रुतिवाक्यप्रसूता धीर्बाधिका नानुमानिकी ।
इति शक्यं न वदितुं अदृष्टस्यानपेक्षणात् ॥

अनुमानाच्च शब्दाच्च रज्जुसर्पादिविभ्रमे ।
अविशेषेण बाधो हि दृष्टस्तद्वदिहापिच ॥
प्रत्यक्षं शब्दजन्यं तु दुस्साधं चापि निष्फलम् ।
परोक्षादपि शब्दोत्थाद्बाधसंभवदर्शनात् ॥
नचानुमानाशक्तस्य वाक्यमित्यपि युज्यते ।
सर्वमानान्तरानर्हे शास्त्रप्रामाण्यसाधनात् ॥
अनेकनियमोपेतवाक्यचिन्ताविधेर्वरम् ।
लोकदृष्ट्यनुसारेण युक्तिचिन्तेति निर्णयः ॥
3 ब्रह्मापि जगतो हेतुः युक्तिभिः किल साध्यते ।
प्रधानं जगतो हेतुः प्रसिद्धं ह्यानुमानिकम् ॥
श्रोतव्यश्चाथ मन्तव्य इति तर्कसहायताम् ।
श्रुतिरेव स्वयं प्राह तस्मात्तर्को विशिष्यते ॥
केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥
इत्थं बृहस्पतिः प्राह स्मृतितन्त्रे व्यवस्थितिम् ।
पूर्वापरानुमानेन लोको युक्तौ प्रतिष्ठितः ॥
अबलाबालगोपालहालिकप्रमुखा अपि ।
बुद्ध्यन्ते नियतादर्थादर्थान्तरमसंशयम् ॥
अनुमानापलापे तु प्रत्यक्षादपि दुर्लभा ।
लोकयात्रेति लोकास्स्युः चित्रिता इव निश्चलाः ॥

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियोगशतेनापि सोऽन्यथा नोपपद्यते ॥
तस्माद्युक्त्यैव जगतो व्यवहारो व्यवस्थितः ।
युक्तिहीनव्यवहृतावुन्मत्त इति गीयते ॥
तस्माददृष्टतत्त्वानां सापराधं बहुच्छलम् ।
दर्शनं चापि वचनं नित्यमेवानवस्थितम् ॥
ऋषीणां दर्शनं यच्च तत्त्वे किंचिदवस्थितम् ।
न तेन व्यवहारोऽस्ति न तच्छब्दनिबन्धनम् ॥
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
तत्र नास्ति तलं व्योम्नि न खद्योतो हुताशनः ॥
मधुरं तिक्तरूपेण श्वेतं पीततया तथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥
तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः ।
पर्वतादीन्विजानन्ति भ्रमेण भ्रमतश्च तान् ॥
मण्डूकवसयाऽक्ताक्षाः वंशानुरगबुद्धिभिः ।
गृह्णन्तीत्यादिविषयः श्लोकवार्तिकविस्तृतः ॥
तस्मात्प्रत्यक्षमप्यर्थं विद्वानीक्षेत युक्तितः ।
न दर्शनस्य प्रामाण्यात् दृश्यमर्थं प्रकल्पयेत् ॥
इममर्थं भर्तृहरिः वाक्यपद्यां न्यदर्शयत् ।
न्यायवार्तिकतात्पर्यटीकाकृद्वचनं यथा ॥

प्रत्यक्षकलितं चार्थं बुभुत्सन्तेऽनुमानतः ।
तर्कसिद्धान्तरसिका इति पूर्वैरुदाहृतम् ॥

4 इदानीमिव सर्वत्र दृष्टान्नाधिकमिष्यते ।
उपलम्भानुसारेण व्यवस्थासिद्धिरीदृशी ॥

सर्वदाचापि पुरुषाः प्रायेणानृतवादिनः ।
यथाऽद्यत्वे न विस्रम्भः तथाऽतीतार्थकीर्तने ॥

नच पुंवचनं सर्वं सत्यत्वेनावगम्यते ।
वागिह श्रूयते यस्मात्प्रायादनृतवादिनी ॥

इति च श्रूयते श्लोकवार्तिके तन्त्रवार्तिके ।
कुमारिलमहाप्राज्ञमुखाल्लोकोत्तरं वचः ॥

सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।
तावुभौ यदिसर्वज्ञौ मतिभेदः कथं तयोः ॥

न ह्याप्तवादा नभसो निपतन्ति महासुराः ।
युक्तिमद्वचनं ग्राह्यं सर्वैरपि परीक्षकैः ॥

सर्वैर्दार्शनिकैः लोके शास्त्रं किञ्चिन्निधीयते ।
तत्प्रामाण्ये विवादस्तु वादिनामत्रशिष्यते ॥

प्रमाणान्तरदृष्टं हि शब्दोऽन्यं प्रापयेत्सदा ।
स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥

नूनं तत्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।
बुद्धिस्साक्षाददृष्टेऽपि युक्ताऽर्थे पुरुषोक्तितः ॥

नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।
वचसस्सत्यता दृष्टा सर्वशब्देष्वयं विधिः ॥
बुद्धाद्यन्तेवासिनां तु बुद्धाद्यास्सर्ववेदिनः ।
तत्प्रणीतानि शास्त्राणि प्रमाणानीति ते विदुः ॥
ईश्वरेणोपदिष्टास्स्युः वेदास्सकलवेदिना ।
प्रमाणमाप्तवाक्यत्वादित्याहुः किल तार्किकाः ॥
अपौरुषेया वेदास्स्युः प्रमाणमिति वैदिकाः ।
दूषणं भूषणं चापि प्रवर्धते दिनेदिने ॥
अपिचापौरुषेयेषु वेदेषूपनिषत्सु वा ।
यदा तात्पर्यभेदास्स्युः किं नित्यागमसंपदा ॥
5 पार्थसारथिमिश्राणां या पुनश्शास्त्रदीपिका ।
तस्यां ज्ञेयं पद्यमिदं स्फुटं बह्वर्थगर्भितम् ॥
प्रबोधचन्द्रोदयेऽपि कृष्णमिश्रविनिर्मिते ।
पौर्वापर्यविचारस्तु तिष्ठत्वत्र न चादरः ॥
प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते ॥
इति, तैस्तु पुराणस्थं नूनं नालोचितं वचः ।
तदत्र लिख्यते किंचिन्मध्यस्थैरवधार्यताम् ॥
नैतद्युक्तिसहं वाक्यं हिंसा धर्माय चेष्यते ।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥

यज्ञैरनेकैर्देवत्वं अवाप्येन्द्रेण भुज्यते ।
शम्यादि यदि चेत्काष्ठं तद्वरं पत्रभुक्पशुः ॥
निहितस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किंनु तस्मान्न हन्यते ॥
तृप्तये जायते पुंसः भुक्तमन्येन चेत्ततः ।
दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥
एवं विनिन्दां वेदानां यथा तैर्विनिवार्यते ।
तथोपनिषदां निन्दा न निवार्येत किं परैः ॥
6 तद्युक्त्यधीनस्सकलः संरम्भः खलु वादिनाम् ।
इत्याहुरिह युक्तिज्ञाः ये विपश्चिदपश्चिमाः ॥

(223) विचारनिरूपणम्.

1 विचारो द्विविधो लोके फलभेदाद्व्यवस्थितः ।
तत्त्वनिर्णयसिद्ध्यर्थः विजयैकार्थ इत्यपि ॥
तत्राद्यो द्विविधः पूर्वः उपदेशात्मको मतः ।
द्वितीयो न्यायमूर्तिस्स्याद्यो वादो गुरुशिष्ययोः ॥
अनन्तरोऽपि द्विविधः विजिगीषुकथात्मकः ।
जल्प एको वितण्डा तु द्वितीय इवि निर्णयः ॥
वादिनिग्रह एवात्र नैव तत्त्वविनिर्णयः ।
इति जानन्तोऽपि कथां वितण्डामेव केवलाम् ॥

आश्रित्य परपक्षांस्तान् खण्डयन्ति विपश्चितः ।
वितण्डामेव च कथामाश्रित्य परखण्डनम् ॥
वक्तव्यमिति हि प्राह श्रीहर्षो विश्वखण्डकः ।
अद्वैतसिद्धावपि च मधुहन्तृसरस्वती ॥
वादजल्पवितण्डानां कथामन्यतमामपि ।
आश्रित्य परपक्षाणां प्रतिक्षेपं ब्रवीत्यपि ॥
एवंच वादिविजयमात्रेणैव समीहितम् ।
सिषाधयिषतीत्येव कुतस्तत्त्वविनिर्णयः ॥
यद्यपि न्यायसिद्धान्ते ताभ्यां निग्रह ईप्सितः ।
न तं तत्त्वव्यवस्थायां प्रमाणं बहवो विदुः ॥
तदेतस्मात्संप्रदायसंस्कारो मूलकारणम् ।
विचारविप्लवस्सर्वः ताडयते वाद्यडिण्डिमः ॥
2 अत्र केचन तत्त्वज्ञाः युक्तिज्ञपरिशीलनात् ।
अभिप्रायमिमं कंचिद्विशदीकुर्वते यथा ॥
आदौ सांख्याः सर्ववस्तुनित्यतासाधनोद्यताः ।
क्षणभङ्गं निरुन्धन्ति युक्तिजालैर्मनोहरैः ॥
गत्वागत्वाऽथ ते योगाचारसिद्धान्तसागरे ।
निमज्जन्ति यतो व्यक्तिरुत्पत्तिश्चाविलक्षणा ॥
उत्पत्तिनाशयोरस्तिनास्त्योरप्येकता मता ।
विज्ञानवादसिद्धान्तः पर्यायेणायमेव हि ॥

सांख्याः स्वभावसिद्धान्तमङ्गीकुर्वन्ति भूयसा ।
अर्धं तेनाकस्मिकतावादमेते समाश्रिताः ॥

3 वैशेषिकाद्या विज्ञानवादोद्धूननतत्पराः ।
क्षणवादे निमग्नास्स्युः प्रतिक्षणविशेषतः ॥
यद्यप्यात्मादयो नित्याः पदार्थाः स्वीकृताः पुनः ।
तथापि धर्माः तेषां स्युः क्षणिका इति तन्मतम् ॥
धर्मधर्म्यैक्यपक्षे तु क्षणवादः प्रतिष्ठितः ।
पीलुपाके तु विस्पष्टः क्षणसिद्धान्तसङ्ग्रहः ॥
भूतचैतन्यभङ्गाय पीलुपाकस्समाश्रितः ।
प्रतिक्षणं देहभेदे स्मरणं नोपपद्यते ॥
क्षणभङ्गोपरोधाय पिठरे पाक आदृते ।
भूतचैतन्यवादस्तु तदानीं स्याद्दुरुद्धरः ॥
अत एव प्रसिद्धास्तेऽप्यर्धवैनाशिका इति ।
निरन्वयोत्पत्तिनाशाधारा हि क्षणभङ्गिता ॥

4 पूर्वमीमांसका वेदापौरुषेयैकदृष्टयः ।
प्रायो लौकायतं मार्गं संश्रिता इति कीर्तिताः ॥
प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।
तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥
इति वार्तिककारोऽपि प्राहारम्भे कुमारिलः ।
अथाप्ययपयशस्तेषामद्यापि न हि शाम्यति ॥

विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।
प्रीतिः फलप्रदानं च देवतानां न विद्यते ॥
देवानचेतनानेवं ये विदुस्तान्महाशयान् ।
अर्धलोकायतानाहुरत एवेतरे बुधाः ॥
सर्वेषामपि शब्दानामाहुः सर्वार्थशक्तताम् ।
सर्वेषां विदुरर्थानां अशेषपदशक्यताम् ॥
सर्वासामपि जातीनां स्याद्यावद्व्यक्तिगामिता ।
व्यक्तीनामपि सर्वासां सर्वजात्यनुयोगिता ॥
एष सार्वात्म्यसिद्धान्तो नैरात्म्यान्न विशिष्यते ।
सामान्यलक्षणे सैषा विश्रान्तिर्वा स्वलक्षणे ॥
कर्मैकं बुद्धिरप्येका जगत्येकस्सितो गुणः ।
वर्णोऽप्येको गकारादिः सर्वैक्यं किं न रोचते ॥
तदानीमपि दुर्मोचा भवेत्सौगतवागुरा ।
विशेषवादस्सामान्यवादो वा दृष्टिभेदतः ॥
5 ये तु स्वाभाविकं भेदाभेदमिच्छन्ति शास्त्रतः ।
तेषां विरोधो नास्त्येव वस्तु नानात्मकं यतः ॥
यादृशं ज्ञायते वस्तु यदि तादृशमेव तत् ।
विज्ञानवादसिद्धान्तोऽप्येवमेव हि वस्तुतः ॥
प्रातिभासिकासिद्धान्तोऽप्यसावेव हि वस्तुतः ।
स चानेकान्तवादोऽपि भवेत्पर्यायतो विदाम् ॥

6 अज्ञानादिह संसारं ज्ञानान्मोक्षं च ये विदुः ।
सर्वे ते पर्यवस्यन्ति प्रायस्सौगतसोदराः ॥
अविवेकेन तादात्म्यं पुंप्रकृत्योर्न वस्तुसत् ।
साऽस्मितेत्युच्यते क्लेशः सर्वानर्थस्य कारणम् ॥
येषां प्रपञ्चः तन्मूलः बुद्धिमूलस्तु वस्तुतः ।
विज्ञानवादिसिद्धान्ताविशेषो वस्तुवादिनाम् ॥
संसारमोक्षयोः कर्म कारणं ये विदुः परे ।
प्रायो भौतिकसिद्धान्तवादस्तेषां महात्मनाम् ॥
ये सर्वेश्वरसंकल्पायत्तं तदुभयं विदुः ।
संकल्पो बुद्धिरेवेति दुर्लङ्घ्या बुद्धवागुरा ॥
यद्यत्राज्ञानशब्देन चान्यथाज्ञानमुच्यते ।
विज्ञानवादस्स्यात्तस्मात् ज्ञानाभावस्स उच्यते ॥
तस्यापि तुच्छरूपत्वे तुच्छं चापि जगद्भवेत् ।
भावान्तराभाववादः स्वीकृतः कापिलादिभिः ॥
अभावोऽप्यर्थ एवेष्टः तन्मीमांसकतार्किकैः ।
अतएवच ते प्राहुरभावं मोक्षसाधनम् ॥
अनिर्वाच्यविदश्चातः भावाज्ञानविदोऽभवन् ।
अज्ञानं चेदसत्ख्यातिः ज्ञानाभावोऽथवा पुनः ॥
दुरुद्धरा तुच्छता स्याज्जगतास्त्विति बिभ्यति ।
भावान्तराभाववादं अतः केचित्समाश्रिताः ॥

अन्ये तार्किकसिद्धान्तं प्रायशस्समशिश्रयन् ।
यस्मात्सौगतसिद्धान्तस्सोऽसत्ख्यातौ प्रतिष्ठितः ॥

7 सौगताः सर्वसिद्धान्तखण्डकाः शून्यतत्पराः ।
तेषां वितण्डा ब्रह्मास्त्रं तस्या गतिरुदीक्ष्यताम् ॥

वितण्डावाद्ययमसौ यो माध्यमिकनामकः ।
स्वपक्षस्थापनाहीनः परपक्षविभेदकः ॥

सोऽनुयुक्तः फलं किंचिद्यादिच प्रतिपद्यते ।
सोऽस्य पक्षो भवेत्तेन वैतण्डिककथा हता ॥

अथ न प्रतिपद्येत नायं लौकिक इष्यते ।
नवा परीक्षकः स्यादित्यापद्येत स बुद्धिमान् ॥

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
न तिरश्चामपि जगत्यफला दृश्यते क्रिया ॥

परपक्षप्रतिक्षेपज्ञापनं चेत्प्रयोजनम् ।
ब्रवीत्यसौ तथाऽप्येतत्तादृगेव भविष्यति ॥

यो ज्ञापयति यो वेत्ति येन च ज्ञाप्यते तथा ।
यदपि ज्ञायते तच्चेत् प्रतिपद्येत को हतः ॥

सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।
अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ॥

अथ शून्याद्वैतवादमानिनो हीत्थमभ्यधुः ।
अवलम्ब्य भरं शून्ये कृतार्थाः सुखमास्महे ॥

ये तु तत्त्वं विनिर्णेतुमिच्छन्ति स्वव्यवस्थया ।
भ्राम्यन्ति, तेषु कृपया कृतार्थास्ते भवन्त्विति ॥
अपनेतुं भ्रमं चापि पारार्थ्यात्प्रयतामहे ।
दया हि स्वार्थानपेक्षपरदुःखासहिष्णुता ॥
यदि काचित्प्रतिज्ञा स्यात्तदा दोषविचारणा ।
नास्ति प्रतिज्ञा काचिन्नः तस्मान्नैवास्ति दूषणम् ॥
नातः पर्यनुयोगार्हाः कथंचिदपि वादिभिः ।
इति शून्यैकान्तवादः तत्र स्यादिदमुत्तरम् ॥
मर्यादास्थापनार्थं च मानतर्कौ समुत्थितौ ।
सिंहारण्यवदन्योन्यं गुप्तौ तौ स्वान्यसाधकौ ॥
महीमिवच मर्यादां अनधिष्ठाय शाश्वतीम् ।
पदन्यासो न चोराणां प्रच्छन्नप्रकटात्मनाम् ॥
परमर्यादया ब्रूमः परव्याहतिमित्यसत् ।
स्वव्याघातादिभङ्गानां परानङ्गीकृतिर्यतः ॥
यद्यस्येष्टं तत्तु तस्य प्रयोजनमिति स्थितम् ।
सर्वभूतानुग्रहोऽपि कथं न स्यात्प्रयोजनम् ॥
सोऽस्य पक्षः स सिद्धान्तः वैतण्डिककथा वृथा ।
सर्वशून्यविदां सर्वा धीर्मृषेत्यपि धीर्मृषा ॥
तस्मान्निषेधासिद्धान्तः स्वयमेव विहन्यते ।
विश्वखण्डनसिद्धान्तोऽप्येवमेव हि खण्डितः ॥

तदर्वाग्भिः तथा प्राग्भिः यथेष्टं मतमास्थितैः ।
प्रणिन्ये बहुधा तैस्तैः ग्रन्थरूपविचारणा ॥
यथालोकं यथावेदं वैदिके लौकिकेऽपिवा ।
यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपिवा ॥
एवं सामान्यतस्तत्त्वविचारसरणिस्त्वियम् ।
न निर्गुणं न निर्दोषं जगत्यामस्ति किंचन ॥

(124) बलाबलसारांशः

1 अथायमत्र सारांशः संक्षेपेण विलिख्यते ।
तेन च प्रायशः तत्त्वं ज्ञेयं समरसं सताम् ॥
लोक इत्युच्यते युक्तिः उक्तिर्वेद इतीर्यते ।
अनयोरन्तरं नास्ति यद्यस्त्येतत्प्रसज्यते ॥
लोकातीतं तु विषयं न लोको ज्ञातुमर्हति ।
तथैव लौकिकं वस्तु न वेदो ज्ञापयेदपि ॥
यदि लोको वेत्तुमर्हः तदा लौकिक एव सः ।
लोकश्चेत्सर्वदा लोको भवेत्सर्वत्र सर्वथा ॥
यदि वेदो भवेल्लोकादात्यन्तिकविलक्षणः ।
न तादृशेन वेदेन लोकस्यास्ति प्रयोजनम् ॥
अत एवहि मीमांसाशास्त्रे जैमिनिनोदितम् ।
आनर्थक्यप्रसङ्गेन शब्दैक्यं लोकवेदयोः ॥

प्रमाणं सकलं साङ्गं प्रवृत्तं लौकिकं तु तत् ।
लौकिकस्य प्रमाणस्य मेयं कथमलौकिकम् ॥
तस्मात्तत्त्वमिदं ज्ञेयं विस्पष्टं लोकवेदयोः ।
दृष्टिस्सामान्यतो लोकः दृष्टिर्वेदो विशेषतः ॥
सर्वसाधारणो लोकः वेदोऽसाधारणोऽथवा ।
सूक्ष्मदृष्टिर्वेद एषः लोकस्स्यात् स्थूलदर्शनम् ॥
वेदो वा महतां दृष्टिः लोकोऽन्येषां तु दर्शनम् ।
नूतनो वा भवेल्लोकः वेदस्तु स्यात्पुरातनः ॥
गिरिशृङ्गारोहणेन दर्शनं किं न दर्शनम् ।
चिरेण दर्शनं गर्भगृहे वा किं न दर्शनम् ॥
वेदे श्रद्धाप्रसिद्ध्यर्थं लोको लोकमपेक्षते ।
तथा व्यवस्थासिद्ध्यर्थं लोको वेदमपेक्षते ॥
2 लोको भिन्नरुचिर्भिन्नसंस्कारो भिन्नदर्शनः ।
विचित्रो लौकिकेप्यर्थे किमु वाच्यमलौकिके ॥
अधिकारिविभेदेन सामरस्यं परे विदुः ।
यथाश्रुतधियः केचित् तेषामुक्तिर्विशिष्यते ॥
क्षोदक्षमधियस्त्वन्ये तेषां युक्तिर्गरीयसी ।
संमुग्धबुद्धयः केचित् तेषां संप्लव इष्यते ॥
तस्मात्सर्वैर्दार्शनिकैरुभयं च यथायथम् ।
स्वीकृत्य संप्रदायः स्वः सुदृढीक्रियते तराम् ॥

केचित्तु कालभेदेन सामरस्यं प्रपेदिरे ।
आदौ श्रुतिमयी प्रज्ञेदानीं चिन्तामयी मता ॥
केचित्त्ववस्थाभेदेन विरोधाभावमभ्यधुः ।
बाल्ये श्रुतिः ततो युक्तिः तदन्योन्यसमुच्चयः ।
केचिद्विषयभेदेन विरोधाभावमूचिरे ।
उक्तिः प्रधानविषये युक्तिः तदनुबन्धिनि ॥
नीचाः कलहमिच्छन्ति संधिमिच्छन्ति साधवः ।
इति न्यायस्सामरस्यविदुषां हृदयस्थितः ॥
देशभेदात्कालभेदात्पुंभेदादन्यथाऽन्यथा ।
पर्यवस्यति शास्त्रार्थ इत्याहुः क्रान्तदर्शिनः ॥

(125) उपसंहारः.

1 भूमण्डलेऽस्ति भरतखण्डेऽस्मिन् दक्षिणापथे ।
कर्णाटदेशो विख्यातः महागिरिसरिद्वृतः ॥
प्रायेण पुण्यतीर्थानां प्रभवो देशतो यतः ।
तथैव पुण्यक्षेत्राणां देशो यश्च समाश्रयः ॥
सुवर्णादिखनीनां च रत्नानामपि चाकरः ।
विद्यावीचिसहस्राणां पारावारायते च यः ॥
तत्र यद्वाद्रिनिकटे महाबलशिलोच्चयः ।
कावेरीकपिलानद्योर्मध्ये यस्तरळायते ॥

यमध्यास्ते महादेवी वैष्णवी शक्तिरुत्तमा ।
चामुण्डा यदुसंतानभूभृतां कुलदैवतम् ॥
महीशूरपुरी नाम प्रचकास्ति तदन्तिके ।
सा राजधानी सकलसम्पद्यादवभूभुजाम् ॥
चतसृष्वपि दिक्ष्वस्याः प्रख्यातास्स्युस्सुरालयाः ।
प्राच्यामवाच्यां प्रतीच्यामुदीच्यां च यथाक्रमम् ॥
नरसिंहपुरं चैव तथा गरलपुर्यपि ।
अर्कपुष्करिणीक्षेत्रं तथा श्रीरङ्गपत्तनम् ॥
देवतायतनैश्चैव सत्पुस्तकनिकेतनैः ।
आचार्याणां पीठमठैः उद्यानैर्या विराजते ॥
विशालविद्याशालाभिः वैद्यशालाभिरेव च ।
विश्वविद्यावेश्मभिश्च भ्राजते राजवेश्मभिः ॥
न्यायस्थानैः कृतस्थानैः तेजःस्थानैः जलस्थलैः ।
कर्णाटदेशधरणीरमणीमौळिसन्मणिः ॥
सुगाङ्गसदृशो यस्यां प्रासादः परिशोभते ।
यत्र कर्णाटसिंहाङ्कासनं सद्रत्नशोभितम् ॥
2 यदधिष्ठाय सकलकल्याणगुणभूषणः ।
महाराजोऽवति श्रीमान् कृष्णराजोऽधुना प्रजाः ॥
यादवान्वयवाराशिभवमौक्तिकसन्मणिः ।
यदुराजः कुलपतिरासीदस्य महीभुजः ॥

चतुर्दशे च शतके शालिवाहशके च सः ।
श्रीमन्महीशूरदेशराजाऽऽसीदिति विश्रुतः ॥
स पवित्रात्रेयगोत्रः बह्वृचश्चाश्वलायनः ।
तत्सन्ततौ चतुर्विंशोत्तमाङ्गत्वमुपाश्रितः ॥
शालिवाहशकैकोनविंशेऽथ शतके पुनः ।
सप्तमे हायने जात एष श्रीकृष्णभूपतिः ॥
मोचारसमुचा वाचा नीचीकृतरसान्तरः ।
यशःकुसुमसंदोहवासिताशाऽबलालकः ॥
दयादाक्षिण्यसौलभ्यसौशील्यमहदाश्रयः ।
श्रीमन्महीशूरराज्यसर्वसौभाग्यदायकः ॥
सदाचारपरित्राता दुराचारनिवारकः ।
सर्वभूपशिरःकम्पसंपादकशुभव्रतः ॥
परोपसर्पणक्लेशतारिताश्रितसज्जनः ।
शान्तो दान्तश्च राजर्षिः यस्स्याज्जनकसन्निभः ॥
आशीर्वादाक्षतफलधरश्रुतिशिरःकरः ।
धर्मो विग्रहवानेषः नेषदेषेह वाङ्मृषा ॥
ज्योतिर्मयं खगोलं स्यात् भूगोलं तद्विपर्ययः ।
इति भेदो निराकारि यद्देशे वैद्युतत्विषा ॥
कनकाजलपातोत्थविद्युच्छक्तिसमृद्धितः ।
कनकं खन्यते येन यत्रान्वर्था सरित्कृता ॥

सैषा वसुमती चापि येन राजन्वती कृता ।
सरितस्सागरीभूताः मरवोऽप्युर्वरीकृताः ॥
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ॥
इति वाल्मीकिमुनिना तथा व्यासमहर्षिणा ।
सौहार्देन प्रतिज्ञातं पूरितं भूभुजाऽमुना ॥
बहुना किमिहोक्तेन सर्वविद्वदुपाश्रयः ;
सद्रत्नहारकटकबहुमानितसत्प्रजः ॥
तेन भूपतिवर्येण योऽहं विद्यैकसंश्रयः ।
पण्डितानां रत्नमिति बिरुदेन विभूषितः ॥
भूयस्तथैव च महामहोपाध्यायभूषणम् ।
तदिण्डियाचक्रवर्तिसान्निधेरुपलम्भितः ॥
यदन्तेवासिनो लब्धवर्णाः नानाकलास्वपि ।
भूयो भद्रासनस्थेन तेनैव बहुमानिताः ॥
योऽनेकग्रन्थनिर्माणधुरीणो विश्वविश्रुतः ।
लक्ष्मीपुरंश्रीनिवासाचार्योऽसौ विदुषां मणिः ॥
एकोनविंशशतके पञ्चमे दशकेऽष्टमे ।
आत्मीयैकोनषष्ट्यब्दे यं प्रबन्धं व्यरीरचत् ॥
3 महीशूरमहाराजतुर्यश्रीकृष्णभूपतेः ।
कीर्तिकेतुः मानमेयरहस्यश्लोकवार्तिकम् ॥

तत्सौशील्येनैव शुद्धं तेनैव प्रचयं गतम् ।
किंकुर्वज्जगतामेतत् जीयात्सफलतां गतम् ॥
आकाशस्य स्थितिर्यावद्यावदप्यवनेः स्थितिः ।
तावदस्य स्थितिः भूयात्तमो लोकस्य निघ्नतः ॥
यस्सर्वज्ञः सर्वशक्तः तथा कारुणिकः परः ।
अन्तरात्मा महोदारः वासुदेवस्स तुष्यति ॥
यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् ।
यत्तपस्यामि हे कृष्ण तत्करोमि त्वदर्पणम् ॥
इत्थं लक्ष्मीपुरंश्रीनिवासविद्वन्मणिर्मुदा ।
प्रयोजनपरिच्छेदं समगृह्णीत चान्तिमम् ॥

प्रीयतां भगवान् वासुदेवः.

इति श्रीवत्सकुलकलशजलनिधिकौस्तुभायमानश्रीवेङ्कटार्यतनूभवस्य तातात्म्बागर्भशुक्तिमुक्ताफलायमानस्य श्रीमत्कस्तूरीरङ्गनाथविद्वन्मणिकरुणाकटाक्षसमासादितसारस्वतसर्वस्वस्य श्रीमद्विरक्तराघवार्यचरणानुगृहीतसकलसम्प्रदायरहस्यस्य श्रीमद्राजाधिराजमहीशूरमहीधुर्यतुर्यश्रीकृष्णराजसार्वभौमपरिपोषितस्य महामहोपाध्यायपण्डितरत्नाद्यनेकबिरुदालङ्कृतस्य संस्कृतमहापाठशालानिगमान्तप्रधानोपाध्यायस्य श्रीमतो लक्ष्मीपुराभिजनस्य श्रीनिवासाचार्यस्य कृतिषु मानमेयरहस्यश्लोकवार्तिके प्रयोजनकाण्डः द्वितीयः समाप्तः समाप्तश्च प्रबन्धः.

श्रीः.

# सूचना

---

## मानमेयरहस्यश्लोकवार्तिकम्

इति हि कश्चिन्महाप्रबन्धः सर्वशास्त्रसारसंग्रहरूपः विनैव कालदेशविप्रकर्षं सर्वसिद्धान्तविवेकजनकः नवीन प्रक्रियया संगृह्य मुद्रापितः प्रकाशितश्चास्ति, व्युत्पित्सूनां व्युत्पन्नानां च सोऽयं सम्यगुपकरोतीत्यत्र न कश्चिद्विशयलेशः ॥

अस्य च मूल्यं षट् (६-०-०) रूपकाणि. प्रापणभृतिः पृथगेव.

उपलब्धिस्थानम्—

महामहोपाध्यायः पण्डितरत्नं

लक्ष्मीपुरं श्रीनिवासाचार्यः,

चामराजपेट, मैसूरु.